

Gurumandal Series No. XX

# SKANDAPURANAM



*WITH*

## Fifth Volume

## (Uttarardham)

AVANTIKHANDA WITH REWAKHANDA

*BY*

## MAHARSHI VEDAVYAS

**PART V ( Latter Half )**

5, CLIVE ROW,
CALCUTTA-1

Vikram Samvat 2019 | First Edition 5000 | A. D. 1962

॥ श्रीगणेशायनमः ॥

# स्कन्दपुराणस्थपञ्चमावन्तीखण्डान्तर्गत-रेवाखण्डस्य (उत्तरार्द्धस्य) विषयानुक्रमणिका

—:*:—

समाप्ताचेयंस्कन्दपुराणान्तर्गतपञ्चमावन्तीखण्डस्य (उत्तरार्द्धस्य)

विषयानुक्रमणिका।

इतिविद्वज्जनकृपाभिलाषिणौ लक्ष्मणदुर्गाभिजन (लक्ष्मणगढ़-सीकरनिवासि)

ब्रह्मदत्तत्रिवेदि—नवलदुर्गवास्तव्य (नवलगढ़-जयपुरनिवासि)

रामनाथमिश्रदाधीचौ।

* श्रीगणेशायनमः *

॥ ॐ नमः श्रीपुरुषोत्तमाय ॥

ॐ नमोहरिहरहिरण्यगर्भेभ्यो नमोव्यासवाल्मीकिशुकपराशरेभ्यो नमोगुरुगोब्राह्मणेभ्यः ॥

# स्कन्दपुराणस्थावन्तीखण्डान्तर्गतरेवाखण्ड-माहात्म्यारम्भः

—:*:—

## प्रथमोऽध्यायः

### पुराणसंहितावर्णनम्

ॐ नमोनर्मदायै ॥

ॐ मज्जन्मातङ्गगण्डच्युतमदमदिरामोदमत्तालिमालं,
स्नानैः सिद्धाङ्गनानां कुचयुगविगलत्कुङ्कुमासङ्गपिङ्गम् ॥
सायं प्रातर्मुनीनां कुसुमचयसमाच्छन्नतीरस्थवृक्षं,
पायाद्वो नर्मदाम्भः करिमकरकराक्रान्तरंहस्तरङ्गम् ॥ १
उभयतटपुण्यतीर्था प्रक्षालितसकललोकदुरितौघा ।
देवमुनिमनुजवन्द्या हरतु सदा नर्मदा दुरितम् ॥ २ ॥
नाशयतु दुरितमखिलं भूतं भव्यं भवच्च भुवि भविनाम् ।
सकलपवित्रितवसुधा पुण्यजला नर्मदा भवति ॥ ३ ॥

तटपुलिनं शिवदेवा यस्या यतयोऽपि कामयन्ते वा ।
मुनिनिवहविहितसेवा शिवाय मम जायतां रेवा ॥ ४ ॥
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्
नैमिषेपुण्यनिलये नानाऋषिनिषेविते । शौनकःसत्रमासीनःसूतं पप्रच्छविस्तरात्
मन्येऽहं धर्मनैपुण्यं त्वयि सूत! सदार्चितम् ।
पुण्यामृतकथावक्ता व्यासशिष्यस्त्वमेव हि ॥ ७ ॥
अतस्त्वां परिपृच्छामि धर्मतीर्थाश्रयंकवे !। बहूनिसन्तितीर्थानिबहुशोमेश्रुतानिच
श्रुतादिव्यनदीब्राह्मीतथा विष्णुनदीमया । तृतीयानमयाक्कापिश्रुतारौद्रीसरिद्वरा
तां वेदगर्भां विख्यातां विबुधौघाभिवन्दिताम् ।
वद मे त्वं महाप्राज्ञ! तीर्थपूगपरिष्कृताम् ॥ १० ॥
कंदेशमाश्रितारेवाकथं श्रीरुद्रसंभवा । तत्संश्रितानि तीर्थानियानितानिवदस्वमे

सूत उवाच

साधु पृष्टं कुलपते! चरित्रं नर्मदाश्रितम् । चित्रं पवित्रं दोषघ्नं श्रुतमुक्तं च सत्तम
वेदोपवेदवेदाङ्गादीन्यभिव्यस्य पूरितः । अष्टादशपुराणानां वक्ता सत्यवतीसुतः
तं नमस्कृत्य वक्ष्यामि पुराणानि यथाक्रमम् ।
येषामभिव्याहरणादभिवृद्धिर्वृषायुषोः ॥ १४ ॥
श्रुतिः स्मृतिश्च विप्राणां चक्षुषी परिकीर्तिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥ १५ ॥
श्रुतिस्मृतिपुराणानि विदुषां लोचनत्रयम् ।
यस्त्रिभिर्नयनैः पश्येत्सोंऽशो माहेश्वरो मतः ॥ १६ ॥
आत्मनो वेदविद्या च ईश्वरेण विनिर्मिता ।
शौनकीया च पौराणी धर्मशास्त्रात्मिका च या ॥ १७ ॥
तिस्रोविद्याइमामुख्याः सर्वशास्त्रविनिर्णये ।
पुराणंपञ्चमोवेद इति ब्रह्मानुशासनम् ॥ १८ ॥

योनवेद पुराणंहिनस वेदात्रकिञ्चन । कतमःसहिधर्मोऽस्ति किंवाज्ञानंतथाविधम्
अन्यद्वा तत्किमत्राह पुराणे यन्नदृश्यते । वेदाः प्रतिष्ठिताः पूर्वं पुराणे नात्रसंशयः
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति । इतिहासपुराणैश्च कृतोऽयंनिश्चयः पुरा
आत्मापुराणंवेदानां पृथगङ्गानितानिषट् । यच्चदृष्टंहि वेदेषु तद्दृष्टंस्मृतिभिःकिल
उभाभ्यां यत्तु दृष्टंहि तत्पुराणेषुगीयते । पुराणं सर्वशास्त्राणां प्रथमंब्रह्मणःस्मृतम्

अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।
पुराणमेकमेवासीदस्मिन्कल्पान्तरे मुने !॥ २४ ॥

त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् । स्मृत्वाजगाद च मुनीन्प्रतिदेवश्चतुर्मुखः
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः । कालेनाग्रहणंदृष्ट्वा पुराणस्यततोमुनिः
व्यासरूपं विभुः कृत्वा संहरेत्स युगेयुगे । अष्टलक्षप्रमाणे तु द्वापरेद्वापरे सदा ॥
तदष्टादशधाकृत्वाभूर्लोकेऽस्मिन्प्रभाष्यते । अद्यापिदेवलोकेतच्छतकोटिप्रविस्तरम्
तदथात्र चतुर्लक्षं संक्षेपेण निवेशितम् । पुराणानि दशाष्टौ चसाम्प्रतं तदिहोच्यते

नामतस्तानि वक्ष्यामि-शृणु त्वमृषिसत्तम !॥ २६ ॥

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम्

ब्राह्मं पुराणं तत्राद्यं संहितायां विभूषितम् ।
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥ ३१ ॥

पाद्मं च पञ्चपञ्चाशत्सहस्राणि निगद्यते । तृतीयंवैष्णवंनामत्रयोविंशतिसङ्ख्यया

चतुर्थं वायुना प्रोक्तंवायवीयमिति स्मृतम् ।
शिवभक्तिसमायोगाच्छैवं तच्चापराख्यया ॥ ३३ ॥

चतुर्विंशतिसङ्ख्यातं सहस्राणितुशौनक !। चतुर्भिःपर्वभिःप्रोक्तंभविष्यंपञ्चमंतथा
चतुर्दशसहस्राणि तथा पञ्चशतानितत् । मार्कण्डं नवसाहस्रं षष्ठं तत्परिकीर्तितम्
आग्नेयं सप्तमं प्रोक्तं सहस्राणितुषोडश । अष्टमं नारदीयं तु प्रोक्तं वै पञ्चविंशतिः
नवमं भगवन्नाम भागद्वयविभूषितम् । तदष्टादशसाहस्रं प्रोच्यते ग्रन्थसंख्यया ॥

दशमं ब्रह्मवैवर्तं तावत्सङ्ख्यमिहोच्यते । लैङ्गमेकादशं ज्ञेयं तथैकादशसङ्ख्यया ॥
भागद्वयं विरचितं तल्लिङ्गमृषिपुङ्गव । चतुर्विंशतिसाहस्रं वाराहं द्वादशं विदुः ॥

विभक्तं सप्तभिः खण्डैः स्कान्दं भाग्यवताम्वर !।
तदेकाशीतिसाहस्रं सङ्ख्यया वै निरूपितम् ॥ ४० ॥

ततस्तु वामनंनाम चतुर्दशतमं स्मृतम् । संख्यया दशसाहस्रं प्रोक्तं कुलपते! पुरा॥
कौर्मं पञ्चदशं प्राहुर्भागद्वयविभूषितम् । दशसप्तसहस्राणिपुरा साङ्ख्यपते कलौ ॥
मात्स्यं मत्स्येनयत्प्रोक्तं मनवेषोडशंक्रमात् । तच्चतुर्दशसाहस्रंसङ्ख्ययावदताम्वर

गारुडं सप्तदशमं स्मृतं चैकोनविंशतिः ।
अष्टादशं तु ब्रह्माण्डं भागद्वय विभूषितम् ॥ ४४ ॥

तच्च द्वादशसाहस्रं शतमष्टसमन्वितम् । तथैवोपपुराणानि यानि चोक्तानिवेधसा
इदं ब्रह्मपुराणस्य सुलभं सौरमुत्तमम् । संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम्

आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ।
सनत्कुमारनाम्ना हि तद्विख्यातं महामुने !॥ ४७ ॥

द्वितीयं नारसिंहं च पुराणे पाद्मसंज्ञिते । शौकेयं हि तृतीयं तु पुराणे वैष्णवेमतम्
बार्हस्पत्यं चतुर्थं च वायव्यं संमतंसदा । दौर्वाससं पञ्चमं च स्मृतंभागवतेसदा
भविष्ये नारदोक्तं च सूरिभिःकथितं पुरा । कापिलंमानवं चैवतथैवोशनसेरितम्
ब्रह्माण्डं वारुणं चाथकालिकाद्वयमेव च । माहेश्वरंतथासाम्बंसौरंसर्वार्थसञ्चयम्
पाराशरं भागवतंकौर्मंचाष्टादशंक्रमात् । एतान्युपपुराणानिमयोक्तानियथाक्रमम्
पुराणसंहितामेतांयःपठेद्वाशृणोति च । सोऽनन्तपुण्यभागीस्यान्मृतोब्रह्मपुरंव्रजेत्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे पुराणसंहितावर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥

———

# द्वितीयोऽध्यायः

## रेवामाहात्म्यवर्णनम्

सूत उवाच

नर्मदायास्तु माहात्म्यं कृष्णद्वैपायनोऽब्रवीत् ।
तत्तेऽहं सम्प्रवक्ष्यामि यत्त्वया परिपृच्छितम् ॥ १ ॥
विस्तरं नर्मदायास्तु तीर्थानां मुनिसत्तम !।
कोऽन्यः शक्तोऽस्ति वै वक्तुमृते ब्रह्माणमीश्वरम् ॥ २ ॥

एतमेव पुरा प्रश्नं पृष्टवाञ्जनमेजयः । वैशम्पायनसञ्ज्ञन्तु शिष्यं द्वैपायनस्य ह ॥ ३

रेवातीर्थाश्रितं पुण्यं तत्ते वक्ष्यामि शौनक! ।
पुरा पारीक्षितो राजा यज्ञदीक्षासु दीक्षितः ॥ ४ ॥

सम्भृते तु हविर्द्रव्ये वर्तमानेषु कर्मसु । आसीनेषु द्विजाग्र्येषु हूयमाने हुताशने
वर्तमानासु सर्वत्र तथा धर्मकथासु च । श्रूयमाणे तथा शब्दे जनैरुक्ते त्वहर्निशम्
यज्ञभूमौ कुलपतेर्दीयतांभुज्यतामिति । विविधांश्च विनोदान्वैकुर्वाणेषु विनोदिषु
एवम्विधे वर्तमाने यज्ञे स्वर्गसदः समे । वैशंपायनमासीनं पप्रच्छ जनमेजयः ॥८॥

जनमेजय उवाच

द्वैपायनप्रसादेनज्ञानवानसिमेमतः । वैशंपायनतस्मात्त्वां पृच्छामिऋषिसन्निधौ

ब्रूहि मे त्वं पुरावृत्तं पितृणां तीर्थसेवनम् ।
चिरं नानाविधान्क्लेशान्प्राप्तास्तइतिमे श्रुतम् ॥ १० ॥

कथं द्यूतजिताःपार्थाममपूर्वपितामहाः । आसमुद्रां महींविप्रभ्रमन्तस्तीर्थलोभतः
केन ते सहितास्तात भूमिभागाननेकशः । चेरुः कथयतत्सर्वंसर्वज्ञोऽसि मतोमम

वैशम्पायन उवाच

कथयिष्यामिभूनाथ! यत्पृष्टंतुत्वयाऽनघ । नमस्कृत्यविरूपाक्षंवेदव्यासंमहाकविम्

पितामहास्तु तेपञ्चपाण्डवाःसहकृष्णया । उषित्वाब्राह्मणैःसार्द्धंकाम्यकेवनउत्तमे
प्रधानोद्दालके तत्र कश्यपोऽथमहामतिः । विभाण्डकश्चराजेन्द्र गुरुश्चैवमहामुनिः
पुलस्त्यो लोमशश्चैव तथाऽन्ये पुत्रपौत्रिणः ।
स्नात्वा निःशेषतीर्थेषु गतास्ते विन्ध्यपर्वतम् ॥ १६ ॥
ते च तत्राश्रमं पुण्यं सर्ववृक्षैः समाकुलम् । चम्पकैः कर्णकारैश्च पुन्नागैर्नागकेसरैः
वकुलैः कोविदारैश्च दाडिमैरुपशोभितम् । पुष्पितैरर्जुनैश्चैव बिल्वपाटलकेतकैः
कदम्बाम्रमधूकैश्च निम्बजम्बीरतिन्दुकैः । नालिकेरैः कपित्थैश्च खर्जूरपनसैस्तथा
नानाद्रुमलताकीर्णं नानावल्लीभिरावृतम् । सपुष्पं फलितं कान्तं वनं चैत्ररथंयथा
जलाश्रयैस्तु विपुलैः पद्मिनीखण्डमण्डितम् ।
सितोत्पलैश्च सञ्छन्नं नीलपीतैः सितारुणैः ॥ २१ ॥
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
आडीकाकवलाकाभिः सेवितं कोकिलादिभिः २२ ॥
सिंहैर्व्याघ्रैर्वराहैश्च गजैश्चैव महोत्कटैः । महिषैश्चमहाकायैः कुरङ्गैश्चित्रकैः शशैः
गण्डकैश्चैव खड्गैश्च गोमायुसुरभीयुतम् । सारंगैर्मल्लकैश्चैव द्विपदैश्च चतुष्पदैः
तथा च कोकिलाकीर्णं मनः कान्तं सुशोभितम् ।
जीवंजीवकसङ्घैश्च नानापक्षिसमायुतम् ॥ २५ ॥
दुःखशोकविनिर्मुक्तं सत्वोत्कटमनोरमम् ।
क्षुत्तृषारहितं कान्तं सर्वव्याधिविवर्जितम् ॥ २६ ॥
सिंहीस्तनं पिबन्त्यत्र कुरङ्गाः स्नेहसंयुतम् । मार्जारमूषकौचोभाववलेहतउन्मुखौ
पञ्चास्याःपोतकेभाश्चभोगिनस्तुकलापिनः।दृष्ट्वातद्विपिनंरम्यंप्रविष्टाःपाण्डुनन्दनाः
मार्कण्डंदृष्टवांस्तत्रतरुणादित्यसन्निभम् ।ऋषिभिःसेव्यमानंतुनानाशास्त्रविशारदैः
कुलीनैःसत्वसम्पन्नैःशौचाचारसमन्वितैः । धीसङ्गतैःक्षमायुक्तैस्त्रिसंध्यंजपतत्परैः
ऋग्यजुःसामविहितैर्मन्त्रैर्होमपरायणैः ।
केचित्पञ्चाग्निमध्यस्थाः केचिदेकान्तसंस्थिताः ॥ ३१ ॥

ऊर्द्ध्वबाहुनिरालंबा आदित्यभ्रमणाः परे। सायंप्रातर्भुजश्चान्येएकाहारास्थापरे
द्वादशाहात्तथाचान्येअन्येमासार्द्धभोजनाः। दर्शेदर्शेतथाचान्येअन्येशैवालभोजनाः
पिण्याकमपरेऽभुञ्जन्केचित्पालाशभोजनाः।अपरेनियताहारावायुभक्ष्याम्बुभोजनाः

एवम्भूतैस्तथा वृद्धैः सेव्यते मुनिपुङ्गवैः।
ततो धर्मसुतः श्रीमानाश्रमं तं प्रविश्य सः॥ ३५॥

दृष्ट्वा मुनिवरं शान्तं ध्यायमानं परं पदम्। प्रादक्षिण्येनसहसादण्डवत्पतितोऽग्रतः
भक्त्यानुपतितंदृष्ट्वा चिरादादायलोचनम्। कोभवानित्युवाचेदंधर्मंधीमानपृच्छत
तस्य तद्वचनं श्रुत्वा दारकस्तत्समीपगः। आहाऽयंधर्मराजस्तेदर्शनार्थं समागतः

तच्छ्रुत्वा दारकेणोक्तं वचनं प्राह सादरः।
एह्येहि वत्सवत्सेति किञ्चित्स्थानाच्चलन्मुनिः।
तं तु स्नेहादुपाघ्राय आसने उपवेशयत्॥ ३६॥

उपविष्टे सभायांतु पूजांकृत्वायथाविधि। वन्यैर्धान्यैःफलैर्मूलै रसैश्चैवपृथग्विधैः
पाण्डवाब्राह्मणैःसार्द्धंयथायोग्यम्प्रपूजिताः। मुहूर्त्तादथविश्रम्यधर्मपुत्रोयुधिष्ठिरः

पृच्छति स्म मुनिश्रेष्ठं कौतूहलसमन्वितम्।
भगवन्सर्वलोकानां दीर्घायुस्त्वं मतो मम॥ ४२॥

सप्तकल्पानशेषेण कथयस्वममाऽनघ। कल्पक्षयेऽपि लोकस्यस्थावरस्येतरस्य च
न विनष्टोऽसि विप्रेन्द्र! कथंवाकेनहेतुना। गङ्गाद्याःसरितःसर्वाःसमुद्रांताश्चयामुने

तासां मध्ये स्थिताः काः स्वित्काश्चैव प्रलयंगताः।
का नु पुण्यजला नित्यं का नु न क्षयमागता॥ ४५॥

एतत्कथयमेतातप्रसन्नेनान्तरात्मना। श्रोतुमिच्छाम्यशेषेणऋषिभिःसहबान्धवैः

श्रीमार्कण्डेय उवाच

साधु साधु महाप्राज्ञ! धर्मपुत्रयुधिष्ठिर!। कथयामियथान्यायंयत्पृच्छसिममानघ
सर्वपापहरं पुण्यं पुराणं रुद्रभाषितम्। यःशृणोतिनरोभक्त्या तस्यपुण्यफलंशृणु
अश्वमेधसहस्रेण वाजपेयशतेन च। तत्फलंसमवाप्नोति राजन्नास्त्यत्र संशयः॥

ब्रह्मघ्नश्च सुरापी च स्तेयी गोघ्नश्च यो नरः । मुच्यतेसर्वपापेभ्यो रुद्रस्यवचनं यथा
गङ्गा तु सरितां श्रेष्ठा तथा चैव सरस्वती ।
कावेरी देविका चैव सिन्धुः सालकुटी तथा ॥ ५१ ॥
सरयूः शतरुद्रा च मही चर्मिलया सह । गोदावरी तथा पुण्या तथैव यमुना नदी
पयोष्णीच शतद्रुश्च तथाधर्मनदीशुभा । एताश्चान्याश्चसरितःसर्वपापहराःस्मृताः
किं तु ते कारणं तात! वक्ष्यामि नृपसत्तम !।
समुद्राः सरितः सर्वाः कल्पे कल्पे क्षयं गताः ॥ ५४ ॥
सप्तकल्पक्षये क्षीणे न मृता तेन नर्मदा । नर्मदैकैव राजेन्द्र! परंतिष्ठेत्सरिद्वरा ॥५५
तोयपूर्णा महाभाग! मुनिसङ्घैरभिष्टुता ।
गङ्गाद्याः सरितश्चान्याः कल्पेकल्पे क्षयं गताः ॥ ५६ ॥
एषा देवी पुरा दृष्टा तेन वक्ष्यामि तेऽनघ ॥ ५७ ॥
आश्चर्यभूता राजेन्द्र! त्रिषु लोकेषु विश्रुता ॥ ५८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे रेवामाहात्म्यवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥

———

# तृतीयोऽध्यायः

## मार्कण्डेयकृतपोताधरोहणवर्णनम्

### युधिष्ठिर उवाच

सप्तकल्पक्षया घोरास्त्वयादृष्टा महामुने !। न चापीहास्तिभगवन्दीर्घायुरिहकश्चन
त्वयाद्यैकार्णवे सुप्तः पद्मनाभः सुरारिहा । दृष्टः सहस्रचरणः सहस्रनयनोदरः ॥
त्वं किलानुग्रहात्तस्य दह्यमाने चराचरे । न क्षयं समनुप्राप्तो वरदानान्महात्मनः ॥
किं त्वयाश्चर्यभूतं हि दृष्टश्च भ्रमताऽनघ । एतदाचक्ष्व भगवन्परं कौतूहलं हि मे ॥

सम्प्राप्ते च महाघोरे युगस्यान्ते महाक्षये । अनावृष्टिहते लोके पुरावर्षशताधिके ॥
औषधीनां क्षये घोरे देवदानववर्जिते । निर्वीर्ये निर्वषट्कारे कलिनादूषितेभृशम्
सरित्सरस्तडागेषु पल्वलोपवनेषु च । संशुष्केषु तदा ब्रह्मन्निराकारे युगक्षये ॥७॥
जनं प्राप्ते महर्लोके ब्रह्मक्षत्रविशादयः । ऋषयश्च महात्मानो दिव्यतेजःसमन्विताः

स्थितानि कानि भूतानि गतान्येव महामुने !।
एतत्सर्वं महाभाग! कथयस्व पृथक्पृथक् ॥ ६ ॥
भूतानि कानि विप्रेन्द्र! कथं सिद्धिमवाप्नुयात् ।
ब्रह्मविष्णिवन्द्ररुद्राणां काले प्राप्ते सुदारुणे ॥ १० ॥

एवमुक्तस्ततःसोऽथ धर्मराजेनधीमता । मार्कण्डः प्रत्युवाचेदमृषिसङ्घैःसमावृतः

श्रीमार्कण्डेय उवाच

शृण्वन्तु ऋषयःसर्वे त्वया सह नरेश्वर !। महत्पुराणं पूर्वोक्तं शम्भुना वायुदेवते॥

वायोः सकाशात्स्कन्देन श्रुतमेतत्पुरातनम् ।
वसिष्ठः श्रुतवांस्तस्मात्पराशरस्ततः परम् ॥ १३ ॥

तस्माच्चजातूकर्ण्येनतस्माच्चैवमहर्षिभिः । एवंपरम्पराप्रोक्तंशतसङ्ख्यैर्द्विजोत्तमैः

संहिता शतसाहस्री पुरोक्ता शम्भुना किल ।
आलोड्य सर्वशास्त्राणि वेदार्थं तत्वतः पुराः ॥ १५ ॥

युगरूपेण सा पश्चाच्चतुर्द्धा विनियोजिता । मन्दप्रज्ञानुसारेण नराणांतु महर्षिभिः
आराध्य पशुभर्त्तारं मयापूर्वं महेश्वरम् । पुराणं श्रुतमेतद्धि तत्ते वक्ष्याम्यशेषतः
यच्छ्रुत्वा मुच्यते जन्तुः सर्वपापैर्नरेश्वर !। मानसैः कर्मजैश्चैव सप्तजन्मसुसञ्चितैः
सप्तकल्पक्षयाघोरा मया दृष्टाः पुनः पुनः । प्रसादाद्देवदेवस्य विष्णोश्च परमेष्ठिनः

द्वादशादित्यनिर्दग्धे जगत्येकार्णवीकृते ।
श्रान्तोऽहं विभ्रमंस्तत्र तरन्बाहुभिरर्णवम् ॥ २० ॥

अथाहं सलिले राजन्नादित्यसमरूपिणम् । पुरा पुरुषमद्राक्षमनादिनिधनं प्रभुम् ॥
शृङ्गं चैवाद्रिराजस्यभासयन्तंदिशोदश । द्वितीयोऽन्योमनुर्दृष्टःपुत्रपौत्रसमन्वितः

अगाधे भ्रमते सोऽपि तमोभूते महार्णवे । अविश्रमन्मुहूर्त्तं तु चक्रारूढ इव भ्रमन्
अथाहं भयादुद्विग्नस्तरन्बाहुभिरर्णवम् । तत्रस्थोहं महामत्स्यमपश्यं मदसंयुतम् ॥

ततोऽब्रवीत्स मां दृष्ट्वा एह्येहीति च भारत !।
परं प्रधानः सर्वेषां मत्स्यरूपो महेश्वरः ॥ २५ ॥

ततोऽहं त्वरया गत्वा तन्मुखे मनुजेश्वर !। सुश्रान्तो विगतज्ञानः परंनिर्वेदमागतः
ततोऽद्राक्षं समुद्रान्ते महदावर्त्तसङ्कुलाम् । उद्यत्तरङ्गसलिलां फेनपुञ्जाट्टहासिनीम्

नदीं कामगमां पुण्यां झषमीनसमाकुलाम् ।
नद्यास्तस्यास्तु मध्यस्था प्रमदा कामरूपिणी ॥ २८ ॥
नीलोत्पलदलश्यामा महत्प्रक्षोभवाहिनी ।
दिव्यहाटकचित्राङ्गी कनकोज्ज्वलशोभिता ॥ २६ ॥
द्वाभ्यां संगृह्य जानुभ्यां महत्पोतं व्यवस्थिता ।
तां मनुः प्रत्युवाचेदं का त्वं दिव्यवराङ्गने !॥ ३० ॥

तिष्ठसे केन कार्येण त्वमत्र सुरसुन्दरि !। सुरासुरगणेनष्टे भ्रमसे लीलयाऽर्णवे ॥
सरितःसागराःशैलाः क्षयंप्राप्ताह्यनेकशः । त्वमेकातुकथंसाध्वितिष्ठसेकारणंमहत्

श्रोतुमिच्छाम्यहं देवि! कथयस्व ह्यशेषतः ॥ ३२ ॥

अबलोवाच

ईश्वराङ्गसमुद्भूता ह्यमृतानाम विश्रुता । सरित्पापहरापुण्या मामाश्रित्यभयंकुतः

साऽहं पोतमिमं तुभ्यं गृहीत्वा ह्यागता द्विज !।
न ह्यस्य पोतस्य क्षयो यत्र तिष्ठति शङ्करः ॥ ३४ ॥

तस्यास्तद्वचनं श्रुत्वा विस्मयोत्फुल्ललोचनः । मनुना सहराजेन्द्रपोतारूढोह्यहंतदा
कृताञ्जलिपुटो भूत्वा प्रणम्य शिरसाविभुम् । व्यापिनंपरमेशानमस्तौषमभयप्रदम्
सद्योजाताय देवाय वामदेवाय वै नमः । भवेभवे नमस्तुभ्यंभक्तिगम्याय ते नमः
भूर्भुवाय नमस्तुभ्यं रामज्येष्ठाय वैनमः । नमस्ते भद्रकालाय कलिरूपाय वै नमः
अचिन्त्याव्यक्तरूपाय महादेवाय धामने । विद्महे देवदेवाय तन्नो रुद्र नमोनमः ॥

जगत्सृष्टिविनाशानां कारणाय नमोनमः ।
एवं स्तुतो महादेवः पूर्वं सृष्ट्या मयाऽनघ ॥ ४० ॥
प्रसन्नोमाऽवदत्पश्चाद्वरं वरय सुव्रत !॥ ४१ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये मार्कण्डेयधर्मराजसम्वादे कल्पक्षये मार्कण्डेय कृतपोतार्धारोहणवृत्तान्तवर्णनंनाम तृतीयोऽध्यायः ॥ ३ ॥

———

# चतुर्थोऽध्यायः

## नर्मदापञ्चदशनामवर्णनम्

श्रीमार्कण्डेय उवाच

ततोऽर्णवात्समुत्तीर्य्य त्रिकूटशिखरे स्थितम् ।
महाकनकवर्णाभे नानावर्णशिलाचिते ॥ १ ॥

महाशृङ्गे समासीनं रुद्रकोटिसमन्वितम् । महादेवं महात्मानमीशानमजमव्ययम् ॥
सर्वभूतमयं तात! मनुना सह सुव्रत !। भूयो ववन्दे चरणौ सर्वदेवनमस्कृतौ ॥ ३॥
तत्काले युगसाहस्रं सह रुद्रेणमानद !। तस्मिन्नेकार्णवे घोरेस्थितोऽहं कुरुनन्दन

युधिष्ठिर उवाच

एतच्छ्रुत्वा तु मे तात परं कौतूहलंहृदि । जातं तत्कथयस्वेतिशृण्वतःसहबान्धवैः
कासापद्मपलाशाक्षी तमोभूतेमहार्णवे । योगिवद्भ्रमतेनित्यंरुद्रजांस्वांचयाब्रवीत्

श्रीमार्कण्डेय उवाच

एतमेव मया प्रश्नं पुरापृष्टो मनुः स्वयम् । तदेव तेऽद्यवक्ष्यामि अबलायाःसमुद्भवम्
व्यतीतायां निशायां तु ब्रह्मणः परमेष्ठिनः । ततःप्रभाते विमलेसृज्यमानेषु जन्तुषु
मनुं प्रणम्य शिरसा पृच्छाम्येतद्युधिष्ठिर !।

केयं पद्मपलाशाक्षी श्यामा चन्द्रनिभानना ॥ ९ ॥
एकार्णवे भ्रमत्येका रुद्रजाऽस्मीतिवादिनी ।
सावित्री वेदमाता च ह्यथवा सा सरस्वती ॥ १० ॥
मन्दाकिनी सरिच्छ्रेष्ठा लक्ष्मीर्वा किमथो उमा ।
कालरात्रिर्भवेत्साक्षात्प्रकृतिर्वा सुखोचिता ॥ ११ ॥

एतदाचक्ष्व भगवन्का सा ह्यमृतसम्भवा । चरत्येकार्णवे घोरे प्रनष्टोरगराक्षसे ॥

मनुरुवाच

शृणुवत्सयथान्यायमस्यावक्ष्यामिसम्भवम् । ययारुद्रसमुद्भूतायाचेयंवरवर्णिनी
पुरा शिवः शान्ततनुश्चचार विपुलं तपः । हितार्थं सर्वलोकानामुमया सह शङ्करः
ऋक्षशैलं समारुह्य तपस्तेपे सुदारुणम् । अदृश्यः सर्वभूतानां सर्वभूतात्मको वशी
तपतस्तस्य देवस्य स्वेदः समभवत्किल । तंगिरिंप्लावयामास सस्वेदोरुद्रसंभवः

तस्मादासीत्समुद्भूता महापुण्या सरिद्वरा ।
या सा त्वयाऽर्णवे दृष्टा पद्मपत्रायतेक्षणा ॥ १७ ॥

स्त्रीरूपं समवस्थाय रुद्रमाराधयत्पुरा । आद्ये कृतयुगे तस्मिन्समानामयुतं नृप
ततस्तुष्टो महादेव उमया सह शङ्करः । ब्रूहि त्वं तु महाभागे यत्ते मनसि वर्त्तते

सरिदुवाच

प्रलये समनुप्राप्ते नष्टे स्थावरजङ्गमे । प्रसादात्तव देवेश अक्षयाहं भवे प्रभो !॥ २०॥
सरित्सु सागरेष्वेव पर्वतेषु क्षयिष्वपि । तव प्रसादाद्देवेश!पुण्याक्षय्याभवे प्रभो!

पापोपपातकैर्युक्ता महापातकिनोऽपि ये ।
मुच्यन्ते सर्वपापेभ्यो भक्त्या स्नात्वा तु शङ्कर !॥ २२ ॥

उत्तरे जाह्नवी देवे महापातकनाशिनी । भवामि दक्षिणेमार्गेयद्येवं सुरपूजिता ॥
स्वर्गादागम्यगङ्गेतियथाख्याताक्षितौविभो । तथादक्षिणगङ्गेतिभवेयंत्रिदशेश्वर

पृथिव्यां सर्वतीर्थेषु स्नात्वा यल्लभते फलम् ।
तत्फलं लभते मर्त्यो भक्त्या स्नात्वा महेश्वर !॥ २५ ॥

ब्रह्महत्यादिकंपापंयदास्तेसञ्चितंक्वचित् । मासमात्रेण तद्देवक्षयंयात्ववगाहनात्
यत्फलं सर्ववेदेषु सर्वयज्ञेषु शङ्कर । अवगाहेन तत्सर्वं भवत्विति मतिर्मम ॥ २७ ॥
सर्वदानोपवासेषु सर्वतीर्थावगाहने । तत्फलं मम तोयेन जायतामिति शङ्कर !॥
मम तीरे नरा ये तु अर्च्चयन्तिमहेश्वरम् । ते गतास्तत्र लोकं स्युरेतदेवभवेच्छिव
मम कूले महेशान उमया सह दैवतैः । वस नित्यं जगन्नाथ एष एव वरो मम ॥

सुकर्मा वा विकर्मा वा शान्तो दान्तो जितेन्द्रियः ।
मृतो जन्तुर्मम जले गच्छतादमरावतीम् ॥ ३१ ॥

त्रिषु लोकेषु विख्याता महापातकनाशिनी । भवामि देवदेवेश प्रसन्नो यदिमन्यसे
एतांश्चान्यान्वरान्दिव्यान्प्रार्थितो नृपसत्तम । नर्मदया ततः प्राह प्रसन्नोवृषवाहनः

श्रीमहेश उवाच

एवंभवतुकल्याणि यत्त्वयोक्तमनिन्दिते । नान्यावरार्हालोकेषुमुक्त्वात्वांकमलेक्षणे
यदैव मम देहात्त्वं समुद्भूता वरानने !। तदैव सर्वपापानां मोचिनी त्वं न संशयः
कल्पक्षयकरे काले काले घोरे विशेषतः । उत्तरं कूलमाश्रित्य निवसन्ति चयेनराः
अपिकीटपतंगाश्च वृक्षगुल्मलतादयः । आदेहपतनाद्देवि!तेऽपियास्यन्तिसद्गतिम्

दक्षिणं कूलमाश्रित्य ये द्विजा धर्मवत्सलाः ।
आमृत्योर्निवसिष्यन्ति ते गताः पितृमन्दिरे ॥ ३८ ॥
अहं हि तव वाक्येन कस्मिंश्चित्कारणान्तरे ।
त्वत्तीरे निवसिष्यामि सदैव ह्य मया समम् ॥ ३६ ॥

एवं देवि! महादेवि! एवमेव न संशयः । ब्रह्मेन्द्रचन्द्रवरुणैः साध्यैश्च सह विष्णुना
उत्तरेदेवि!ते कूलेवसिष्यन्तिममाज्ञया । दक्षिणे पितृभिःसार्द्धं तथाऽन्येसुरसुन्दरि

वसिष्यन्ति मया सार्द्धमेष ते वर उत्तमः ।
गच्छ गच्छ महाभागे! मर्त्यान्पापाद्विमोचय ॥ ४२ ॥

सहिता ऋषिसंघैश्च तथासिद्धसुरासुरैः । एवमुक्त्वा महादेवउमयासहितोविभुः
वन्द्यमानोऽथ मनुना मया चादर्शनंगतः । तेन चैषा महापुण्यामहापातकनाशिनी

कथिता पृच्छ्यते या ते मा ते भवतु विस्मयः ।
एषा गङ्गा महापुण्या त्रिषु लोकेषु विश्रुता ॥ ४९ ॥
दशभिःपञ्चभिः स्रोतैःप्लावयन्ती दिशो दश । शोणोमहानदश्चैवनर्मदासुरसाकृता
मन्दाकिनी दशार्णा च चित्रकूटा तथैवच । तमसाविदशा चैवकरभायमुनातथा
चित्रोत्पलाविपाशाच्च रञ्जनावालुवाहिनी । ऋक्षपादप्रसूतास्ताःसर्वारुद्रसंभवाः
सर्वपापहराः पुण्याः सर्वमङ्गलदाःशिवाः । इत्येतैर्नामभिर्दिव्यैःस्तूयतेवेदपारगैः
पुराणज्ञैर्महाभागैराज्यपैः सोमपैस्तथा । इत्येतत्सर्वमाख्यातं महाभाग्यं नरोत्तम
मनुनोक्तं पुरामह्यममृतायाः समुद्भवम् । पुण्यं पवित्रमतुलं रुद्रोद्गीतमिदं शुभम् ॥
ये नराः कीर्त्तयिष्यन्ति भक्त्या शृण्वन्ति येऽपि च ।
प्रातरुत्थाय नामानि दश पञ्च च भारत !॥ ५२ ॥
ते नराः सकलंपुण्यंलभिष्यन्त्यवगाहजम् । विमानेनार्कवर्णेनघण्टाशतनिनादिना
त्यक्त्वा मानुष्यकं भावं यास्यन्ति परमां गतिम् ॥ ५४ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदापञ्चदशनामवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्याय.

### नर्मदानामनिरुक्तिवर्णनम्

युधिष्ठिर उवाच

आश्चर्यमेतदखिलं कथितं भो द्विजोत्तम । विस्मयं परमापन्ना ऋषिसङ्घामयासह
अहो भगवतीपुण्या नर्मदेयमयोनिजा । रुद्रदेहाद्विनिष्क्रान्ता महापापक्षयङ्करी ॥
सप्तकल्पक्षये प्राप्ते त्वयेयं सह सुव्रत !। न मृता च महाभागाकिमतःपुण्यमुत्तमम्
के तेकल्पाः समुद्दिष्टाः सप्त कल्पक्षयंकराः । न मृताचेदियं देवी त्वंचैवऋषिपुङ्गव

अपक्षिगणसङ्घाते जगत्येकार्णवीकृते । कीदृग्रूपः समभवन्महादेवो युगक्षये ॥ ५ ॥
कथं संहरते विश्वं कथं चाऽस्ते महार्णवे । कथं चसृजते विश्वं कथंधारयतेप्रजाः
कीदृग्रूपा भवेद्देवीसरिदेकार्णवीकृते । किमर्थं नर्मदा प्रोक्ता रेवेति चकथं स्मृता
अञ्जनेति किमर्थं वा किमर्थं सुरसेति च ।
मन्दाकिनी किमर्थं च शोणश्चेति कथं भवेत् ॥ ८ ॥
त्रिकूटेति किमर्थं वा किमर्थं वालुवाहिनी ।
कोटिकोट्या हि तीर्थानां प्रविष्टा या महार्णवम् ॥ ९ ॥
कियत्यः सरितां कोट्यो नर्मदांसमुपासते । यज्ञोपवीतैर्ऋषिभिर्देवताभिस्तथैवच
विभक्तेयं किमर्थं च श्रूयतेमुनिसत्तम । वैष्णवीति पुराणज्ञैः किमर्थमिह चोच्यते
केषु स्थानेषु तीर्थेषु पूजनीया सरिद्वरा । तीर्थानिच पृथग्ब्रूहि यत्रसन्निहितोहरः
यत्प्रमाणा च सा देवी या रुद्रेण विनिर्मिता ।
कीदृशानि च कर्माणि रुद्रेण कथितानि ते ॥ १३ ॥
कथंम्लेच्छसमाकीर्णो देशोऽयंद्विजसत्तम । एतदाचक्ष्व मांब्रह्मन्मार्कण्डेय महामते

श्रीमार्कण्डेय उवाच

शृण्वन्तु ऋषयः सर्वे त्वं च तातयुधिष्ठिर । पुराणंनर्मदायां तु कथितंचत्रिशूलिना
वायोः सकाशाच्च मया तेनापि च महेश्वरात् ।
अशक्यत्वान्मनुष्याणां सङ्क्षिप्तमृषिभिः पुरा ॥ १६ ॥
मायूरं प्रथमं तातकौर्म्यं च तदनन्तरम् । पुरं तथा कौशिकं च मात्स्यंद्विरदमेवच
वाराहं यन्मयादृष्टं वैष्णवं चाष्टमंपरम् । न्यग्रोधाख्यमतश्चासीदाकांक्षंपुनरुत्तमम्
पद्मं च तामसं चैव संवर्त्तोद्वर्त्तमेव च । महाप्रालयमित्याहुः पुराणे वेदचिन्तकाः
एतत्संक्षेपतः सर्वं संक्षिप्तं तैर्महात्मभिः । विभक्तं च चतुर्भागैर्ब्रह्माद्यैश्च महर्षिभिः
तदहं संप्रवक्ष्यामिपुराणार्थविशारद ! । सप्त कल्पामहाघोरायैरियं न मृता सरित्
आजङ्गमं तमोभूतमप्रज्ञातमलक्षणम् । नष्टचन्द्रार्ककिरणमासीद्भूतविवर्जितम् ॥
तमसोऽन्तेमहानाम्नापुरुषःसजगद्गुरुः । चचारतस्मिन्नेकाकीव्यक्ताव्यक्तःसनातनः

स चोङ्कारमयोऽतीतो गायत्रीमसृजद्द्विजः ।
स तया सार्द्धमीशानश्चिक्रीड पुरुषो विराट् ॥ २४ ॥
स्वदेहादसृजद्विश्वं पञ्चभूतात्मसंज्ञितम् । क्रीडन्समसृजद्विश्वं पञ्चभूतात्मसंज्ञितम्
क्रीडन्सृजद्विराट्सञ्ज्ञः सबीजं च हिरण्मयम् ।
तच्चाण्डमभवद्दिव्यं द्वादशादित्यसन्निभम् ॥ २६ ॥
तद्भित्वा पुरुषो जज्ञे चतुर्वक्त्रः पितामहः । सोऽसृजद्विश्वमेवंतु सदेवासुरमानुषम्
सतिर्यक्पशुपक्षीकं स्वेदाण्डजजरायुजम् । एतदण्डं पुराणेषु प्रथमं परिकीर्तितम्
पूर्वकल्पे नृपश्रेष्ठ क्रीडन्त्या परमेष्ठिना । उमया सह रुद्रस्य क्रीडतश्चार्णवीकृतः
हर्षाज्जज्ञे शुभा कन्या उमायाः स्वेदसम्भवा ।
शर्वस्योरःस्थलाज्जज्ञे उमा कुचविमर्द्दनात् ॥ ३० ॥
स्वेदाद्विजज्ञेमहती कन्याराजीवलोचना । द्वितीयः संभवोयस्यारुद्रदेहाद्य धिष्ठिर
सा परिभ्रमतेलोकान्सदेवासुरमानवान् । त्रैलोक्योन्मादजननीरूपेणाऽप्रतिमातदा
तां दृष्ट्वा देवदैत्येन्द्रा मोहिता लभते कथम् ।
मृगयन्ति स्म तां कन्यामितश्चेतश्च भारत !॥ ३२ ॥
हावभावविलासैश्चमोहयत्यखिलंजगत् । भ्रमतेदिव्यरूपासाविद्य त्सौदामिनीयथा
मेघमध्ये स्थिता भाभिः सर्वयोषिदनुत्तमा । ततो रुद्रं सुराःसर्वेदैत्याश्चसहदानवैः
वरयन्ति स्म तां कन्यां कामेनाऽऽकुलिता भृशम् ।
ततोऽब्रवीन्महादेवो देवदानवयोर्द्वयोः ॥ ३६ ॥
बलेन तेजसा चैव ह्यधिको यो भविष्यति ।
स इमां प्राप्स्यते कन्यां नान्यथा वै सुरोत्तमाः !॥ ३७ ॥
ततो देवासुराःसर्वे कन्यां वै समुपागमन् । अहमेनांग्रहीष्यामि अहमेनामितिब्रुवन्
पश्यतामेवसर्वेषां सा कन्याऽन्तरधीयत । पुनस्तांददृशुःसर्वेयोजनान्तरधिष्ठिताम्
जग्मुस्ते त्वरिताः सर्वे यत्र सासमदृश्यत । त्रिभिश्चतुर्भिश्चतथायोजनैर्दशभिः पुन
धिष्ठितां समपश्यंस्ते सर्वे मातङ्गगामिनीम् ।

योजनानां शतैर्भूयः सहस्रैश्चाप्यधिष्ठिताम् ॥ ४१ ॥
तथा शतसहस्रेण लघुत्वात्समदृश्यत । अग्रतः पृष्ठतश्चैव दिशासु विदिशासु च
तां पश्यन्ति वरारोहामेकधाबहुधा पुनः । दिव्यवर्षसहस्रं तु भ्रामितास्तेतयापुरा
न चावाप्ता तु सा कन्या महादेवाङ्गसम्भवा ।
सहोमया ततो देवो जहासोच्चैः पुनः पुनः ॥ ४४ ॥
गणास्तालकसम्पातैर्नृत्यन्ति च मुदान्विताः ।
अकस्माद् दृश्यते कन्या शङ्करस्य समीपगा ॥ ४५ ॥
तां दृष्ट्वा विस्मयापन्ना देवा यान्ति पराङ्मुखाः ।
तस्याश्चक्रे ततो नाम स्वयमेव पिनाकधृक् ॥ ४६ ॥
नर्म चैभ्योददेयस्मात्तत्कृतैश्चेष्टितैःपृथक् । भविष्यसिवरारोहेसरिच्छ्रेष्ठातुनर्म्मदा
स्वरूपमास्थितोदेवः प्रापहास्यंयतोभुवि । नर्मदातेनचोक्तेयंसुशीतलजला शिवा
सप्तकल्पक्षये जाते यदुक्तं शम्भुना पुरा । न मृतातेनराजेन्द्र नर्मदाख्यातिमागता
ततस्तामददात्कन्यां शीलवतीं सुशोभनाम् । महार्णवायदेवेशः सर्वभूतपतिः प्रभुः
ततः सा ऋक्षशैलेन्द्रात्फेनपुञ्जाट्टहासिनी । विवेश नर्मदादेवी समुद्रंसरितांपतिम्
एवं ब्राह्मे पुरा कल्पे समुद्भूतेयमीश्वरात् ।
मात्स्ये कल्पे मया दृष्टा समाख्याता मया शृणु ॥ ५२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्यनर्मदानामनिरुक्तिवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

# षष्ठोऽध्यायः

## सहेतुकं रेवानाममहत्त्वंमयूरकल्पवर्णनम्

मार्कण्डेय उवाच

पुनर्युगान्ते सम्प्राप्ते तृतीये नृपसत्तम !। द्वादशार्कवपुर्भूत्वा भगवान्नीललोहितः
सप्तद्वीप समुद्रान्तांसशैलवनकाननाम् । निर्दग्धांतुमहीं कृत्स्नांकालोभूत्वामहेश्वरः
ततो महाघनो भूत्वा प्लावयामास वारिणा ।
कृष्णं कृष्णवपुस्त्वेनां विद्युचन्द्रायुधाङ्किताम् ॥ ३ ॥
प्लावयित्वा जगत्सर्व्वं तस्मिन्नेकार्णवीकृते ।
सुष्वाप विमले तोये जगत्सङ्क्षिप्य मायया ॥ ४ ॥
ततोऽहंभ्रममाणस्तु तमोभूते महार्णवे । दिव्यं वर्षसहस्रं तु वायुभूते महेश्वरे ॥ ५
ओंकृत्वा देवदेवेशं येनेदं गहनीकृतम् । ध्यायमानस्ततो देवं राजेन्द्र! विमले जले
तस्मिन्महार्णवे घोरे नष्टे स्थावरजङ्गमे । मयूरं स्वर्णपत्राढ्यमपश्यंसहसा जले ॥
विचित्रचन्द्रकोपेतं नीलकण्ठं सुलोचनम् ॥ ७ ॥
ततो मयूरः स महार्णवान्ते विक्षोभयित्वा हि महारवेण ।
चचार देवस्त्रिशिखी शिखण्डी त्रैलोक्यगोप्ता स महानुभावः ॥ ८ ॥
शिवश्च रौद्रेण मयूररूपिणा विक्षोभ्यमाणे सलिलेऽपि तस्मिन् ।
सह भ्रमन्तीं च महार्णवान्ते सरिन्महौघां सुमहान्ददर्श ॥ ६ ॥
स तां महादेवमयूररूपो दृष्ट्वा भ्रमन्तीं सहसोर्मिजालैः ।
का त्वं शुभे शाश्वतदेहभूता क्षयं न यातासि महाक्षयान्ते ॥ १० ॥
देवासुरगणे नष्टे सरित्सरमहार्णवे । का त्वं भ्रमसि पद्माक्षि! क्व गतासिचनक्षयम्

नर्मदोवाच

तव प्रसादाद्देवेश! मृत्युर्मम नविद्यते । सृजदेव! पुनर्विश्वं शर्वरी क्षयमागता ॥

एवमुक्तो महादेवोऽव्यधुनोत्पक्षपञ्जरम् । तावत्पञ्जरमध्यान्ते तस्य पक्षाद्विनिःसृताः
तावन्तोदेवदैत्येन्द्राःपक्षाभ्यां तस्यजज्ञिरे । तेषांमध्येपुनः सासुनर्मदाभ्रमतेसरित्
ततश्चान्यो महाशैलो दृश्यतेभरतर्षभ ।। त्रिभिःकूटैःसुविस्तीर्णैःशृङ्गवानिवगोवृषः

त्रिकूटस्तु इति ख्यातः सर्वरत्नैर्विभूषितः ।
ततस्तस्मात्त्रिकूटाच्च प्लावयन्ती महीं ययौ ॥ १६ ॥
त्रिकूटी तेन विख्याता पितृणां त्रायणी परा ।
द्वितीयाच्च ततो गङ्गा विस्तीर्णा धरणीतले ॥ १७ ॥

तृतीयं चततः शृङ्गं सप्तधा खण्डशोगतम् । जम्बूद्वीपे तुसञ्जाताःसप्त ते कुलपर्वताः
चन्द्रनक्षत्रसहिता ग्रहग्रामनदीनदाः । अण्डजं स्वेदजं जातमुद्भिज्जं च जरायुजम्
एवं जगदिदं सर्वं मयूरादभवत्पुरा ।।समस्तं नरशार्दूल महादेवसमुद्भवम् ॥ २० ॥

ततो नदीः समुद्रांश्च सम्विभज्य पृथक्पृथक् ।
नर्मदामाह देवेशो गच्छ त्वं दक्षिणां दिशम् ॥ २१ ॥

एवंसा दक्षिणागङ्गा महापातकनाशिनी । उत्तरेजाह्नवी देशे पुण्या त्वंदक्षिणेशुभा
यथा गङ्गा महापुण्या मम मस्तकसम्भवा । तद्विशिष्टामहाभागेत्वंचैवेतिनसंशयः
त्वया सह भविष्यामिएकेनांशेन सुव्रते ।। महापातकयुक्तानामौषधं त्वंभविष्यसि
एवमुक्तातुदेवेनमहापातकनाशिनी । दक्षिणंदिग्विभागं तुसाजगामाऽऽशुविक्रमा

ऋक्षशैलेन्द्रमासाद्य चन्द्रमौलेरनुग्रहात् ।
वार्यौघैः प्रस्थिता यस्मान्महादेवप्रणोदिता ॥ २६ ॥

महताचाऽपिवेगेन यस्मादेषा समुच्छ्रिता । महतीतेन सा प्रोक्तामहादेवान्महीपते

तपतस्तस्य देवस्य शूलाग्राद् बिन्दवोऽपतन् ।
तेनैषा:शोणसञ्ज्ञातु दशसप्त च ताःस्मृताः ॥ २८ ॥

सर्वेषांनर्मदापुण्या रुद्रदेहाद्विनिःसृता । सर्वाभ्यश्च सरिद्भ्यश्च वरदानान्महात्मनः
शङ्करानुग्रहाद्देवी महापातकनाशिनी । यस्मान्महार्णवे घोरे दृश्यतेमहतीचसा

सुव्यक्ताङ्गी महाकाया महती तेन सा स्मृता ।

तस्माद्विक्षोभ्यमाणा हि दिग्गजैरम्बुदोपमैः ॥ ३१ ॥
कलुषत्वं नयत्येव रसेन सुरसा तथा । कृपां करोति सा यस्माल्लोकानामभयप्रदा
संसारार्णवमग्नानां तेन चैषा कृपा स्मृता ।
पुरा कृतयुगे पुण्ये दिव्यमन्दारभूषिता ॥ ३३ ॥
कल्पवृक्षसमाकीर्णा रोहीतकसमाकुला । वहत्येषा च मन्देनतेनमन्दाकिनीस्मृता
भित्वा महार्णवं क्षिप्रं यस्माल्लोकमिहागता ।
पूज्या सुरैश्च सिद्धैश्च तस्मादेषा महार्णवा ॥ ३५ ॥
विचित्रोत्पलसङ्घातैर्ऋक्षद्विपसमाकुला ॥ ३६ ॥
भित्वा शैलं च विपुलं प्रयात्येवंमहार्णवम् । भ्रामयन्ती दिशःसर्वा रवेणमहतापुरा
प्लावयन्ती विराजन्ती तेन रेवा इति स्मृता ।
भार्यापुत्रसुदुःखाढ्यान्नराञ्छापैः समावृतान् ॥ ३८ ॥
विपापान्कुरुते यस्माद्विपापा तेन सा स्मृता ।
विण्मूत्रनिचयां घोरां पांशुशोणितकर्दमाम् ॥ ३९ ॥
पाशैर्नित्यं तु सम्बाधां यस्मान्मोचयते भृशम् ।
विपाशेति च सा प्रोक्ता संसारार्णवतारिणी ॥ ४० ॥
नर्मदा विमलाम्भा च विमलेन्दुशुभानना । तमीभूते महाघोरेयस्मादेषा महाप्रभा
विमला तेन सा प्रोक्ता विद्वद्भिर्नृपसत्तम ! । करैरिन्दुकरप्रख्यैः सूर्यरश्मिसमप्रभा
क्षरन्ती मोदते विश्वं करभा तेन चोच्यते । यस्माद्रञ्जयते लोकान्दर्शनादेव भारत
रञ्जनाद्रञ्जना प्रोक्ताधात्वर्थैराजसत्तम । तृणवीरुधगुल्माद्यास्तिर्यञ्चःपक्षिणस्तथा
तानुद्भूतान्नयेत्स्वर्गं तेनोक्ता वायुवाहिनी ॥ ४४ ॥
एवं यो वेत्ति नामानि निर्गमंचविशेषतः । सयातिपापनिर्मुक्तोरुद्रलोकं न संशय

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये सहेतुकरेवानाममाहात्म्यवर्णने मयूरकल्पसमुद्भवो नाम षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः

## पूर्वकल्पसमुद्भववर्णनम्

### श्रीमार्कण्डेय उवाच

पुनरेकार्णवे घोरे नष्टे स्थावरजङ्गमे। सलिलेनाप्लुते लोके निरालोके तमोद्भवे ॥
ब्रह्मैको विचरंस्तत्र तमीभूते महार्णवे। दिव्यवर्षसहस्रं तु खद्योत इव रूपवान् ॥
शेते योजनसाहस्रमप्रमेयमनुत्तमम्। द्वादशादित्यसङ्काशं सहस्रचरणेक्षणम् ॥ ३ ॥
प्रसुप्तं चार्णवे घोरे ह्यपश्यत्कूर्मरूपिणम्। तं दृष्ट्वा विस्मयापन्नो ब्रह्मा बोधयतेशनैः
स्तुतिभिर्मङ्गलैश्चैव वेदवेदाङ्गसम्भवैः। वाचस्पते! विबुध्यस्वमहाभूतनमोऽस्तु ते
तवोदरे जगत्सर्वं तिष्ठते परमेश्वर !। तद्विमुञ्च महासत्त्व! यत्पूर्वं संहृतं त्वया ॥ ६ ॥
व्यतीता रजनी ब्राह्मी दिनं समनुवर्त्तते। निरीक्ष्य सर्वलोकेश येन सम्भवते जगत्

स निशम्य वचस्तस्य उत्थितः परमेश्वरः।
समुद्गिरन्सलोकांस्त्रीन्ग्रस्तान्कल्पक्षये तदा ॥ ८ ॥

देवदानवगन्धर्वाः सयक्षोरगराक्षसाः। सचन्द्रार्कग्रहाः सर्वे शरीरात्तस्य निर्गताः
ततो ह्येकार्णवंसर्वं विभज्यपरमेश्वरः। विस्तीर्णोपलतोयौघांसरित्सरविवर्द्धिताम्
पश्यते मेदिनीं देवः सवृक्षौषधिपल्वलाम्। हिमवन्तं गिरिश्रेष्ठं श्वेतं पर्वतमुत्तमम्
शृङ्गवन्तं महाशैलं ये चान्ये कुलपर्वताः। जम्बूद्वीपंकुशं क्रौञ्चंसगोमेदंसशाल्मलम्

पुष्करान्ताश्च ये द्वीपा ये च सप्तमहार्णवाः।
लोकालोकं महाशैलं सर्वं च पुरतः स्थितम् ॥ १३ ॥

चतुः प्रकृतिसंयुक्तं जगत्स्थावरजङ्गमम्। युगान्ते तु विनिष्क्रान्तमपश्यत्समहेश्वरः

विप्रकीर्णशिलाजालामपश्यत्स वसुन्धराम्।
कूर्मपृष्ठोपगां देवीं महार्णवगतां प्रभुः ॥ १५ ॥

तस्मिन्विशीर्णशैलाग्रे सरित्सरोविवर्जिते। नानातरङ्गभिन्नोद आवर्तोद्वृत्तसङ्कुले

नानौषधिप्रज्वलितेनानोत्पलशिलातले । नानाविहंगसंघुष्टांमत्स्यकूर्मसमाकुलाम्

दिव्यमायामयीं देवी मुत्कृष्टाम्बुदसन्निभाम् ।
नदीमपश्यद्देवेशो ह्यनौपम्यजलाशयाम् ॥ १८ ॥

मध्ये तस्याम्बुदश्यामां पीनोरुजघनस्तनीम् । वस्त्रैरनुपमैर्दिव्यैर्नानाभरणभूषिताम्
सनूपुररवोद्दामां हारकेयूरमण्डिताम् । तादृशींनर्मदां देवीं स्वयंस्त्रीरूपधारिणीम्

योगमायामयैश्चित्रैर्भूषणैः स्वैर्विभूषिताम् ।
अव्यक्ताङ्गीं महाभागामपश्यत्स तु नर्मदाम् ॥ २१ ॥

अर्द्धोद्यतभुजां बालां पद्मपत्रायतेक्षणाम् । स्तुवन्तीं देवदेवेशमुत्थितां तु जलात्तदा

विस्मयाऽऽविष्टहृदयो ह्यहमुद्वीक्ष्य तां शुभाम् ।
स्नात्वा जले शुभे तस्याः स्तोतुमभ्युद्यतस्ततः ॥ २३ ॥

अर्चयामास संहृष्टो मन्त्रैर्वेदाङ्गसम्भवैः । सृष्टं च तत्पुरा राजन्पश्येयं सचराचरम्॥
सदेवासुरगन्धर्वं सपन्नगमहोरगम् । पश्याम्येषा महाभागा नैव याता क्षयं पुरा ॥
महादेवप्रसादाच्च तच्छरीरसमुद्भवा । भूयोभूयो मया दृष्टा कथिता ते नृपोत्तम ॥

प्रादुर्भावमिमं कौर्म्यं येऽधीयन्ते द्विजोत्तमाः ।
येऽपि शृण्वन्ति विद्वांसो मुच्यन्ते तेऽपि किल्बिषैः ॥ २७ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये कूर्मकल्पसमुद्भवोनाम सप्तमोऽध्यायः ॥ ७ ॥

---

# अष्टमोऽध्यायः

## बककल्पसमुद्भववर्णनम्

मार्कण्डेय उवाच

नष्टे लोके पुनश्चान्येसलिलेनसमावृते । महार्णवस्य मध्यस्थोबाहुभ्यामतरंजलम्
दिव्यैःवर्षशते पूर्णे श्रान्तोऽहं नृपसत्तम । ध्यातुं समारभं देवं महदर्णवतारणम् ॥
ध्यायमानस्ततःकालेअपश्यं पक्षिणं परम् । हारकुन्देन्दुसङ्काशं बकंगोक्षीरपाण्डुरम्

ततोऽहं विस्मयाविष्टस्तं बकं समुदीक्ष्य वै ।
अस्मिन्महार्णवे घोरे कुतोऽयं पक्षिसम्भवः ॥ ४ ॥

तरन्बाहुभिरश्रान्तस्तं बकं प्रत्यभाषिषि । पक्षिरूपंसमास्थायकस्त्वमेकार्णवीकृते

भ्रमसे दिव्ययोगात्मन्मोहयन्निव मां प्रभो !।
एतत्कथय मे सर्वं योऽसि सोऽसि नमोऽस्तु ते ॥ ६ ॥

सोऽब्रवीन्मां महादेवोब्रह्माऽहंविष्णुरेव च । जगत्सर्वंमया वत्स!संहृतं किंनबुध्यसे

तव माता पिताऽहं वै विश्वस्य च महामुने !।
कारुण्यं मम सञ्जातं दृष्ट्वा मग्नं महर्णवे ॥ ८ ॥

पक्षिरूपंसमास्थायअतोऽत्राऽहंसमागतः । किमर्थमातुरोभूत्वाभ्रमसीत्थंमहार्णवे
शीघ्रम्प्रविश मत्पक्षौ येन विश्रमसे द्विज । एवमुक्तस्ततस्तेन देवेनाऽहं नरेश्वम्
ततोऽहंतस्यपक्षान्तेप्रलीनस्तु भ्रमञ्जले । कालेयुगसहस्रान्ते अश्रान्तोऽर्णवमध्यगः
ततः श्रृणोमि सहसा दिक्ष सर्वासुसुव्रत । किञ्चिन्नूपुरसंमिश्रमद्भुतं शब्दमुत्तमम्
तदार्णवजलंसर्वंसंक्षिप्तं सहसाऽभवत् । किमेतदिति सञ्चिन्त्यदिशःसमवलोकयम्
दश कन्यास्ततोदिक्षआगताश्चमहार्णवे । वस्त्रालङ्कारसहितादिग्भ्योनूपुरभूषिताः

काचिच्चन्द्रसमाभासा काचिदादित्यसप्रभा ।
काचिदञ्जनपुञ्जाभा काचिद्रक्तोत्पलप्रभा ॥ १५ ॥

नानारूपधरा सौम्या नानाऽऽभरणभूषिता ।
अर्घ्यपाद्यादिभिर्माल्यैर्बकमभ्यर्च्य सुव्रताः ॥ १६ ॥
सतस्तं पर्वताकारं गुह्यं पक्षिणमव्ययम् । प्रविवेशमहाघोरं पर्वतोद्यर्णवं स्वराट्
योजनानांसहस्राणितावन्त्येवशतानिच । त्रिंशद्योजनसाहस्रंयावद्भूमण्डलंत्विति
ततोभूमण्डलंदिव्यंपञ्चरत्नसमाकुलम् । दिव्यस्फटिकसोपानं रुक्मस्तम्भमनोरमम्
योजनानां सहस्रं तु विस्तराद् द्विगुणाऽऽयतम् ।
वापीकूपसमाकीर्णं प्रासादाट्टालकावृतम् ॥ २० ॥
कल्पवृक्षसमाकीर्णंध्वजयष्टिविभूषितम् । तस्मिन्पुरवरेरम्ये नानारत्नोपशोभितम्
तथाऽन्यच्च पुरं रम्यं पताकोज्ज्वलवेदिकम् ।
शतयोजनविस्तीर्णं तावद्द्विगुणमायतम् ॥ २२ ॥
पुरमध्ये ततस्तस्मिन्नदीपरमशोभना । महती पुण्यसलिला नानारत्नशिला तथा
तस्यास्तीरेमया दृष्टं तडित्सूर्यसमप्रभम् । इन्द्रनीलमहानीलैश्चितं रत्नैः समन्ततः
क्वचिद्वह्निसमाकारं क्वचिदिन्द्रायुधप्रभम् ।
क्वचिद्धूम्रं क्वचित्पीतं क्वचिद्रक्तं क्वचित्सितम् ॥ २५ ॥
नानावर्णैः समायुक्तं लिङ्गमद्भुतदर्शनम् ।
ब्रह्मविष्ण्विन्द्रसाध्यैश्च समन्तात्परिवारितम् ॥ २६ ॥
नन्दीश्वरगणाध्यक्षैश्चेन्द्रादित्यैश्च तद्वृतम् ।
पश्यामि लिङ्गमीशानं महालिङ्गं तमेव च ॥ २७ ॥
परिवार्य ततस्तं तु प्रसुप्तान्देवदानवान् ।
निमीलिताक्षान्पश्यामि दिव्याभरणभूषितान् ॥ २८ ॥
ततस्ताः पद्मपत्राक्ष्यो नार्य्यः परमसम्मताः ।
नद्यास्तस्या जले स्नात्वा दिव्यपुष्पैर्मनोरमैः ॥ २६ ॥
दत्वाऽर्घपाद्यं विधिवल्लिङ्गस्यसहपक्षिणा । अर्चयन्तीर्वरारोहादशताःप्रमदोत्तमाः
ततस्त्वभ्यर्च्यतल्लिङ्गं तस्मिन्नेवपुरोत्तमे । सर्वा अदर्शनं जग्मुर्विद्युतोऽभ्रगणेष्विव

न चाऽसौ पक्षिराट् तस्मिन्न स्त्रियो न च देवताः ।
तदेवैकं स्थितं लिङ्गमर्च्चयन्विस्मयान्वितः ॥ ३२ ॥
ततोऽहं दुःखमूढात्मा रुद्रमायेति चिन्तयन् ।
ततः कन्याः समुत्तीर्य दिव्याम्बरविभूषणाः ॥ ३३ ॥
भासयन्त्यो जगत्सर्व्वं विद्युतोऽभ्रगणानिव ।
पद्मैर्हिरण्मयैर्द्दिव्यैरर्च्चयित्वा शुभाननाः ॥ ३४ ॥
विविशुस्तज्जलं क्षिप्रं समन्ताद्वरभूषणाः । तस्मिन्पुरवरेचाऽन्ये तामेवाहंपुनःपुनः
पश्यामिह्यमरांकन्यांअर्चयन्तींमहेश्वरम् । ततोऽहंतां वरारोहामपृच्छंकमलेक्षणाम्
कात्वमस्मिन्पुरेदेवि! वससे शिवमर्च्चती ।
ताश्चागताः स्त्रियः सर्वाः क्वगतास्तगणेश्वराः ॥ ३७
नमोऽस्तुते महाभागे! ब्रूहि पुण्येमहेश्वरि !। तवप्रसादाद्विज्ञातुमेतदिच्छामिसुव्रते
दयां कृत्वा महादेवि! कथयस्व ममाऽनघे ॥ ३८ ॥

स्त्र्युवाच

विस्मृताऽहं कथं विप्र! दृष्ट्वा कल्पे पुरातने ।
मा तेऽभूत्स्मृतिविभ्रंशःसचाऽहं कल्पवाहिनी ॥ ३९ ॥
नर्मदानाम विख्याता रुद्रदेहाद्विनिःसृता ।
यास्ताः कन्यास्त्वया दृष्टा ह्यर्च्चयन्त्यो महेश्वरम् ॥ ४० ॥
याभिस्त्विह समानीतः पक्षिराजसमन्विताः ।
दिशस्ता विद्धि सर्वेशाः सर्वास्त्वं मुनिसत्तम !॥ ४१ ॥
तिर्यक्पक्षिस्वरूपेण महायोगी महेश्वरः । एभिःशिवपुराद्विप्रआनीतः स महेश्वरः
सैषदेवो महादेवो लिङ्गमूर्त्तिर्व्यवस्थितः । अर्च्यतेब्रह्मविष्णिवन्द्रैः सुरासुरजगद्गुरुः
लयमायाति यस्माद्धि जगत्सर्वं चराचरम् ।
तेन लिङ्गमितिप्रोक्तं पुराणज्ञैर्महर्षिभिः ॥ ४४ ॥
तेनदेवगणाःसर्वे संक्षिप्ता मायया पुरा । प्रलीनाश्चैवलोकेशन दृश्यन्तेहिसाम्प्रतम्

पुनर्द्रक्ष्याभविष्यन्ति सृजमानाः स्वयम्भुवा ।
साऽहं लिङ्गार्चनपरा नर्मदानामनामतः ॥ ४६ ॥
कालंयुगसहस्रस्य रुद्रस्य परिचारिका । अस्य प्रसादादमरस्तथा त्वं द्विजपुङ्गव
सत्यार्जवदयायुक्तः सिद्धोऽसित्वंशिवार्चनात् ।एवमुक्त्वातुसादेवीतत्रैवान्तरधीयत
ताः स्त्रियः स च देवेशोबकरूपोमहेश्वरः ।तस्यास्तद्वचनं श्रुत्वाअवतीर्यमहानदीम्
स्नात्वा समर्चय त्वं हि विधिना मन्त्रपूर्वकम् ।
ततोऽहं सहसा तस्मात्समुत्तीर्य जलाशयात् ॥ ५० ॥
न च पश्यामि तल्लिङ्गं न च तां निम्नगां नृप ।
तदेव लोकाः सञ्जाताः क्षितिश्चैव सकानना ॥ ५१ ॥
ऋक्षचन्द्रार्कविततं तदेव च नभस्तलम् । यथापूर्वमदृष्टं तु तथैव च पुनः कृतम्
ततोऽहं मनसा देवमपूजयं महेश्वरम् ॥ ५२ ॥
एवं बके पुरा कल्पे मया दृष्टेयमव्यया । नर्मदा मर्त्यलोकस्यमहापातकनाशिनी।
तस्माद्धर्मपरैर्विप्रैःक्षत्रशूद्रविशादिभिः । सदासेव्यामहाभागाधर्मवृद्ध्यर्थकारिभिः
येऽपि भक्त्या सकृत्तोये नर्मदाया महेश्वरम् ।
स्नात्वाऽर्चयन्ति ते सर्वं पापं नाशयन्त्यसंशयम् ॥ ५५ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये बककल्पसमुद्भवोनामाऽष्टमोऽध्यायः ॥ ८ ॥

———

# नवमोऽध्यायः

## नर्मदोत्पत्तितत्स्नानफलादिकथनम्

श्रीमार्कण्डेय उवाच

पुनर्युगान्तं ते चाऽन्यं सम्प्रवक्ष्यामितच्छृणु । सूर्यैरादीपितेलोकेजङ्गमेस्थावरेपुरा

सरित्सरः समुद्रेषु क्षयं यातेषु सर्वशः ।

निर्मानुषवषट्कारे ह्यमर्यादगतिं गते ॥ २ ॥

नानारूपैस्ततो मेघैःशक्रायुधविराजितैः । सर्वमापूरितं व्योम वार्योघैः पूरितेसदा

ततस्त्वेकार्णवीभूते सर्वतः सलिलावृते । जगत्कृत्वोदरे सर्वं सुष्वापभगवान्हरः

प्रकृतिं स्वामवष्टभ्य योगात्मा स प्रजापतिः ।

शेते युगसह स्रान्तं कालमाविश्य सार्णवम् ॥ ५ ॥

तत्रसुप्तं महात्मानं ब्रह्मलोकनिवासिनः । भृग्वादिऋषयःसर्वेये चाऽन्ये सनकादयः

पर्यङ्केविमले शुभ्रे नानास्तरणसंस्तृते । शयानं ददृशुर्देवं सपत्नीकं वृषध्वजम् ॥

विश्वरूपातुसानारीविश्वरूपोमहेश्वरः । गाढमालिङ्ग्य सुप्तस्तां ददृशेचाहमव्ययम्

पादमूले ततस्तस्य श्यामां तां पद्मलक्षणाम् ।

कन्यां पश्यामि सुश्रोणीं चरणौ तस्य मृद्नतीम् ॥ ६ ॥

विमलाम्बरसम्वीतां व्यालयज्ञोपवीतिनीम् ।

श्यामां कमलपत्राक्षीं सर्वाभरणभूषिताम् ॥ १० ॥

सकलं युगसाहस्रं नर्मदेयं विजानती । प्रसुप्तं देवदेवेशमुपास्ते वरवर्णिनी ॥ ११

हतैर्वेदैश्चतुर्भिश्च ब्रह्माऽप्येवं महेश्वरः । भृग्वाद्यैर्मानसैः पुत्रैः स्तौति शङ्करमव्ययम्

भक्त्यापरमया राजंस्तत्र शम्भुमनामयम् । स्तुवन्तस्तत्रदेवेशं मन्त्रैरीश्वरसम्भवैः

अकस्मात्सम्प्रलीनास्ते चत्वारःश्रुतयोऽर्णवे । वेदैः प्रलीनैर्भगवानज्ञानतमसावृतः

प्रसुप्तं देवमीशानं बोधयन्समुपस्थितः । उत्तिष्ठ हर! पिङ्गाक्ष! महादेव! महेश्वर!

मम वेदाहृताःसर्वेअतोऽहं स्तोतुमुद्यतः। वेदैर्व्याप्तं जगत्सर्वंदिव्यादिव्यंचराचरम्
अतीतं वर्त्तमानं च स्मरामि च सृजाम्यहम्।
तैर्विना चाऽहमेकस्तु मूकोऽन्धो जडवत्सदा ॥ १७ ॥
गतिर्वीर्य्यंबलोत्साहौ तैर्विनानप्रजायते। तैर्विनादेवदेवेशनाऽहं किंचित्स्मरामिवै
तान्वेदान्देवदेवेश! शीघ्रं मे दातुमर्हसि। जडान्धबधिरं सर्वं जगत्स्थावरजंगमम्
स्थानादि दश चत्वारि न शोभंतेसुरेश्वर। प्रणमाम्यल्पवीर्यत्वाद्वेदहीनः सुरेश्वर
वेदेभ्यः सकलं जातं यत्किञ्चित्सचराचरम्।
तावच्छोभन्ति शास्त्राणि समस्तानि जगद्गुरो !॥ २१ ॥
यावद्वेदनिधिरयं नोपतिष्ठेत्सनातनः। यथोदितेन सूर्येन तमो याति विनाशताम्
एवं समस्तपापानि यान्ति वेदस्य धारणात्।
वेदे रहसि यत्सूक्ष्मं यत्तद्ब्रह्म सनातनम् ॥ २३ ॥
हृदिस्थं देव! जानामि गतं तद्वेदगर्जनात्। वेदानुचरतो मेऽद्य तव शङ्कर! चाग्रतः
अकस्मात्ते गतावेदान सृजेयंविभोभुवम्। तेऽपिसर्वेमहादेवप्रविष्टाःसम्मुखार्णवम्
ते याच्यमाना देवेश तिष्ठन्तुस्मरणेमम। दुहितेयंविशालाक्षीसर्वः सर्वं विजानते
जायती युगसाहस्रं नान्या काचिद्भवेदृशी।
ऋषिश्चायं महाभागो मार्कण्डो धीमताम्वरः ॥ २७ ॥
कल्पेकल्पे महादेव! त्वामयं पर्युपासते। जगत्त्रयहितार्थाय चरते व्रतमुत्तमम्॥
एवमुक्तस्तु देवेशो ब्रह्मणापरमेष्ठिना। उवाच श्लक्ष्णया वाचानर्मदांसरितांवराम्
कथयस्व महाभागे! ब्रह्मणस्त्वं तुपृच्छतः। केनवेदाहृताः सर्वेवेधसो जगतीगुरोः
एवमुक्ता तु रुद्रेण उवाच मृगलोचना। ब्रह्मणो जपतो वेदांस्त्वयि सुप्ते महेश्वर
भवतश्छिद्रमासाद्य घोरेऽस्मिन्सलिलावृते। पूर्वकल्पसमुद्भूतावसुरौसुरदुर्जयौ
श्रियावृत्तौ महादेव त्वया चोत्पादितौपुरा। सुरासुरसुदुर्जयौ दानवौमधुकैटभौ
तौ वायुभूतौ सूक्ष्मौ च पठतोऽस्मात्पितामहात्।
तावाशु हृत्वा वेदांश्च प्रविष्टौ च महार्णवम् ॥ ३४ ॥

एतच्छ्रुत्वा महातेजा ह्यमृतायास्ततो वचः । सस्मार सचदेवेशं शङ्खचक्रगदाधरम्
स विवेश महाराज भूतले.ससुरोत्तमः । दानवान्तकरो देवः सर्वदैवतपूजितः ॥
मीनरूपधरो देवो लोडयामासचार्णवम् । वेदांश्च ददृशे तत्र पातालेनिहितान्प्रभुः
तौ च दैत्यौ महावीर्य्यौ दृष्टवान्मधुसूदनः । महावेगौ महाबाहू सूदयामासतेजसा

वेदांस्तत्राऽपि तोयस्थानानिनाय जगद्गुरुः ।
चतुर्वक्त्राय देवायाददाच्चक्रविभूषितः ॥ ३६ ॥

ततःप्रहृष्टो भगवान्वेदाँल्लब्ध्वा पितामहः । जनयामासनिखिलंजगद्भूयश्चराचरम्
सा चदेवी नदीपुण्या रुद्रस्यपरिचारिका । पावनीसर्वभूतानां प्रोवाहसलिलंतदा
तस्यास्तीरे ततो देवास्त्रयश्चतपोधनाः । यजन्ति त्र्यम्बकंदेवंप्रहृष्टेनाऽन्तरात्मना
एका मूर्त्तिर्महेशस्य कारणान्तरमागता । त्रैगुण्या कुरुते कर्म ब्रह्मचक्रीशरूपतः ॥

एतेषां तु पृथग्भावं ये कुर्वन्ति सुमोहिताः ।
तेषां धर्म्मः कुतः सिद्धिर्जायते पापकर्मिणाम् ॥ ४४ ॥

एवमेता महानद्यस्तिस्रो रुद्रसमुद्भवाः । एकाएवत्रिधा भूता गङ्गा रेवा सरस्वती
गङ्गा तु वैष्णवी मूर्त्तिः सर्वपापप्रणाशिनी । रुद्रदेहसद्भूता नर्मदा चैवमेव तु ॥

ब्राह्मी सारस्वती मूर्त्तिस्त्रिषु लोकेषु विश्रुता ।
दिव्या कामगमा देवी वाग्विभूत्यै तु संस्थिता ॥ ४७ ॥

नर्मदापरमाकाचिन्मर्त्यमूर्त्तिकला शिवा । दिव्या कामगमा देवीसर्वत्रसुरपूजिता

व्यापिनी सर्वभूतानां सूक्ष्मात्सूक्ष्मतरा स्मृता ।
अक्षया ह्यमृता ह्येषा स्वर्गसोपानमुत्तमा ॥ ४६ ॥
सृष्टा रुद्रेण लोकानां संसारार्णवतारिणी ॥ ५० ॥
सरिज्जलं येऽपि पिबन्ति लोके मुच्यन्ति ते पापविशेषसङ्घैः ।
व्रजन्ति संसारमनादिभावं त्यक्त्वा चिरं मोक्षपदं विशुद्धम् ॥ ५१ ॥

यथा गङ्गा तथा रेवा तथाचैवसरस्वती । समं पुण्यफलं प्रोक्तं स्नानदर्शनचिन्तनैः
वरदानान्महाभागाह्यधिकाचोच्यतेबुधैः । कारुण्यान्तरभावेन न मृतासमुपागता

मुच्यन्ते दर्शनात्तेन पातकैःस्नानमङ्गलैः । नर्मदायां नृपश्रेष्ठये नमन्ति त्रिलोचनम्युगान्

उमारुद्राङ्गसम्भूता येन चैशा महानदी ।
लोकान्प्रापयतेऽस्वर्गं तेन पुण्यत्वमागता ॥ ५५ ॥
य एवमीशानवरस्य देहं विभज्य देवीमिह संश्रृणोति ।
स याति रूद्रं महता रवेण गन्धर्वयक्षैरपि गीयमानः ॥ ५६ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये नर्मदोत्पत्तितत्स्नानफलादिकथनंनाम नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः

## कल्पान्तेऽपिनर्मदास्थितिवर्णनम्

युधिष्ठिर उवाच

कस्मिन्कल्पे महाभागा नर्मदेयं द्विजोत्तम !।
विभक्ता ऋषिभिः सर्वैस्तपोयुक्तैर्महात्मभिः ॥ १ ॥

एतद्विस्तरतः सर्वं ब्रूहि मे वदताम्वर !। कल्पान्ते यद्भवेत्कष्टं लोकानां तत्त्वमेवच
अतीते तु पुरा कल्पेयथेयंवर्त्ततेऽनघ। अस्यान्त्यस्यचकल्पस्ययत्यवस्थांकथयप्रभो

एवमुक्तः सभामध्ये मार्कण्डो वाक्यमब्रवीत् ॥ ३ ॥

मार्कण्डेय उवाच

वक्ष्येऽहं श्रूयतां सर्वैः कथेयं पूर्वतः श्रुता ॥ ४ ॥
महत्कथेयं वैशिष्टी कल्पादस्मात्परं तु या ।
लोकक्षयकरो घोर आसीत्कालः सुदारुणः ॥ ५ ॥

तस्मिन्नपि महाघोरे यथेयंनमृतासती । परितुष्टैर्विभक्ताच श्रृणुध्वंतांकथामिमाम्

युगान्ते समनुप्राप्ते पितामहदिनत्रये । मानसा ब्रह्मणः पुत्राः साक्षाद्ब्रह्मेवसत्तमाः

सनकाद्या महात्मानोःये च वैमानिकागणाः ।
यमेन्द्रवरुणाद्याश्च लोकपाला दिनत्रये ॥ ८ ॥

कालापेक्षास्तु तिष्ठन्ति लोकवृत्तांततत्पराः । ततःकल्पक्षयेप्राप्ते तेषांज्ञानमनुत्तमम्
सर्वेषां नश्यते चायुर्युगरूपाऽनुसारतः । भूर्लोकं ते.परित्यज्य अगमंश्च भुवं तदा
स्वर्लोकं च महश्चैव जनश्चैव तपस्तदा । आश्रयं सत्य लोकं च सर्वलोकमनुत्तमम्
कालंयुगसहस्त्रान्तंपुत्रपौत्रसमन्विताः । सत्यलोके च तिष्ठन्तियावत्सञ्जायतेजगत्
ब्रह्मपुत्राश्चयेकेचित्कल्पादौनभवन्ति ह । त्रैलोक्यं ते परित्यज्यअनाधारंभवन्ति च

तैः सार्धं ये तु ते विप्रा अन्ये चापि तपोधनाः ।
यक्षरक्षः पिशाचाश्च अन्ये वैमानिका गणाः ॥ १४ ॥
ऋषयश्च महाभागा वर्णाश्चान्ये पृथग्विधाः ।
सीदन्ति भूम्यां सहिता ये चाऽन्ये तलवासिनः ॥ १५ ॥

अनावृष्टिरभूत्तत्र महती शतवार्षिकी । लोकक्षयकरी रौद्रा वृक्षवीरुद्विनाशिनी ॥
त्रैलोक्यसंक्षोभकरीसप्तार्णवविशोषणी । ततोलोकाःक्षुधाविष्टाभ्रमन्तीवदिशोदश

कन्दैर्मूलैः फलैर्वापि वर्त्तयन्ते सुदुःखिताः ।
सरितः सागराः कूपाःसेवन्ते पावनानि च ॥ १८ ॥
तत्राऽपि सर्वे शुष्यन्ति सरिद्भिः सह सागराः ।
ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले ॥ १६ ॥

तान्येवाग्रे प्रलीयन्ते भिन्नान्युरुजलेन वै । अथसंक्षीयमाणासु सरित्सु सह सागरैः
ऋषीणांषष्टिसाहस्रंकुरुक्षेत्रनिवासिनाम् । येचवैखानसाविप्रादन्तोलूखलिनस्तथा
हिमाचलगुह्यगुह्ये ये वसंति तपोधनाः । सर्वे ते मामुपागम्यक्षुत्तृषार्त्तास्तपोधनाः
ऊचुः प्राञ्जलयः सर्वे सीदयामो महामुने । सरित्सागरशैलान्तं जगत्संशुष्यते द्विज
कुत्र यास्याम सहितायावत्कालस्यपर्ययः । दीर्घायुरसि विप्रेन्द्रनमृतस्त्वंयुगक्षये
भूतं भव्यंभविष्यच्चसर्वं तवहृदि स्थितम् । तस्मात्त्वंवेत्सिसर्वं चकथयस्वमहाव्रत

कीदृक्कालं महाभाग क्षपिष्यामोऽथ सुव्रत । अनावृष्टिहतं सर्वं सीदते सचराचर
परित्राहिमहाभागन यथायामसंक्षयम् । ततः सञ्चिन्त्यमनसात्वरन्विप्रानथाब्रव

कुरुक्षेत्रं त्यजध्वं च पुत्रदारसमन्विताः ।
त्यक्त्वोदीचीं दिशं सर्वे यामो याम्यामनुत्तमाम् ॥ २८ ॥

नगरग्रामघोषाढ्यां पुरपत्तनशोभिताम् । गच्छामो नर्मदातीरं बहुसिद्धनिषेवित

रुद्राङ्गीं तां महापुण्यां सर्वपापप्रणाशिनीम् ।
पश्यामस्तां महाभागां न्यग्रोधावारसङ्कुलाम् ॥ ३० ॥
तरङ्गावर्त्तसलिलांदर्दुरीमत्स्यसङ्कुलाम् ।
नानाविहगसङ्घुष्टामृषिकोटिनिषेविताम् ॥ ३१ ॥
माहेश्वरैर्भागवतैः साङ्ख्यैः सिद्धैः सुसेविताम् ।
अनावृष्टिभयाद्भीताः कूलयोरुभयोरपि ॥ ३२ ॥

आश्रमे ह्याश्रमान्दिव्यान्कारयामोजितव्रताः । एवमुक्तास्तुतेसर्वेसमेतानुचरैःस

नर्मदातीरमासाद्य स्थिताः सर्वेऽकुतोभयाः ।
किञ्चित्पूर्वमनुस्मृत्य पुरा कल्पादिभिर्भयम् ॥ ३४ ॥

प्राप्तास्तु नर्मदातीरमादावेव कलौ युगे । ततो वर्षशतं पूर्णं दिव्यं रेवातटेऽवस
षड्विंशच्च सहस्राणि वर्षाणां मानुषाणि च । तत्राश्चर्यंमयादृष्टमृषीणांवसतां
अनावृष्टिहते लोके संशुष्के स्थावरे चरे । भिन्ने युगादिकलने हाहाभूते विचेतने
चातुर्वर्णप्रलीने तु नष्टेहोमबलित्रये । निः स्वाहेनिर्वषट्कारे शौचाचारविवर्जि

इयमेका सरिच्छ्रेष्ठा ऋषिकोटिनिषेविता ।
नान्या काचित्त्रिलोकेऽपि रमणीया! नरेश्वर !॥ ३६ ॥

यथेयं पुण्यसलिला इन्द्रस्येवामरावती । देवतायतनैःशुभ्रैराश्रमैश्च सुकल्पितैः

शोभते नर्मदा देवी स्वर्गे मन्दाकिनी यथा ।
यावद्वृक्षा महाशैला यावत्सागरसम्भवा ॥ ४१ ॥

उभयोः कूलयोस्तावन्मण्डितायतनैः शुभैः । हूयद्भिरग्निहोत्रैश्चहविर्धूमसमाकुल

बभूव नर्मदा देवी प्रावृट्कालेव शर्वरी । देवतायतनैर्नैकैः पूजासंस्कारशोभिता ॥
सरिद्भिर्भ्राजते श्रेष्ठा पुरी शाक्री च भास्करी ।
केचित्पञ्चाग्नितपसः केचिदप्यग्निहोत्रिणः ॥ ४४ ॥
केचिद्धूमकमश्नन्तितपस्युग्रे व्यवस्थिताः । आत्मयज्ञरताःकेचिदपरेभक्तिभागिनः
वैष्णवज्ञानमासाद्य केचिच्छैवं व्रतंतथा । एकरात्रंद्विरात्रं च केचित्षष्ठाहभोजनाः
चान्द्रायणविधानैश्च कृच्छ्रिणश्चातिकृच्छ्रिणः ।
एवंविधैस्तपोभिश्च नर्मदातीरशोभितैः ॥ ४७ ॥
यजद्भिः शङ्करं देवं केशवं भातिनित्यदा । एकत्वे च पृथक्त्वे च यजतांच महेश्वरम्
कलौ युगे महाघोरे प्राप्ताः सिद्धिमनुत्तमाम् ।
यस्य यस्य हि या भक्तिर्विज्ञानं यस्य यादृशम् ॥ ४६ ॥
यस्मिन्यस्मिंश्च देवे तु तां तामीशोऽददात्प्रभुः ।
स्वभावैकतया भक्त्या तामेत्याऽन्तःप्रलीयते ॥ ५० ॥
संसारे परिवर्त्तन्तेयेपृथग्भाजिनोनराः । येमहावृक्षमीशानंत्यक्त्वाशाखावलम्बिनः
पुनरावर्त्तमानास्तेजायन्तेहिचतुर्युगे । देवान्तेस्थावरान्तेचसंसारेचाऽभ्रमन्क्रमात्
पुनर्जन्म पुनः स्वर्गं पुनर्घोरे च रौरवे । ये पुनर्देवमीशानं भवं भक्तिसुसंस्थिताः ॥
यजन्तिनर्मदातीरे न पुनस्ते भवन्तिच । आदेहपतनात्केचिदुपासन्तः परं गताः ॥
केचिद्द्वादशभिर्वर्षैःषड्भिरन्येतपोधनाः । त्रिभिःसंवत्सरैःकेचित्केचित्संवत्सरेणतु
षड्भिर्मासैस्तु संसिद्धास्त्रिभिर्मासैस्तथाऽपरे ।
मुनयो देवमाश्रित्य नर्मदां च यशस्विनीम् ॥ ५६ ॥
छित्त्वा संसारदोषांश्च अगमन्ब्रह्मशाश्वतम् । एवं कलियुगे घोरेशतशोऽथसहस्रशः
नर्मदातीरमाश्रित्य मुनयो रुद्रमाविशन् ॥ ५८ ॥
ये नर्मदातीरमुपेत्य विप्राः शैवे व्रते यत्नमुपप्रपन्नाः ।
त्रिकालमम्भः प्रविगाह्य भक्त्या देवं समभ्यर्च्य शिवं व्रजन्ति ॥ ५९ ॥
ध्यानार्च्चनैर्जाप्यमहाव्रतैश्च नारायणं वा सततं स्मरन्ति ।

ते धौतपाण्डुरपटा इव राजहंसाः संसारसागरजलस्य तरन्ति पारम् ॥ ६० ॥
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते । इदमेकंसुनिष्पन्नं ध्येयोनारायणःसदा
यो वा हरं पूजयते जितात्मा मासं च पक्षं च वसेन्नरेन्द्र! ।
रेवां समाश्रित्य महानुभावः स देवदेवोऽथ भवेत्पिनाकी ॥ ६२ ॥
कीटाः पतङ्गाश्च पिपीलिकाश्च ये वै म्रियन्तेऽम्भसि नर्मदायाः ।
ते दिव्यरूपास्तु कुलप्रसूताः शतं समा धर्मपरा भवन्ति ॥ ६३ ॥
कालेन वृक्षाः प्रपतन्ति येऽपि महातरङ्गौघनिकृत्तमूलाः ।
ते नर्मदाम्भोभिरपास्तपापा देदीप्यमानास्त्रिदिवं प्रयान्ति ॥ ६४ ॥
अकामकामाश्च तथा सकामा रेवान्तमाश्रित्य म्रियन्ति तीरे ।
जडान्धमूकास्त्रिदिवं प्रयान्ति किमत्र विप्रा भवभावयुक्ताः ॥ ६५ ॥
मासोपवासैरपि शोषिताङ्गा न तां गतिं यान्ति विमुक्तदेहाः ।
म्रियन्ति रेवाजलपूतकायाः शिवार्चने केशवभावयुक्ताः ॥ ६६ ॥
ये नर्मदातीरमनुप्रपन्ना अभ्यर्चयित्वा शिवमव्ययाख्यम् ।
नारायणं वा मनसा सुपूताः पिबन्ति मातुर्न पुनः स्तनं ते ॥ ६७ ॥
नीवारश्यामाकयवेङ्गुदाद्यैरन्यैर्मुनीन्द्रा इह वर्त्तयन्ति ।
आश्रित्य कूलं त्रिदशानुगीतं ते नर्मदाया न विशन्ति मृत्युम् ॥ ६८ ॥
भ्रमन्ति ये तीरमुपेत्य देव्यास्त्रिकालदेवार्चनसत्यपूताः ।
विण्मूत्रचर्मास्थिशिरोपधानाः कुक्षौ युवत्या न वसन्ति भूयः ॥ ६९ ॥
किं यज्ञदानैर्बहुभिश्च तेषां निषेवितैस्तीर्थवरैः समस्तैः ।
रेवातटं दक्षिणमुत्तरं वा सेवन्ति ते रुद्रचरानुपूर्वम् ॥ ७० ॥
ते वञ्चिताः पङ्गुजडान्धभूता लोकेषु मर्त्त्याः पशुभिश्च तुल्याः ।
ये नाऽऽश्रिता रुद्रशरीरभूतां सोपानपङ्क्तिं त्रिदिवस्य रेवाम् ॥ ७१ ॥
युगं कलिं घोरमिमं य इच्छेद् द्रष्टुं कदाचिन्न पुनर्द्विजेन्द्रः ।
स नर्मदातीरमुपेत्य सर्वं सम्पूजयेत्सर्वविमुक्तसङ्गः ॥ ७२ ॥

विघ्नैरनेकैरतियोज्यमाना ये तीरमुज्झन्ति न नर्मदायाः ।
ते चैव सर्वस्य हितार्थभूता वन्द्याश्च ते सर्वजनस्य मान्याः ॥ ७३ ॥
भृग्वत्रिगार्ग्यवशिष्ठकङ्काः शतैः समेतैर्नियतास्त्वसङ्ख्यैः ।
सिद्धिं परां ते हि जलप्लुताङ्गाः प्राप्तास्तु लोकान्मरुतां न चान्ये ॥ ७४ ॥
ज्ञानं महत्पुण्यतमं पवित्रं पठन्त्यदो नित्यविशुद्धसत्त्वाः ।
गतिं परां यान्ति महानुभावा रुद्रस्य वाक्यं हि यथा प्रमाणम् ॥ ७५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये नर्मदास्नानफलश्रुतिकथनंनाम दशमोऽध्यायः ॥ १० ॥

---

# एकादशोऽध्यायः

## नर्मदामाहात्म्यवर्णनम्

### युधिष्ठिर उवाच

अहो महत्पुण्यतमा विशिष्टा क्षयं न याता इह या युगान्ते
तस्मात्सदा सेव्यतमा मुनीन्द्रैर्ध्यानार्चनस्नानपरायणैश्च ॥ १ ॥
यामाश्रित्य गता मोक्षमृषयोधर्मवत्सलाः ।
ये त्वयोक्तास्तु नियमा ऋषीणां वेदनिर्मिताः ॥ २ ॥
मोक्षावाप्तिर्भवेद्येषां नियमैश्च पृथग्विधैः ।
दशद्वादशभिर्वाऽपि षड्भिरष्टाभिरेववा ॥ ३ ॥
त्रिभिस्तथा चतुर्भिर्वावर्षैर्मासैस्तथैव च । मुच्यन्तेकलिदोषैस्तेदेवेशानसमर्चनात्
ब्रह्माणं वा सुरश्रेष्ठं केशवं वा जगद्गुरुम् । अर्चयन्पापमखिलं जहात्येव न संशयः
एतद्विस्तरतः सर्वं कथयस्व ममाऽनघ! । यस्मिन्संसारगहने निमग्नाः सर्वजन्तवः
ते कथं त्रिदिवं प्राप्ता इति मे संशयो वद ॥ ६ ॥

श्रीमार्कण्डेय उवाच

जन्मान्तरैरनेकैस्तु मानुष्यमुपलभ्यते। भक्तिरुत्पद्यते चाऽत्र कथञ्चिदपि शङ्करे॥
तीर्थदानोपवासानां यज्ञैर्देवद्विजार्चनैः। अवाप्तिर्जायतेपुंसां श्रद्धया परया नृप!

तस्माच्छ्रद्धा प्रकर्त्तव्या मानवैर्धर्मवत्सलैः।
ईशोऽपि श्रद्धया साध्यस्तेन श्रद्धा विशिष्यते॥ ६॥

अन्यथा निष्फलं सर्वं श्रद्धाहीनं तु भारत!। तस्मात्समाश्रयेद्भक्तिरुद्रस्य परमेष्ठिनः

तेषां हि सफलं जन्म येषां भक्तिरचञ्चला।
सा चैव त्रिविधा भक्तिः सात्त्विकी राजसी तथा॥ ११॥
तामसी सर्वलोकस्य त्रिविधं च फलं लभेत्।
ते कर्मफलसंयोगादावर्त्तन्ते पुनः पुनः॥ १२॥

जन्मान्तरशतैस्तेषांज्ञानिनां देवयाजिनाम्। देवत्रयेभवेद्भक्तिःक्षयात्पापस्य कर्मणः
ईशानात्तु पुनर्मोक्षो जायते छिन्नसंशयः। ये पुनर्नर्मदातीरमाश्रित्यद्विजपुङ्गवाः॥

त्रयीमार्गमसन्दिग्धास्ते यान्तिपरमां गतिम्।
एकाग्रमसो ये तु शङ्करं शिवमव्ययम्॥ १५॥
अर्चयन्तीह निरताः क्षिप्रं सिद्ध्यन्ति ते जनाः।
कालेन महता सिद्धिर्जायतेऽन्यत्र देहिनाम्॥ १६॥
नर्मदायाःपुनस्तीरे क्षिप्रं सिद्धिरवाप्यते।
षड्भिर्वर्षैस्तु सिध्यन्ति ये तु साङ्ख्यविदो जनाः॥ १७॥
वैष्णवा ज्ञानसम्पन्नास्तेऽपि सिद्ध्यन्ति चाऽग्रतः।
सर्वयोगविदो ये च समुद्रमिव सिन्धवः॥ १८॥

एकीभवन्तिकल्पान्ते योगेमाहेश्वरे गताः। सर्वेषामेवयोगानां योगोमाहेश्वरो वर
तमासाद्यविमुच्यन्ते येऽपिस्युपापयोनयः। शिवमर्च्यनदीकूलेजायन्तेतेन योनिषु
गतिरेषा दुरारोहा सर्वपापक्षयङ्करी। मुच्यन्ते मंक्षु संसाराद्रेवामाश्रित्य जन्तवः

तस्मात्स्नायीभवेन्नित्यं तथा भस्मविलेपनः।

नर्मदातीरमासाद्य क्षिप्रं सिद्धिमवाप्नुयात् ॥ २२ ॥
त्रिकालं पूजयेच्छान्तो यो नरो लिङ्गमादरात् ।
सर्वरोगविनिर्मुक्तः स याति परमां गतिम् ॥ २३ ॥
षड्भिः सिद्ध्यति मासैस्तु यद्यपि स्यात्स पापकृत् ।
ये पुनः शुद्धमनसो मासैः शुध्यन्ति ते त्रिभिः ॥ २४ ॥
यथा दिनकरस्पृष्टं हिमंशैलाद्विशीर्यते । तद्वद्विलीयते पापं स्पृष्टं भस्मकणैः शुभैः
सद्योजातादियुक्तेन भस्मनायेसमुक्षिताः । सूर्यवद्विमलाभान्तिद्विजारुद्रपरायणाः
वैनतेयभयत्रस्ता यथा नश्यन्ति पन्नगाः ।
तद्वत्पापानि नश्यन्ति भस्मनाऽभ्युक्षितानि ह ॥ २७ ॥
नर्मदातोयपूतेन भस्मनोधूलयन्ति ये । सद्यस्तेपापसङ्घाच्च मुच्यन्तेनाऽत्र संशयः
व्रतं पाशुपतंभक्त्यायथोक्तंपालयन्तिये । शूद्रान्नेनविहीनास्तुतेयान्ति परमांगतिम्
अमृतं ब्राह्मणस्याऽन्नं क्षत्त्रियान्नं पयःस्मृतम् ।
वैश्यान्नमन्नमेव स्याच्छूद्रान्नं रुधिरं स्मृतम् ॥ ३० ॥
शूद्रान्नरससम्पुष्टाये म्रियन्तेद्विजोत्तमाः । ते तपोज्ञानहीनास्तुकाकागृध्राभवन्तिते
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् ॥ ३२ ॥
विशेषाद्यातिधर्मेणतपोलौल्यंसमाश्रिताः। नरकंयान्त्यसंदिग्धमित्येवंशङ्करोऽब्रवीत्
ईदृग्रूपाश्चयेविप्राः पाशुपत्ये व्यवस्थिताः । ते महत्पापसङ्घातं दहन्त्येव न संशयः
विडम्बेनचसंयुक्तालौलुप्येनचपीडिताः । असम्भाष्याअसंग्राह्याइत्येवंश्रुतिनोदना
मातापितृकृतैर्दोषैरन्ये केचित्स्वकर्मजैः । नष्टाज्ञानावलेपेन अहङ्कारेण चाऽपरे ॥
शाङ्करे प्रस्थिता धर्मे ये स्मृत्यर्थबहिष्कृताः ।
क्लिश्यमानास्तु कालेन ते यान्ति परमां गतिम् ॥ ३७ ॥
अश्रद्दधानाः पुरुषा मूर्खा दम्भविवर्द्धिताः ।
न सिद्ध्यन्ति दुरात्मानः कुदृष्टंतीर्थकीर्तनाः ॥ ३८ ॥

महाभाग्येऽपि तीर्थस्य शाङ्करं व्रतमास्थिताः ।
वियोनिं यान्त्यसन्दिग्धं लौलुप्येन समन्विताः ॥ ३६ ॥

न तीर्थैर्नचदानैश्चदुष्कृतं हि विलुप्यते । आज्ञानाच्च प्रमादाच्च कृतंपापम्विनश्यति
एवं ज्ञात्वातुविधिना वर्त्तितव्यंद्विजातिभिः । परम्ब्रह्म जपद्भिश्चवर्त्तितव्यं मुहुर्मुहुः
ऊर्ध्वरूपं विरूपाक्षं योऽधीतेरुद्रमेव च । ईशानंपश्यते साक्षात्षण्मासात्सङ्गवर्जितः
संहिताया दशावृत्तीर्यः करोति सुसंयतः । नर्मदातटमाश्रित्य समुच्येत्सर्वपातकैः

पुराणसंहितां वापि शैवीं वा वैष्णवीमपि ।
यः पठेन्नर्मदातीरे शिवाग्रे स शिवात्मकः ॥ ४४ ॥

आभूतसङ्क्षयं यावत्स्वर्गलोके महीयते । संसारव्यसनं हातुं पुरा प्रोक्तंतु नन्दिना
देवर्षिसिद्धगन्धर्वसमवायेशिवालये । नन्दिगीतामिमांराजञ्छृणुष्वैकमनाःशुभाम्

स्वर्गमोक्षप्रदां पुण्यां संसारभयनाशिनीम् ॥ ४७ ॥

संसारगह्वरगुहां प्रविहातुमेतां चेदिच्छथ प्रतिपदं भवतापखिन्नाः ।
नानाविधैर्निजकृतैर्बहुकर्मपाशैर्बद्धाः सुखाय शृणुतैकहितं मयोक्तम् ॥४८॥

शक्र वक्रगतिं मा गा मा कृथा यमयातनाम् । चेतःप्रचेतःशमयलौलुप्यंत्यजवित्तप
दीनानाथविशिष्टेभ्यो धनं सर्वं परित्यज । यदि संसारजलधेर्वीचीप्रेङ्खोल्लनातुरः

जन्मोद्विग्नं मृतेस्त्रस्तं ग्रस्तं कामादिभिर्नरम् ।
त्रस्तं यो न यमादिभ्यः पिनाकी पाति पावनः ॥ ५१ ॥
मा धेहि गर्वं कीनाशहास्यं यास्यसि पीडयन् ।
प्राणिनं सर्वशरणं तद्भावि शरणं तव ॥ ५२ ॥
कालः करालको बालः को मृत्युः को यमाधमः ।
शिव विष्णु पराणां हि नराणां किं भयं भवेत् ॥ ५३ ॥

भवभारार्तजन्तूनां रेवातीरनिवासिनाम् । भर्गश्च भगवांश्चैव भवभीतिविभेदनौ

शिवं भज शिवं ध्याय शिवं स्तुहि शिवं यज ॥
शिवं नम वराक! त्वं ज्ञानं मोक्षं यदीच्छसि ॥ ५५ ॥

पठ पञ्चाननंशास्त्रं मन्त्रं पञ्चाक्षरं जप । धेहि पञ्चात्मकं तत्त्वं यज पञ्चाननं परम् ॥

किं तैः कर्मगणैः शोच्यैर्नानाभावविशेषितैः ।
यदि पञ्चाननः श्रीमान्सेव्यते सर्वथा शिवः ॥ ५७ ॥

किं संसारगजोन्मत्तवृंहितैर्निभृतैरपि । यदि पञ्चाननोदेवो भावगन्धोपसेवितः ॥
रे मूढ! किं विषादेन प्राप्यकर्मकदर्थनाम् । भवानीवल्लभंभीमं जप त्वं भयनाशनम्
नर्मदातीरनिलयं दुःखौघविलयङ्करम् । स्वर्गमोक्षप्रदं भर्गं भज मूढ सुरेश्वरम् ॥

विहाय रेवां सुरसिन्धुसेव्यां तत्तीरसंस्थञ्च हरं हरिं च ।
उन्मत्तवद्भावविवर्जितस्त्वं क्व यासि रे मूढ! दिगन्तराणि ॥ ६१ ॥

भज रेवाजलं पुण्यं यजरुद्रं सनातनम् । जपपञ्चाक्षरींविद्यां व्रजस्थानंचवाञ्छितम्

क्लेशयित्वा निजं कायमुपायैर्बहुभिस्तु किम् ।
भज रेवां शिवम्प्राप्य सुखसाध्यं परम्पदम् ॥ ६३ ॥
एवं कैलासमासाद्य नन्दी स शिवसन्निधौ ।
जगौ यल्लोकपालानां तन्मयोक्तं तवाऽधुना ॥ ६४ ॥

मार्कण्डेय उवाच

स्नानदानपरो यस्तु नित्यं धर्ममनुव्रतः । नर्मदातीरमाश्रित्य मुच्यते सर्वपातकैः ॥

विधिहीनो जपेन्नित्यं वेदान्सर्वाञ्छतं समाः ।
मृत्युलाङ्गल्यजाप्येन समो योऽप्यधिको गुणैः ॥ ६६ ॥

बीजयोन्यविशुद्धस्तुयथा रुद्रंनविन्दति । तथा लाङ्गलमन्त्रोऽपिनतिष्ठतिगतायुषि
गायत्रीजपसंयुक्तः संयमीह्यधिकोगुणैः । अग्निमीलेइषेत्वोवाअग्नआयाहिनित्यदा

शन्नो देवीति कूलस्थो जपेन्मुच्येत किल्बिषैः ॥ ६८ ॥
साङ्गोपाङ्गांस्तथा वेदाञ्जपन्नित्यं समाहितः ।
न तत्फलमवाप्नोति गायत्र्या संयमी यथा ॥ ७० ॥

रुद्राध्यायंसकृज्जप्त्वाविप्रोवेदसमन्वितः ।मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति

अन्यद्वै जप्यसंस्थानं सूक्तमारण्यकं तथा ।

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ७२ ॥
यत्किञ्चित्क्रियते जाप्यं यच्च दानं प्रदीयते । नर्मदाजलमाश्रित्यतत्सर्वंचाक्षयंभवेत्
एवंविधैर्व्रतैर्नित्यं नर्मदां ये समाश्रिताः । ते मृता वैष्णवंयान्तिपदंवाशैवमव्ययम्
सत्यलोकं नराः केचित्सूर्यलोकं तथापरे । अप्सरोगणसम्वीतायावदाभूतसंप्लवम्
एवं वै वर्तमानेऽस्मिँल्लोकेतुनृपपुङ्गव! । ऋषीणांदशकोट्यस्तुकुरुक्षेत्रनिवासिनाम्
मया सहमहाभागनर्मदातटमाश्रिताः । फलमूलकृताहाराअर्चयन्तःस्थिताःशिवम्
तच्चवर्षशतंदिव्यंकालसंख्यानुमानतः । षड्विंशतिसहस्राणितानि मानुषसङ्ख्यया
ततस्तस्यामतीतायांसंध्यायांनृपसत्तम! । शेषं मानुष्यमेकंतुकालेवर्षशतं स्थितम्
ततोऽभवदनावृष्टिर्लोकक्षयकरीतदा । यया यातं जगत्सर्वं क्षयं भूयो हि दारुणम्
ये पूर्वमिह संसिद्धा ऋषयो वेदपारगाः । तेषां प्रभावाद्भगवान्ववर्ष बलवृत्रहा ॥
महती भूरिसलिला समन्ताद्वृष्टिराहिता ।
ततो वृष्ट्यां तु तेषां वै वर्तनं समजायत ॥ ८२ ॥
श्यामाकेङ्गुदबिल्वाद्यैर्नर्मदातीरमाश्रितैः ।
नीयते स महान्कालो महासिद्धमभीप्सुभिः ॥ ८३ ॥
पुनर्युगान्ते संप्राप्ते किञ्चिच्छेषे कलौयुगे । निःशेषमभवत्सर्वंशुष्कंस्थावरजङ्गमम्
निर्वृक्षौषधगुल्मं च तृणवीरुद्विवर्जितम् । अनावृष्टिहतं सर्वं भूमण्डलमभूद्भृशम् ॥
ततस्ते ऋषयः सर्वे क्षुत्तृषार्ताः सहस्रशः । युगस्वभावमाविष्टा हीनसत्त्वाभवन्नृप
नष्टहोमस्वधाकारे युगान्ते समुपस्थिते ।
किं कार्यं क्व नु यास्यामः कोऽस्माकं शरणं भवेत् ॥ ८७ ॥
तानहं प्रत्युवाचेदं मा भैष्टेति पुनः पुनः । ईदृग्विधा मया दृष्टा बहवःकालपर्ययाः
नर्मदातीरमाश्रित्य ते सर्वे गमिता मया । एषा हि शरणं देवी संप्राप्ते हि युगक्षये
नान्या गतिरिहास्माकं विद्यते द्विजसत्तमाः! ।
जनित्री सर्वभूतानां विशेषेण द्विजोत्तमाः ॥ ९० ॥
पितामहा ये पितरो ये चान्ये प्रपितामहाः ।

ते समस्ता गताः स्वर्गं समाश्रित्य महानदीम् ॥ ६१ ॥
भृग्वाद्याः सप्त ये त्वासन्मम पूर्वपितामहाः ।
धौम्रृणी च महाभागा मम भार्या शुचिस्मिता ।
मनस्वती च या माता भार्गवोऽङ्गिरसस्तथा ॥ ६२
पुलस्त्यः पुलहश्चैवव सिष्ठात्रेयकाश्यपाः । तथान्येचमहाभागानियमव्रतचारिणः
अन्य च शतसाहस्रा अत्र सिद्धिं समागताः ॥ ६३ ॥
तस्मादियं महाभागा न मोक्तव्या कदाचन ।
नान्या काचिन्नदी शक्ता लोकत्रयफलप्रदा ॥ ६४ ॥
द्वन्द्वैरनेकैर्बहुभिः क्षुत्तृषाद्यैर्महाभयैः । मुच्यन्ते नराः सद्यो नर्मदातीरवासिनः ॥
तस्मात्सर्वप्रयत्नेन सेवितव्या सरिद्वरा । वाञ्छद्भिः परमं श्रेय इह लोके परत्र च
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे श्रीनर्मदामाहात्म्यवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

### नर्मदास्तोत्रवर्णनम्

श्रीमार्कण्डेय उवाच

एतच्छ्रुत्वा वचो राजन्संहृष्टा ऋषयोऽभवन् ।
नर्मदा स्तोतुमारब्धाः कृताञ्जलिपुटा द्विजाः ॥ १ ॥
नमोऽस्तु ते पुण्यजले नमोमकरगामिनी ।
नमस्ते पापमोचिन्यै नमो देवि! वरानने! ॥ २ ॥
नमोऽस्तु ते पुण्यजलाश्रये! शुभे! विशुद्धसत्त्वे! सुरसिद्धसेविते ।
नमोस्तु ते तीर्थगणैर्निषेविते नमोऽस्तु रुद्राङ्गसमुद्भवे! वरे ॥ ३ ॥

नमोऽस्तु ते देवि! समुद्रगामिनि! नमोनतु ते देवि वरप्रदेऽस्तशिवे ।
नमोऽस्तु लोकद्वयसौख्यदायिनि!ह्यनेकभूतौघसमाश्रितेऽनघे ॥ ४ ॥
सरिद्वरे! पापहरे! विचित्रिते! गन्धर्वयक्षोरगसेविताङ्गे ।
सनातनि! प्राणिगणानुकम्पिनि! मोक्षप्रदे! देवि! विधेहि शं नः ॥ ५ ॥
महागजौघैर्महिषैर्वराहैः संसेविते देवि महोर्मिमाले! ।
नताः स्म सर्वे वरदे! सुखप्रदे! विमोचयास्मान्पशुपाशबन्धात् ॥ ६
पापैरनेकैरशुभैर्विबद्धा भ्रमन्ति तावन्नरकेषु मर्त्याः ।
महानिलोद्भूततरङ्गभूतं यावत्तवाम्भो हि न संस्पृशन्ति ॥ ७ ॥
अनेकदुःखौघभयार्दितानां पापैरनेकैरभिवेष्टितानाम् ।
गतिस्त्वमम्भोजसमानवक्त्रे द्वन्द्वैरनेकैरपि सम्वृतानाम् ॥ ८ ॥
नद्यश्च पूता विमला भवन्ति त्वां देवि! सम्प्राप्य न संशयोऽत्र ।
दुःखातुराणामभयं ददासि शिष्टैरनेकैरभिपूजिताऽसि ॥ ९ ॥
स्पृष्टं करैश्चन्द्रमसो रवेश्च तदेव दद्यात्परमं पदं तु ।
यत्रोपलाः पुण्यजलाप्लुतास्ते शिवत्वमायान्ति किमत्र चित्रम्! ॥ १० ॥
भ्रमन्ति तावन्नरकेषु मर्त्या दुःखातुराः पापपरीतदेहाः
महानिलोद्भूततरङ्गभङ्गं यावत्तवाम्भो न हि संश्रयन्ति ॥ ११ ॥
म्लेच्छाः पुलिन्दास्त्वथ यातुधानाः पिबन्ति येऽम्भस्तव देवि! पुण्यम्
मुक्ता भवन्तीह भयात्तु घोरान्निःसंशयं तेऽपि किमत्र चित्रम् ॥ १२ ॥
सरांसि नद्यः क्षयमभ्युपेता घोरे युगेऽस्मिन्हि कलौ प्रदूषिते ।
त्वं भ्राजसे देवि! जलौघपूर्णा दिवीव नक्षत्रपथे च गङ्गा ॥ १३ ॥
तव प्रसादाद्वरदे वरिष्ठेकालं यथेमं परिपालयित्वा ।
यामोऽथ रुद्रं तव सुप्रसादाद्वयं तथा त्वं कुरु वै प्रसादम् ॥ १४ ॥
गतिस्त्वमम्बेव पितेव पुत्रांस्त्वं पाहि नो यावदिमंयुगान्तम् ।
काले त्वनावृष्टिहतं सुघोरं यावत्तरामस्तव सुप्रसादात् ॥ १५

पठन्ति ये स्तोत्रमिदं द्विजेन्द्राः शृण्वन्ति ये चापि नराः प्रशान्ताः ।
ते यान्ति रुद्रं वृषसंयुतेन यानेन दिव्याम्बरभूषिताश्च ॥ १६
ये स्तोत्रमेतत्सततं पठन्ति स्नात्वा तु तोये खलु नर्मदायाः ।
अन्ते हि तेषां सरिदुत्तमेयं गतिं विशुद्धामचिराद्ददाति ॥ १७ ॥
प्रातः समुत्थाय तथा शयानो यः कीर्तयेताऽनुदिनं स्तवं च ।
स मुक्तपापः सुविशुद्धदेहः समाश्रयं याति महेश्वरस्य ॥ १८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे श्रीनर्मदामहात्म्ये नर्मदास्तोत्रकथनंनामद्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः

### एकविंशतिकल्पकथानकवर्णनम्

श्रीमार्कण्डय उवाच

एवं भगवती पुण्या स्तुता सा मुनिपुङ्गवैः ।
चिन्तयामास सर्वेषां दास्यामि वरमुत्तमम् ॥ १ ॥
ततः प्रसुप्तांस्ताञ्ज्ञात्वा रात्रौ देवी जगाम ह ।
एकैकस्य ऋषेः स्वप्ने दर्शनं चारुहासिनी ॥ २ ॥
ततोऽर्धरात्रेसंप्राप्तउत्थिताजलमध्यतः । विमलाम्बरसंवीतादिव्यमालाविभूषिता
धृतातपत्रा सुश्रोणी पद्मरागविभूषिता । जगाद माभैरिति तानेकैकंतुपृथक्पृथक्
वसध्वं मम पार्श्वे तु भयं त्यक्त्वा क्षुधादिजम् ॥ ५ ॥
एवमुक्त्वा तदा देवी स्वप्नान्ते तान्महामुनीन् ।
जगामादर्शनं पश्चात्प्रविश्य जलमात्मिकम् ॥ ६ ॥
ततः प्रभाते मुनयो मिथ ऊचुर्मुदान्विताः ।

तथा दृष्टा मया दृष्टा स्वप्ने देवी सुदर्शना ॥ ७ ॥
अभयं दत्तमस्माकं सिद्धिश्चाप्यचिरेण तु । प्रशस्तं दर्शनं तस्यानर्मदायानसंशय
अथान्यदिवसे राजन्मत्स्यानां रूपमुत्तमम् ।
पश्यन्ति सपरीवाराः स्वकीयाश्रमसन्निधौ ॥ ९ ॥
तान्दृष्ट्वा विस्मयाविष्टा मत्स्यांस्तत्र महर्षयः ।
पूजयामासुरव्यग्रा हव्यकव्येन देवताः ॥ १० ॥
तान्मत्स्यसङ्घान्सम्प्राप्य महादेव्याः प्रसादतः ।
सपुत्रदारभृत्यास्ते वर्तयन्ति पृथक्पृथक् ॥ ११ ॥
दिनेदिनेतथाप्येवमाश्रमेषुद्विजातयः । मत्स्यानांसञ्चयंदृष्ट्वाविस्मिताश्चाभवंस्तद
मृतांस्तांस्तु सुपुष्टाङ्गान्पाठीनांश्च विशेषतः ।
द्वारेद्वारे चाश्रमाणां तापसानां युधिष्ठिर! ॥ १३ ॥
हृष्टपुष्टास्तदा सर्वे नर्मदातीरवासिनः । ऋषयस्ते भयं सर्वेतत्यजुः क्षुत्तृषोद्भवम्
ते जपन्तस्तपन्तश्च तिष्ठन्ति भरतर्षभ! । अर्चयन्ति पितृन्देवान्नर्मदातटमाश्रिता
तैर्जपद्भिस्तपद्भिश्च सततं द्विजसत्तमैः । भ्राजते सासरिच्छ्रेष्ठाताराभिर्द्यौर्ग्रहैरिव
तत्र तैर्बहुलैः शुभ्रै ब्राह्मणैर्वेदपारगैः ।
नर्मदा धर्मदा पूर्वं सम्विभक्ता यथाक्रमम् ॥ १७ ॥
ऋषिभिर्दशकोटीभिर्नर्मदातीरवासिभिः । विभक्तेयंविभक्ताङ्गीनर्मदाशर्मदानृणाम्
यज्ञोपवीतैश्च शुभैरक्षसूत्रैश्च भारत! । कूलद्वयेमहापुण्यानर्मदोदधिगामिनी ॥ १९
पृथगायतनैः शुभ्रै लिङ्गै र्वालुकमृण्मयैः । भ्राजते या सरिच्छ्रेष्ठा नक्षत्रैरिव शर्वरी
एवं त ऋषयः सर्वे तर्पयन्तः सुरान्पितृन् । न्यवसन्नर्मदातीरेयावदाभूतसम्प्लवम्
किञ्चिद्गते ततस्तस्मिन्घोरे वर्षशताधिके । अर्धरात्रे तदा कन्याजलादुत्तीर्यभारत
विद्युत्पुञ्जसमाभासा व्यालयज्ञोपवीतिनी ।
त्रिशूलाग्रकरा सौम्या तानुवाचऋषींस्तदा ॥ २३ ॥
आगच्छध्वं मुनिगणा विशध्वं मामयोनिजाम् ।

समेताः पुत्रदारैश्च ततः सिद्धिमवाप्स्यथ ॥ २४ ॥
यस्य यस्य हि या वाञ्छा तस्य तां तां ददाम्यहम् ।
विष्णुं ब्रह्माणमीशानमन्यं वा सुरमुत्तमम् ॥ २५ ॥
तत्रसर्वान्नयिष्यामिप्रसन्नावरदाह्यहम् । प्राणायामपराभूत्वामांविशध्वंसमाहिताः
सह पुत्रैश्च दारैश्च त्यक्त्वाश्रमपदानि च । कालक्षेपोनकर्तव्यःप्रलयोऽयमुपस्थितः
संहारः सर्वभूतानां कल्पदाहः सुदारुणः । एकाहमभवं पूर्वं महाघोरे जनक्षये ॥
शेषा नद्यः समुद्राश्च सर्व एव क्षयंगताः । वरदानान्महेशस्यतेनाहं न क्षयं गता ॥
अमृतः शाश्वतो देवः स्थाणुरीशः सनातनः।
स पूजितः प्रार्थितो वा किं न दद्याद्द्विजोत्तमाः ॥ ३० ॥
एवमुक्त्वा ऋषीन्देवी प्रविवेश जलंततः । कराात्तशूलासादेवीव्यालयज्ञोपवीतिनी
ततस्ते तद्वचः श्रुत्वा विस्मयापन्नमानसाः । अभिवन्द्यचमांसर्वेक्षामयन्तःपुनःपुनः
क्षम्यतां नो यदुक्तं हि वसतां तव संश्रये ।
गृहांस्त्यक्त्वा महाभागाः सशिष्याः सह बान्धवाः ॥ ३३ ॥
जप्त्वा चैकाक्षरं ब्रह्म हृदि ध्यात्वा महेश्वरम् ।
स्नात्वा च मन्त्रपूताभिरथ चाद्भिर्जितव्रताः ॥ ३४ ॥
विविशुर्नर्मदातोयं सपक्षा इव पर्वताः । द्योतयन्तोदिशःसर्वाःकुशहस्ताःसहाग्नयः
गतेषु तेषु राजेन्द्र अहमेकः स्थितस्तदा । अमरेशं समासाद्य पूजयन्नर्मदां नदीम् ॥
अनुभूताः सप्तकल्पा मायूराद्या मया नृप!। प्रसादाद्वेधसः सर्वे रेवया सह भारत
जन्मतोऽद्य दिनं यावन्न जानेऽस्याः पुरा स्थितिम् ॥ ३८ ॥
इयं हि शाङ्करी शक्तिः कला शम्भोरिलाह्वया ।
नर्मदा दुरितध्वंसकारिणी भवतारिणी ॥ ३६ ॥
यदाहमपि नाभूवं पुराकल्पेषु पाण्डव! । चतुर्दशसुकल्पेषु तेष्वियं सुखसंस्थिताः
चतुर्दश पुरा कल्पा न मृता येषु नर्मदा । तानहं सम्प्रवक्ष्यामि देवी प्राहयथा मम
कापिलं प्रथमं विद्धि प्राजापत्यं द्वितीयकम् ।

ब्राह्मं सौम्यं च सावित्रं बार्हस्पत्यं प्रभासकम् ॥ ४२ ॥
माहेन्द्रमग्निकल्पं च जयन्तं मारुतं तथा । वैष्णवं बहुरूपं च ज्योतिषं च चतुर्दश
एते कल्पा मयाऽऽख्याता न मृतायेषुनर्मदा । मायूरं पञ्चदशमंकौर्मं चैवात्रषोडश
बकं मात्स्यं च पाद्मं चवटकल्पंचभारत! । एकविंशतिमंचैतं बाराहं सांप्रतीनक
इमे सप्तमया साकंरेवयापरिशीलिताः । एकविंशतिकल्पास्तु नर्मदायाःशिवांग
सञ्जातायाः नृपश्रेष्ठ मयादृष्टा ह्यनेकशः । कथिता नृपतिश्रेष्ठ! भूयः किं कथयामि

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्य एकविंशतिकल्पकथानकवर्णनंनाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

# चतुर्दशोऽध्यायः

## कालरात्रिकृतजगत्संहरवर्णनम्

युधिष्ठिर उवाच

ततस्त ऋषयःसर्वेमहाभागास्तपोधनाः । गतास्तुपरमं लोकं ततः किंजातमद्भुत

श्रीमार्कण्डय उवाच

ततस्तेषु प्रयातेषु नर्मदातीरवासिषु । बभूव रौद्रसंहारः सर्वभूतक्षयङ्करः ॥ २

कैलासशिखरस्थं तु महादेवं सनातनम् ।
ब्रह्माद्याः प्रास्तुवन्देवमृग्यजुःसामभिः शिवम् ॥ ३ ॥

संहरत्वं जगद्देव!सदेवासुरमानुषम् । प्राप्तोयुगसहस्रान्तःकालः संहरणक्षमः ॥ ४

मद्रूपं तु समास्थाय त्वया चैतद्विनिर्मितम् ।
वैष्णवीं मूर्तिमास्थाय त्वयैतत्परिपालितम् ॥ ५ ॥
एका मूर्तिस्त्रिधा जाता ब्राह्मी शैवी च वैष्णवी ।

सृष्टिसंहाररक्षार्थं भवेदेवं महेश्वर! ॥ ६ ॥

एतच्छ्रुत्वावचस्तथ्यं विष्णोश्चपरमेष्ठिनः । सगणःसपरीवारःसहताभ्यांसहोमया

सप्तलोकान्विभिद्येमान्भगवान्नीललोहितः ।

भूराद्यब्रह्मलोकान्तं भित्त्वाऽण्डं परतः परम् ॥ ८ ॥

शैवं पदमजं दिव्यमाविशत्सह तैर्विभुः । न तत्र वायुर्नाकाशंनाग्निस्तत्र न भूतलम्

यत्र संतिष्ठते देव उमया सह शङ्करः । न सूर्यो न ग्रहास्तत्र न ऋक्षाणिदिशस्तथा

न लोकपाला न सुखं न च दुःखं नृपोत्तम! ॥ ११ ॥

ब्राह्मं पदं यत्कवयो वदन्तिशैवं पदं यत्कवयो वदन्ति ।

क्षेत्रज्ञमीशं प्रवदन्ति चान्ये साङ्ख्याश्च गायन्ति किलादिमोक्षम् ॥ १२

यद्ब्रह्म आद्यं प्रवदन्ति केचिद्यं सर्वमीशानमजं पुराणम् ।

तमेकरूपं तमनेकरूपमरूपमाद्यं परमव्ययाख्यम् ॥ १३ ॥

अवर्णमप्यर्थमनामगोत्रं तुर्यं पदं यत्कवयो वदन्ति ।

ध्यानार्थविज्ञानमयं सुसूक्ष्ममात्मस्थमीशानवरं वरेण्यम् ॥ १४ ॥

ततस्त्रयस्ते भगवन्तमीशं सम्प्राप्य सङ्क्षिप्य भवन्त्यथैकम् ।

पृथक्स्वरूपैस्तु पुनस्त एव जगत्समस्तं परिपालयन्ति ॥ १५ ॥

---

संहारं सर्वभूतानां रुद्रत्वे कुरुते प्रभुः ।

विष्णुत्वे पालयेल्लोकान्ब्रह्मत्वे सृष्टिकारकः ॥ १६ ॥

---

प्रकृत्या सह संयुक्तः कालो भूत्वा महेश्वरः ।

विश्वरूपा महाभागा तस्य पार्श्वे व्यवस्थिता ॥ १७ ॥

यामाहुः प्रकृतिं तज्ज्ञाःपदार्थानांविचक्षणाः । पुरुषत्वेप्रकृतित्वे च कारणं परमेश्वरः

तस्मादेतज्जगत्सर्वंसमुद्भूतं चराचरम् । तस्मिन्नेवलयं याति युगान्ते समुपस्थिते

भगलिङ्गाङ्कितं सर्वं व्याप्तं वै परमेष्ठिना । भगरूपो भवेद्विष्णुर्लिङ्गरूपो महेश्वरः ॥

भाति सर्वेषु लोकेषु गीयते भूर्भुवादिषु । प्रविष्टः सर्वभूतेषुतेनविष्णुर्भगः स्मृतः

विशनाद्विष्णुरित्युक्तः सर्वदेवमयो महान् । भासनाद्गमनाच्चैवभगसञ्ज्ञाप्रकीर्तिता

ब्रह्मादिस्तम्बपर्यन्तं यस्मिन्नेतिलयंजगत् । एकभावंसमापन्नंलिङ्गंतस्माद्विदुर्बुध
महादेवस्ततो देवीमाह पार्श्वे स्थितां तदा ।
संहरस्व जगत्सर्वं मा विलम्बस्व शोभने! ॥ २४ ॥
त्यज सौम्यमिदंरूपंसितचन्द्रांशुनिर्मलम् । रौद्रंरूपं समास्थायसंहरस्व चराचर
रौद्रैर्भूतगणैर्घोरैर्देवि त्वं परिवारिता । जीवलोकमिमं सर्वं भक्षयस्वाम्बुजेक्षणे
ततोऽहं मर्दयिष्यामि प्लावयिष्ये तथा जगत् ।
कृत्वा चैकार्णवं भूयः सुखं स्वप्स्ये त्वया सह ॥ २७ ॥

श्रीदेव्युवाच

नाहं देवजगच्चैतत्संहरामि महाद्युते । अम्बा भूत्वा विचेष्टं न भक्षयामिभृशातुर
स्त्रीस्वभावेन कारुण्यं करोति हृदयं मम । कथं वै निर्दहिष्यामिजगदेतज्जगत्पते
तस्मात्त्वं स्वयमेवेदं जगत्संहर शङ्कर! । अथैवमुक्तस्तां देवीं धूर्जटिर्नीललोहितः
क्रुद्धो निर्भर्त्सयामास हुङ्कारेण महेश्वरीम् ।
ॐ हुंफट् त्वं स इत्याह कोपाविष्टैरथेक्षणैः ॥ ३१ ॥
हुङ्कारिताविशालाक्षीपीनोरुजघनस्थला । तत्क्षणाच्चाभवद्रौद्राकालरात्रीवभार
हुङ्कुर्वती महानादैर्नादयन्ती दिशो दश । व्यवर्धतमहारौद्रा विद्युत्सौदामिनीयथ
विद्युत्सम्पातदुष्प्रेक्ष्या विद्युत्सङ्घातचञ्चला ।
विद्युज्ज्वालाकुला रौद्रा विद्युदग्निनिभेक्षणा ॥ ३४ ॥
मुक्तकेशी विशालाक्षीकृशग्रीवा कृशोदरी । व्याघ्रचर्माम्बरधराव्यालयज्ञोपवीति
वृश्चिकैरग्निपुञ्जाभैर्गोनसैश्च विभूषिता । त्रैलोक्यंपूरयामासविस्तारेणोच्छ्रयेण
भासुराङ्गा तु सम्वृत्ता कृष्णसर्पैककुण्डला ।
चित्रदण्डोद्यतकरा व्याघ्रचर्मोपसेविता ॥ ३७ ॥
व्यवर्धत महारौद्राजगत्संहारकारिणी । सृक्किणीलेलिहानाचक्रूरफूत्कारकारि
व्यात्तास्या घुर्घुरारावा जगत्सङ्क्षोभकारिणी ।
खेलद्भूतानुगा क्रूरा निःश्वासोच्छ्वासकारिणी ॥ ३९ ॥

जाताट्टहासादुर्नासावह्निकुण्डसमेक्षणा । प्रोद्यत्किलकिलारावाद्दाहसकलंजगत्
दह्यमानाः सुरास्तत्र पतन्ति धरणीतले । पतन्ति यक्षगन्धर्वाः सकिन्नरमहोरगाः
पतन्ति भूतङ्घसघाश्च हाहाहैहैविराविणः ।बुम्बापातैःसनिर्यातैरुदितार्तस्वरैरपि ।

व्याप्तमासीत्तदा विश्वं त्रैलोक्यं सचराचरम् ।
सम्पतद्भिः पतद्भिश्च ज्वलद्भूतगणैर्मही ॥ ४३ ॥

जातैश्चटचटाशब्दैः पतद्भिर्गिरिसानुभिः । तत्र रौद्रोत्सवे जातारुद्रानन्दविवर्धिनी
विहिंसमानाभूतानिचर्वमाणाचरानपि । तत्तद्गन्धमुपादाय शिवारावविराविणी
गलच्छोणितधाराभिमुखादिग्धकलेवरा। चण्डशीलाऽभवच्चण्डीजगत्संहारकर्मणि

येऽपि प्राप्ता महर्लोकं भृग्वाद्याश्च महर्षयः ।
तेऽपि नश्यन्ति शतशो ब्रह्मक्षत्रविशादयः ॥ ४७ ॥

देवासुराभयत्रस्ताःसयक्षोरगराक्षसाः । विशन्तिकेऽपिपातालं लीयन्तेचगुहादिषु

सा च देवी दिशः सर्वा व्याप्य मृत्युरिव स्थिता ।
युगक्षयकरे काले देवेन विनियोजिता ॥ ४६ ॥
एकापि नवधा जाता दशधा दशधा तथा ।
चतुःषष्टिस्वरूपा च शतरूपाट्टहासिनी ॥ ५० ॥

जज्ञे सहस्ररूपाचलक्षकोटितनुः शिवा । नानारूपायुधाकारानानावादनचारिणी
एवंरूपाऽभवद्देवीशिवस्यानुज्ञया नृप! । दिक्षु सर्वासु गगने विकटायुधशीलिनः

रुन्धन्तो नश्यमानांस्तान्गणा माहेश्वराः स्थिताः ।
विचरन्ति तया सार्द्धं शूलपट्टिशपाणयः ॥ ५३ ॥

ततो मातृगणाः केचिद्विनायकगणैःसह । व्यवर्धन्त महारौद्राजगत्संहारकारिणः

ततस्तस्या व्यवर्धन्त दंष्ट्राः कुन्देन्दुसन्निभाः ।
योजनानां सहस्राणि अयुतान्यर्बुदानि च ॥ ५५ ॥
दंष्ट्रावलिः कररुहाः क्रूरास्तीक्ष्णाश्च कर्कशाः ।
वियद्दिशो लिखन्त्येव सप्तद्वीपां वसुन्धराम् ॥ ५६ ॥

तस्यादंष्ट्राभिसम्पातैश्चूर्णिताश्चनपर्वताः । शिलासञ्चयसङ्घाताविशीर्यन्तेसहस्रशः
हिमवान्हेमकूटश्च निषधो गन्धमादनः । माल्यवांश्चैवनीलश्च श्वेतश्चैव महागिरिः
मेरुमध्यमिलापीठंसप्तद्वीपं च सार्णवम् । लोकालोकेन सहितं प्राकम्पत नृपोत्तम!

दंष्ट्राशनिविस्पृष्टाश्च विशीर्यन्ते महाद्रुमाः ।
उत्पातैश्च दिशो व्याप्ताघोररूपैः समन्ततः ॥ ६० ॥
तारा ग्रहगणाः सर्वे ये च वैमानिका गणाः ।
शिवासहस्रैराकीर्णा महामातृगणैस्तथा ॥ ६१ ॥
सा चचार जगत्कृत्स्नं युगान्ते समुपस्थिते ।
भ्रमद्भिश्च ब्रुवद्भिश्च क्रोशद्भिश्च समन्ततः ॥ ६२ ॥
प्रमथद्भिर्ज्वलद्भिश्च रौद्रै व्याप्तादिशो दश ।
विस्तीर्णं शैलसङ्घातं विघूर्णितगिरिद्रुमम् ॥ ६३ ॥

प्रभिन्नगोपुरद्वारं केशशुष्कास्थिसङ्कुलम् । प्रदग्धग्रामनगरं भस्मपुञ्जाभिसम्वृतम्
चिताधूमाकुलं सर्वं त्रैलोक्यं सचराचरम् । हाहाकाराकुलंसर्वमहहस्वननिस्वनम्

जगदेतदभूत्सर्वमशरण्यं निराश्रयम् ॥ ६६ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये कल्पानुकथने कालरात्रिकृतजगत्संहरणवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥

—:※:—

# पञ्चदशोऽध्यायः

## सृष्टिसंहरणसंरम्भवर्णनम्

श्रीमार्कण्डेय उवाच

ततो मातृसहस्रैश्च रौद्रैश्च परिवारिता । कालरात्रिर्जगत्सर्वं हरते दीप्तलोचना ॥

ततस्ता मातरो घोरा ब्रह्मविष्णुशिवात्मिकाः ।
वाय्विन्द्रानलकौबेरा यमतोयेशशक्तयः ॥ २ ॥
स्कन्दक्रोडनृसिंहानां विचरन्त्यो भयानकाः ।
चक्रशूलगदाखड्गवज्रशक्त्यृष्टिपट्टिशैः ॥ ३ ॥

खट्वाङ्गैरुल्मुकैर्दीप्तैर्व्यचरन्मातरःक्षये । उमासंनोदिताःसर्वाःप्रधावन्त्योदिशोदश
तासांचरणविक्षेपैर्हुङ्कारोद्गारनिस्वनैः । त्रैलोक्यमेतत्सकलं विप्रदग्धं समन्ततः

हाहारवाक्रन्दितनिस्वनैश्च प्रभिन्नरथ्यागृहगोपुरैश्च ।
बभूव घोरा धरणी समन्तात्कपालकेशाकुलकर्बुराङ्गी ॥ ६ ॥

यदेतच्छतसाहस्रं जम्बूद्वीपं निगद्यते । सर्वमेव तदुच्छन्नं समाधृष्य नृपोत्तम!॥ ७ ॥

जम्बु शाकं कुशं क्रौञ्चं गोमेदं शाल्मलिस्तथा ।
पुष्करद्वीपसहिता ये च पर्वतवासिनः ॥ ८ ॥

ते ग्रस्ता मृत्युना सर्वे भूतैर्मातृगणैस्तथा । महासुरकपालैश्च मांसमेदोवसोत्कटैः
महानादपरैर्घोरैर्वारुणीगन्धमोहितैः । ज्वालासहस्रसम्वीताविद्युज्ज्वलितकुण्डला
रुधिरोद्गारशोणाङ्गीमहामायासुभीषणा । पिबन्ती रुधिरं तत्रमहामांसवसाप्रिया

कपालहस्ता विकटा भक्षयन्ती सुरासुरान् ।
नृत्यन्ती च हसन्ती च विपरीता महारवा ॥ १२ ॥
त्रैलोक्यसन्त्रासकरी विद्युत्संस्फोटहासिनी ।
सप्तद्वीपसमुद्रान्तां भक्षयित्वा च मेदिनीम् ॥ १३ ॥

ततः स्वस्थानमगमद्यत्र देवो महेश्वरः । नर्मदातीरमाश्रित्यावसन्मातृगणैः सह ॥
अमराणां कटे तुङ्गे नृत्यन्ती हसितानना । अमरा देवताः प्रोक्ताःशरीरंकटमुच्यते

तैः कटैरावृतो यस्मात्पर्वतोऽयं नृपोत्तम ।
छिन्नभिन्नास्थिनिकरैर्वसामेदोस्रविप्लुतैः ॥ १६ ॥

अमरंकट इत्येवं तेन प्रोक्तो मनीषिभिः । महापवित्रो लोकेषुशम्भुना सविनिर्मितः
नित्यंसन्निहितस्तत्रशङ्करोह्य मयासह । ततोऽहं नियतस्तत्र तस्य पादाग्रसंस्थितः

प्रह्वः प्रणतभावेन स्तौमि तं नीललोहितम् ।
ततस्तालकसंपातैर्गणैर्मातृगणैः सह ॥ १६ ॥

सम्प्रनृत्यति संहृष्टो मृत्युना सह शङ्करः । खट्वाङ्गै रुल्मुकैश्चैव पट्टिशैःपरिघैस्तथा
मांसमेदोवसाहस्ताहृष्टानृत्यन्तिसङ्घशः। वामनाजटिलामुण्डालम्बग्रीवोष्ठमूर्द्धजाः

महाशिश्नोदरभुजा नृत्यन्ति च हसन्ति च ।
विकृतैराननैर्घोरैर्भुजोल्बणमुखादिभिः ॥ २२ ॥

अमरं कण्टकं चक्रुःप्राप्तेकालविपर्यये । तेषां मध्ये महाघोरं जगत्सन्त्रासकारणम्

मृत्युं पश्यामि नृत्यन्तं तडित्पिङ्गलमूर्द्धजम् ।
तस्य पार्श्वे स्थितां देवीं विमलाम्बरभूषिताम् ॥ २४ ॥
कुण्डलोद्घुष्टगण्डां तां नागयज्ञोपवीतिनीम् ।
विचित्रैरुपहारैश्च पूजयन्तीं महेश्वरम् ॥ २५ ॥
अपश्यं नर्मदां तत्र मातरं विश्ववन्दिताम् ।
नानातरङ्गां सावर्तां सुवेलार्णवसन्निभाम् ॥ २६ ॥

महासरः सरित्पातैरदृश्यां दृश्यरूपिणीम् । वन्द्यमानांसुरैःसिद्धैर्मुनिसङ्घैश्चभारत

एतस्मिन्नन्तरे घोरां सप्तसप्तकसञ्ज्ञिताम् ।
महावीच्यौघफेनाढ्यां कुर्वन्तीं सजलं जगत् ॥ २८ ॥

दृष्टवान्नर्मदां देवीं मृगकृष्णाम्बरां पुनः । सधूमाशनिनिर्हादैर्वहन्तीं सप्तधा तदा ॥
इति संहारमतुलं दृष्टवान्राजसत्तम! । नष्टचन्द्रार्ककिरणमभूदेतच्चराचरम् ॥ ३० ॥

महोत्पातसमुद्भूतंनष्टनक्षत्रमण्डलम् । अलातचक्रवत्तूर्णमशेषंभ्रामयंस्ततः ॥ ३१ ॥
विमानकोटिसङ्कीर्णःसकिन्नरमहोरगः । महावातःसनिर्घातोयेनाकम्पच्चराचरम्
रुद्रवक्त्रात्समुद्भूतःसम्वर्तोनामविश्रुतः । वायुःसंशोषयामासविततन्सप्तसागरान्

उद्धूलिताङ्गः कपिलाक्षमूर्द्धजो जटाकलापैरवबद्धमूर्द्धजः ।
महारवो दीप्तविशालशूलधृक्सपातु युष्मांश्च दिने दिने हरः ॥ ३४ ॥
शूली धनुष्मान्कवची किरीटी श्मशानभस्मोक्षितसर्वगात्रः ।
कपालमालाकुलकण्ठनालो महाहिसूत्रैरवबद्धमौलिः ॥ ३५ ॥
स गोनसौघैः परिवेष्टिताङ्गो विषाग्निचन्द्रामरसिन्धुमौलिः ।
पिनाकखट्वाङ्गकरालपाणिः स कृत्तिवासा डमरुप्रणादः ॥ ३६ ॥
स सप्तलोकान्तरनिःसृतात्मा महाभुजावेष्टितसर्वगात्रः ।
नेत्रेण सूर्योदयसन्निभेन प्रवालकांकूरनिभोदरेण ॥ ३७ ॥
सन्ध्याभ्ररक्तोत्पलपद्मरागसिन्दूरविद्यु त्प्रकरारुणेन ।
तप्तेन लिङ्गेन च लोचनेन चिक्रीडमानः स युगान्तकाले ॥ ३८ ॥
हिरण्मयेनैव समुत्सृजन्सदण्डेन यद्वद्भगवान्समेरुः ।
पादाग्रविक्षेपविशीर्णशैलः कुर्वञ्जगत्सोऽपि जगाम तत्र ॥ ३९ ॥
संहर्तुकामस्त्रिदिवं त्वशेषं प्रमुञ्चमानो विकृताट्टहासम् ।
जहार सर्वं त्रिदिवं महात्मा सङ्क्षोभयन्वै जगदीश एकः ॥ ४० ॥
तं देवमीशानमजं वरेण्यं दृष्ट्वा जगत्संहरणं महेशम् ।
सा कालरात्रिः सह मातृभिश्च गणाश्च सर्वे शिवमर्चयन्ति ॥ ४१ ॥
नन्दी च भृङ्गी च गणादयश्च तं सर्वभूतं प्रणमन्ति देवम् ।
जगद्धरं सर्वजनस्य कारणं हरं स्मरारातिमहर्निशं ते ॥ ४२ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां पञ्चमेऽवन्तीखण्डे रेवाखण्डे
नर्मदामाहात्म्ये सृष्टिसंहरणसंरम्भवर्णनंनाम पञ्चदशोऽध्यायः ॥ १५ ॥

———

# षोडशोऽध्यायः

## ब्रह्मकृतशिवस्तुतिवर्णनम्

श्रीमार्कण्डेय उवाच

समातृभिर्भूतगणैश्च घोरैर्वृतः समन्तात्स ननर्त शूली।
गजेन्द्रचर्मावरणे वसानः संहर्तुकामश्च जगत्समस्तम् ॥ १ ॥
महेश्वरःसर्वसुरेश्वराणां मन्त्रैरनेकैरवबद्धमाली।
मेदोवसारक्तविचर्चिताङ्गस्त्रैलोक्यदाहे प्रणनर्त शम्भुः ॥ २ ॥
स कालरात्र्या सहितो महात्मा काले त्रिलोकीं सकलां जहार।
सम्वर्तकाख्यः समहानुभावः शम्भुर्महात्मा जगतो वरिष्ठः ॥ ३ ॥
स विस्फुलिङ्गोत्करधूममिश्रं महोल्कवज्राशनिवाततुल्यम्।
ततोऽट्टहासं प्रमुमोच घोरं विवृत्य वक्त्रं वडवामुखाभम् ॥ ४ ॥
सहस्रवज्राशनिसन्निभेन तेनाऽट्टहासेन हरोद्गतेन।
आपूरितास्तत्र दिशोदशैवसङ्क्षोभिताः सर्वमहार्णवाश्च ॥ ५ ॥
स ब्रह्मलोकं प्रजगाम शब्दो ब्रह्माण्डभाण्डं प्रचचाल सर्वम्।
किमेतदित्याकुलचेतनास्ते वित्रस्तरूपा ऋषयो बभूवुः ॥ ६ ॥
प्रणम्य सर्वे सहसैव भीता ब्रह्माणमूचुः परमेश्वरेशम्।
भीताश्च सर्वे ऋषयस्ततस्ते सुरासुरैश्चैव महोरगैश्च ॥ ७ ॥
विद्युत्प्रभाभासुरभीषणाङ्गः क एष चिक्रीडति भूतलस्थः।
कालानलं गात्रमिदं दधानो यस्याट्टहासेन जगद्विमूढम् ॥ ८ ॥
वित्रस्तरूपं प्रबभौ क्षणेन संहर्तुमिच्छेत्किमयं त्रिलोकीम्।
सार्धं त्वया सप्तभिरर्णवैश्च जनस्तपः सत्यमभिप्रयाति ॥ ९ ॥
संहर्तुकामो हि क एष देव एतत्समस्तं कथयाऽप्रमेय!।

न दृष्टमेतद्विषमं कदापि जानासि तत्वं परमो मतो नः ॥ १० ॥
निशम्य तद्वाक्यमथाबभाषे ब्रह्मा समाश्वास्य सुरादिसङ्घान् ॥ ११ ॥

श्रीब्रह्मोवाच

स एष कालस्त्रिदिवं त्वशेषं संहर्तुकामोजगदक्षयात्मा ।
पूर्णे च शते परिवत्सराणां भविष्यतीशानविभुर्न चित्रम् ॥ १२ ॥
सम्वत्सरोऽयं परिवत्सरश्च उद्वत्सरो वत्सरएष देवः ।
दृष्टोऽप्यदृष्टः प्रहुतः प्रकाशी स्थूलश्च सूक्ष्मः परमाणुरेषः ॥ १३ ॥
नातः परं किञ्चिदिहाऽस्ति लोके परापरोऽयं प्रभुरात्मवादी ।
तुष्येत मे कालसमानरूप इत्येवमुक्त्वा भगवान्सुरेशः ॥ १४ ॥
सनत्कुमारप्रमुखैः समेतः सन्तोषयामास ततो यतात्मा ॥ १५ ॥

ब्रह्मोवाच

नमोऽस्तु सर्वाय सुशान्तमूर्तये ह्यघोररूपाय नमोनमस्ते ।
सर्वात्मने सर्व नमोनमस्ते महात्मने भूतपते! नमस्ते ॥ १६ ॥
ओङ्कारहुङ्कारपरिष्कृताय स्वधावषट्कार नमोनमस्ते ।
गुणत्रयेशाय महेश्वराय ते त्रयीमयाय त्रिगुणात्मने नमः ॥ १७ ॥
त्वं शङ्करस्त्वं हि महेश्वरोऽसि प्रधानमग्र्यं त्वमसि प्रविष्टः ।
त्वं विष्णुरीशः प्रपितामहश्च त्वं सप्तजिह्वस्त्वमनन्तजिह्वः ॥ १८ ॥
स्रष्टाऽसि सृष्टिश्च विभो त्वमेव विश्वस्य वेद्यं च परं निधानम् ।
आहुर्द्विजा वेदविदो वरेण्यं परात्परस्त्वं परतः परोऽसि ॥ १९
सूक्ष्मातिसूक्ष्मं प्रवदन्ति यच्च वाचो निवर्तन्तिमनो यतश्च ॥ २० ॥

श्रीमहादेव उवाच

त्वया स्तुतोऽहं विविधैश्च मन्त्रैः पुष्णामि शान्ति तव पद्मयोने! ।
ईक्षस्व मां लोकमिमं ज्वलन्तं वक्त्रैरनेकैः प्रसभं हरन्तम् ॥ २१ ॥
एवमुक्त्वा स देवेशो देव्या सह जगत्पतिः ।

पितामहं समाश्वास्य तत्रैवाऽन्तरधीयत ॥ २२ ॥
इदं महत्पुण्यतमं वरिष्ठं स्तोत्रं निशम्येह गतिं लभन्ते ।
पापैरनेकैः परिवेष्टिता ये प्रयान्ति रुद्रं विमलैर्विमानैः ॥ २३ ॥
भयं च तेषां न भवेत्कदाचित्पठन्ति ये तात इदं द्विजाग्र्याः ।
सङ्ग्रामचौराग्निवने तथाऽब्धौ तेषां शिवस्त्राति न संशयोऽत्र ॥ २४ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये ब्रह्मकृतशिवस्तुतिवर्णनंनामषोडशोऽध्यायः ॥ १६ ॥

---

# सप्तदशोऽध्याय

## द्वादशादित्यरूपेणजगत्सहरणवर्णनम्

श्रीमार्कण्डेय उवाच

एवं संस्तूयमानस्तु ब्रह्माद्यैर्मुनिपुङ्गवैः । ब्रह्मलोकगतैस्तत्र सञ्जहार जगत्प्रभुः
स तद्भीमंमहारौद्रं दक्षिणंवक्त्रमव्ययम् । महादंष्ट्रोत्कटारावंपातालतलसन्निभम्
विद्युज्ज्वलनपिङ्गाक्षं भैरवं लोमहर्षणम् । महाजिह्वं महादंष्ट्रं महासर्पशिरोधरम्
महासुरशिरोमालं महाप्रलयकारणम् । ग्रसत्समुद्रनिहितवातवारिमयं हविः ॥
वडवामुखसङ्काशं महादेवस्य तन्मुखम् । जिह्वाग्रेण जगत्सर्वं लेलिहानमपश्यत
योजनानांसहस्राणिसहस्राणांशतानिच । दिशोदशमहाघोरामांसमेदोवसोत्कटाः
तस्य दंष्ट्राव्यवर्धन्तशतशोऽथ सहस्रशः । सासुरान्सुरगन्धर्वान्सयक्षोरगराक्षसान्
तस्य दंष्ट्राग्रसँलग्नान्स ददर्श पितामहः । दन्तयन्त्रान्तसम्विष्टंविचूर्णितशिरोधरम्
जगत्पश्यामि राजेन्द्रविशन्तंव्यादिते मुखे । नानातरङ्गभङ्गाङ्गामहाफेनौघसङ्कुलाः
यथा नद्यो लयं यान्ति समुद्रं प्राप्य सस्वनाः ॥ ६ ॥
तथा ततं विश्वमिदं समस्तमनेकजीवार्णवदुर्विगाह्यम् ।

विवेश रुद्रस्य मुखं विशालं ज्वलत्तदुग्रं घननादघोरम् ॥ १० ॥
ज्वालास्ततस्तस्य मुखात्सुघोराः सविस्फुलिङ्गा बहुलाः सधूमाः ।
अनेकरूपा ज्वलनप्रकाशाः प्रदीपयन्तीव दिशोऽखिलाश्च ॥ ११ ॥
ततो रविज्वालसहस्रमालि बभूववक्त्रं चलजिह्वदंष्ट्रम् ।
महेश्वरस्याद्भुतरूपिणस्तदा स द्वादशात्मा प्रबभूव एकः ॥ १२ ॥

ततस्ते द्वादशादित्या रुद्रवक्त्राद्विनिर्गताः ।
आश्रित्य दक्षिणामाशां निर्दहन्तो वसुन्धराम् ॥ १३ ॥

भौमं यज्जीवनंकिञ्चिन्नानावृक्षतृणालयम् । शुष्कं पूर्वमनावृष्ट्यासकलाकुलभूतलम्
तद्दीप्यमानं सहसा सूर्यैस्तै रुद्रसम्भवैः । धूमाकुलमभूत्सर्वं प्रणष्टग्रहतारकम्
जज्वाल सहसा दीप्तं भूमण्डलमशेषतः । ज्वालामालाकुलं सर्वमभूदेतच्चराचरम्
सप्तद्वीपसमुद्रेषु सरित्सु च सरस्सु च । अग्निरत्तिजगत्सर्वमाज्याहुतिमिवाध्वरे
विशालतेजसा दीप्तामहाज्वालासमाकुलाः । ददहुर्वैजगत्सर्वमादित्यारुद्रसम्भवाः
आदित्यानां रश्मयश्चसंस्पृष्टा वै परस्परम् । एवंददाहभगवांस्त्रैलोक्यं सचराचरम्
सप्तद्वीपप्रमाणस्तुसोऽग्निर्भूत्वामहेश्वरः । सप्तद्वीपसमुद्रान्तांनिर्ददाह वसुन्धराम्
सुमेरुमन्दरान्तां च निर्दहुर्वसुधांतदा । भित्त्वा तु सप्तपातालंनागलोकंततोऽदहत्
भूम्यधःसप्तपातालान्निर्दहंस्तारकैः सह । चचाराग्निः समन्तात्तुनिर्दहन्वैयुधिष्ठिर
धम्यमानइवाङ्गारैर्लोहरात्रिरिवज्वलन् ।तथातत्प्राज्ज्वलत्सर्वंसम्वर्त्ताग्निप्रदीपितम्

निर्वृक्षा निस्तृणा भूमिर्निर्निर्झरसरःसरित् ।
विशीर्णशैलशृङ्गौघा कूर्मपृष्ठोपमाऽभवत् ॥ २४ ॥
ज्वालामालाकुलं कृत्वा जगत्सर्वं चिदात्मकम् ।
महारूपधरो रुद्रो व्यतिष्ठत महेश्वरः ॥ २५ ॥

समातृगणभूयिष्ठा सयक्षोरगराक्षसा । ततो देवी महादेवं विवेश हरिलोचना

निर्वाणं परमापन्ना शान्तेव शिखिनःशिखा ।
जगत्सर्वं हि निर्दग्धं त्रिभिर्लोकैः सहाऽनघ! ॥ २७ ॥

रुद्रप्रसादान्मुक्त्वा मां नर्मदां चाप्ययोनिजाम् ।
युगानामयुतं देवो मया चाद्य बुभुक्षणात् ॥ २८ ॥

पुरा ह्याराधितः शूली तेनाहमजरामरः । अघमर्षणघोरं च वामदेवं च त्र्यम्बकम्
ऋषभं त्रिसुपर्णं च दुर्गां सावित्रमेव च । बृहदारण्यकं चैव बृहत्साम तथोत्तरम्
रौद्रीं परमगायत्रीं शिवोपनिषदं तथा । यथा प्रतिरथं सूक्तं जप्त्वा मृत्युञ्जयं तथा

सरित्सागरपर्यन्ता वसुधा भस्मसात्कृता ।
वर्जयित्वा महाभागां नर्मदाममृतोपमाम् ॥ ३२ ॥

महेन्द्रो मलयः सह्योहेमकूटोऽथमाल्यवान् । विन्ध्यश्चपारियात्रश्चसप्तैतेकुलपर्वताः

द्वादशादित्यनिर्दग्धाः शैलाः शीर्णशिलाः पृथक् ।
भस्मीभूतास्तु दृश्यन्ते न नष्टा नर्मदा तदा ॥ ३४ ॥
हिमवान्हेमकूटश्च निषधो गन्धमादनः ।
माल्यवांश्च गिरिश्रेष्ठो नीलः श्वेतोऽथ शृङ्गवान् ॥ ३५ ॥

एते पर्वतराजानोदेवगन्धर्वसेविताः । युगान्ताग्निविनिर्दग्धाःसर्वेशीर्णमहाशिलाः
एवं मया पुरा दृष्टो युगान्ते सर्वसङ्क्षयः । वर्जयित्वा महापुण्यां नर्मदां नृपसत्तम।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्ये द्वादशादित्यरूपेण जगत्संहरणवर्णनंनाम-सप्तदशोऽध्यायः ॥ १७ ॥

———

# अष्टादशोऽध्यायः

## नर्मदामाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

निर्दग्धेऽस्मिंस्ततो लोकेसूर्यैरीश्वरसम्भवैः। सप्तभिश्चार्णवैःशुष्कैर्द्वीपैःसप्तभिरेवच

ततो मुखात्तस्य घना महोल्बणा निश्चेरुरिन्द्रायुधतुल्यरूपाः।
घोराः पयोदा जगदन्धकारं कुर्वन्त ईशानवरप्रयुक्ताः ॥ २ ॥
नीलोत्पलाभाः क्वचिदञ्जनाभागोक्षीरकुन्देन्दुनिभाश्च केचित्।
मयूरचन्द्राकृतयस्तथाऽन्ये केचिद्विधूमानलसप्रभाश्च ॥ ३ ॥
केचिन्महापर्वतकल्परूपाः केचिन्महामीनकुलोपमाश्च।
केचिद्गजेन्द्राकृतयः सुरूपाः केचिन्महाकूटनिभाः पयोदाः ॥ ४ ॥
चलत्तरङ्गोर्मिसमानरूपामहापुरोधाननिभाश्च केचित्।
सगोपुराट्टालकसन्निकाशाः सविद्युदुल्काशनिमण्डितान्ताः ॥ ५ ॥
समावृताङ्गः स बभूव देवः सम्वर्तकोनाम गणः सरौद्रः।
प्रवर्षमाणो जगदप्रमाणमेकार्णवं सर्वमिदं चकार ॥ ६ ॥
ततो महामेघविवर्द्धमानमीशानमिन्द्राशनिभिर्वृताङ्गम्।
ददर्श नाहं भयविह्वलाङ्गो गङ्गाजलौघैश्च समावृताङ्गः ॥ ७ ॥
गजाः पुनश्चैव पुनः पिबन्तो जगत्समन्तात्परिदह्यमानम्।
आपूरितं चैव जगत्समन्तात्सर्वैश्च तैर्जग्मुरदर्शनं च ते ॥ ८ ॥
महार्णवाः सप्त सरांसि द्वीपा नद्योऽथ सर्वा अथ भूर्भुवश्च।
आपूर्यमाणाः सलिलौघजालैरेकार्णवं सर्वमिदं बभूव ॥ ॥९ ॥
न दृश्यते किञ्चिदहो चराचरे निरग्निचन्द्रार्कमयेऽपि लोके।
प्रणष्टनक्षत्रतमोऽन्धकारे प्रशान्तवातास्तमितैकनीडे ॥ १० ॥

महाजलौघेऽस्य विशुद्धसत्त्वा स्तुतिर्मया भूप! कृता तदानीम् ।
ततोऽहमित्येव विचिन्तयानः शरण्यमेकं क नु यामि शान्तम् ॥ ११ ॥
स्मरामि देवं हृदि चिन्तयित्वा प्रभुं शरण्यं जलसन्निविष्टः ।
नमामि देवं शरणं प्रपद्ये ध्यानं च तस्येतिकृतं मया च ॥ १२ ॥
ध्यात्वा ततोऽहं सलिलं ततार तस्य प्रसादादविमूढचेताः ।
ग्लानिः श्रमश्चैव मम प्रणष्टौ देव्याः प्रसादेन नरेन्द्रपुत्र! ॥ १३ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्यवर्णनंनामाऽष्टादशोऽध्यायः ॥ १८ ॥

---

# एकोनविंशोऽध्यायः

## वाराहकल्पवृत्तान्तवर्णनम्

श्रीमार्कण्डेय उवाच

ततस्त्वेकार्णवे तस्मिन्मुमूर्षु रहमातुरः ।
काकूच्छ्वासस्तरंस्तोयं बाहुभ्यां नृपसत्तम! ॥ १ ॥
शृणोम्यर्णवमध्यस्थो निःशब्दस्तिमिते तदा ।
अम्भोरवमनौपम्यं दिशोदशविनादिनम् ॥ २ ॥
हंसकुदेन्दुसङ्काशां हारगोक्षीरपाण्डुराम् ।
नानारत्नविचित्राङ्गीं स्वर्णशृङ्गां मनोरमाम् ॥ ३ ॥
खुरैःप्रवालकमयैर्लाङ्गूलध्वजशोभिताम् । प्रलम्बघोणांनर्दन्तींखुरैरर्णवगाहिनीम्
गां ददर्शाहमुद्विग्नो मामेवाऽभिमुखीं स्थिताम् ।
किङ्किणीजालमुक्ताभिः स्वर्णघण्टासमावृताम् ॥ ५ ॥
तस्याश्चरणविक्षेपैः सर्वमेकार्णवंजलम् । विक्षिप्तफेनपुञ्जौघैर्नृत्यन्तीव समन्तत

रसास सलिलोत्क्षेपैः क्षोभयन्ती महार्णवम् ।
सा मामाह महाभाग!श्लक्ष्णगम्भीरया गिरा ॥ ७ ॥

मा भैषीर्वत्सवत्सेति मृत्युस्तव न विद्यते । महादेवप्रसादेन न मृत्युस्तेममापिच
ममाश्रयस्वलांगूलंत्वामतस्तारयाम्यहम् । घोरादस्माद्भयाद्विप्रयावत्संप्लवतंजगत्

क्षुत्तृषाप्रतिघातार्थं स्तनौ मे त्वं पिबस्व ह ।
पयोऽमृताश्रयं दिव्यं तत्पीत्वा निर्वृतो भव ॥ १० ॥
तस्यास्तद्वचनं श्रुत्वा हर्षात्पीतो मया स्तनः ।
न क्षुत्तृषा पीतमात्रे स्तने मह्यं तदाऽभवत् ॥ ११ ॥

दिव्यंप्राणबलं जज्ञे समुद्रप्लवनक्षमम् । ततस्तां प्रत्युवाचेदं का त्वमेकार्णवीकृते
भ्रमसे ब्रूहि तत्त्वेन विस्मयो मे महान्हृदि । भ्रमतोऽत्रममार्तस्य मुमूर्षोःप्रहतस्यह

त्वं हि मे शरणं जाता भाग्यशेषेण सुव्रते! ॥ १४ ॥

गौरुवाच

किमहं विस्मृता तुभ्यं विश्वरूपामहेश्वरी । नर्मदाधर्मदानृणांस्वर्गशर्मबलप्रदा ॥

दृष्ट्वा त्वां सीदमानं तु रुद्रेणाऽहंविसर्जिता ।
तं द्विजं तारयस्वार्ये मा प्राणांस्त्यजतां जले ॥ १६ ॥
गोरूपेण विभोर्वाक्यात्त्वत्सकाशमिहागता ।
मा मृषावचनः शम्भुर्भवेदिति च सत्वरा ॥ १७ ॥

एवमुक्तस्तयाऽऽहंतुइन्द्रायुधनिभंशुभम् । लांगूलमग्र्यंज्ञात्वाभुजाभ्यामवलम्बितः
ततोऽन्तरं तं जलधिलागूलध्वजमाश्रितः । असौ देवो महादेव इति मां प्रत्यभाषत
ततो युगसहस्रान्तमहं कालं तया सह । व्यचरं वै तमीभूते सर्वतः सलिलावृते ।

महार्णवे ततस्तस्मिन्भ्रमन्गोःपुच्छमाश्रितः ।
निर्वाते चान्धकारे च निरालोके निरामये ॥ २१ ॥
अकस्मात्सलिले तस्मिन्नतसीपुष्पसन्निभम् ।
विभिन्नांञ्जनसङ्काशमाकाशमिव निर्मलम् ॥ २२ ॥

नीलोत्पलदलश्यामं पीतवाससमव्ययम् । किरीटेनार्कवर्णेनविद्युद्विद्योतकारिणा
भ्राजमानेनशिरसाखमिवात्यन्तरूपिणम् ।कुण्डोद्वृष्टगल्लं तुहारोद्द्ययोतितवक्षसम्
जाम्बूनदमयैर्दिव्यैर्भूषणैरुपशोभितम् । नागोपधानशयनं सहस्रादित्यवर्चसम्।
अनेकबाहूरुधरं नैकवक्त्रं मनोरमम् । सुप्तमेकार्णवे वीरं सहस्राक्षशिरोधरम्।
जटाजूटेन महतास्फुरद्विद्युत्समार्चिषा । एकार्णवंजगत्सर्वं व्याप्यदेवंव्यवस्थितम्
ग्रसित्वा शङ्करं सर्वं सदेवासुरमानवम् । प्रपश्याम्यहमीशानं सुप्तमेकार्णवे प्रभुम्
सर्वव्यापिनमव्यक्तमनन्तं विश्वतोमुखम्। तस्यपादतलाभ्याशेस्वर्णकेयूरमण्डिताम्

विश्वरूपां महाभागां विश्वमायावधारिणीम् ।
श्रीमयीं ह्रीमयीं देवीं धीमयीं वाङ्मयीं शिवाम् ॥ ३० ॥
सिद्धिं कीर्ति रतिं ब्राह्मीं कालरात्रिमयोनिजाम् ।
तामेवाहं तदात्यन्तमीश्वरान्तिकमास्थिताम् ॥ ३१ ॥
अद्राक्षं चन्द्रवदनां धृतिं सर्वेश्वरीमुमाम् ॥ ३२ ॥
शान्तं प्रसुप्तं नवहेमवर्णमुमासहायं भगवन्तमीशम् ।
तमोवृतं पुण्यतमं वरिष्ठं प्रदक्षिणीकृत्य नमस्करोमि ॥ ३३ ॥
ततः प्रसुप्तः सहसा विबुद्धो रात्रिक्षये देववरः स्वभावात् ।
विक्षोभयन्बाहुभिरर्णवाम्भो जगत्प्रणष्टं सलिले विमृश्य ॥ ३४ ॥
किं कार्यमित्येव विचिन्तयित्वा वाराहरूपोऽभवदद्भुताङ्गः ।
महाघनाम्भोधरतुल्यवर्चाः प्रलम्बमालाम्बरनिष्कमाली ॥ ३५ ॥
सशङ्खचक्रासिधरः किरीटी सवेदवेदाङ्गमयो महात्मा ।
त्रैलोक्यनिर्माणकरः पुराणो देवत्रयीरूपधरश्च कार्ये ॥ ३६ ॥
स एव रुद्रः स जगज्जहार सृष्ट्यर्थमीशः प्रपितामहोऽभूत् ।
संरक्षणार्थं जगतः स एव हरिः सुचक्रासिगदाब्जपाणिः ॥ ३७ ॥
तेषां विभागो न हि कर्तुमर्हो महात्मनामेकशरीरभाजाम् ।
मीमांसहेत्वर्थविशेषतज्ज्ञैर्यस्तेषु कुर्यात्प्रविभेदमज्ञः ॥ ३८ ॥

स याति घोरं नरकं क्रमेण विभागकृद्द्वेषमतिर्दुरात्मा ।
या यस्य भक्तिः स तयैव नूनं देहं त्यजन्स्वं ह्यमृतत्वमेति ॥ ३६ ॥
सम्मोहयन्मूर्तिभिरत्र लोकं स्रष्टा च गोप्ता क्षयकृत्स देवः ।
तस्मान्न मोहात्मकमाविशेत द्वेषं न कुर्यात्प्रविभिन्नमूर्तिः ॥ ४० ॥
वाराहमीशानवरोऽप्यतोऽसौ रूपं समास्थाय जगद्विधाता ।
नष्टे त्रिलोकेऽर्णवतोयमग्ने विमार्गितोयौघमयेऽन्तरात्मा ॥ ४१ ॥
भित्त्वाऽर्णवं तोयमथान्तरस्थं विवेश पातालतलं क्षणेन ।
जले निमग्नां धरणीं समस्तां समस्पृशत्पङ्कजपत्रनेत्राम् ॥ ४२ ॥
विशीर्णशैलोत्पलशृङ्गकूटां वसुन्धरां तां प्रलये प्रलीनाम् ।
दंष्ट्रैकया विष्णुरतुल्यसाहसः समुद्दधार स्वयमेव देवः ॥ ४३ ॥
सा तस्य दंष्ट्राग्रविलम्बिताङ्गी कैलासशृङ्गाग्रगतेव ज्योत्स्ना ।
विभ्राजते साप्यसमानमूर्तिः शशाङ्कशृङ्गे च तडिद्विलग्ना ॥ ४४ ॥
तामुज्जहारार्णवतोयमग्नां करी निमग्नामिव हस्तिनीं हठात् ।
नावं विशीर्णामिव तोयमध्यादुदीर्णसत्त्वोनुपमप्रभावः ॥ ४५ ॥
स तां समुत्तार्य महाजलौघात्समुद्रमार्यो व्यभजत्समस्तम् ।
महार्णवेष्वेव महार्णवाम्भो निक्षेपयामास पुनर्नदीषु ॥ ४६ ॥
शीर्णांश्च शैलान्स चकार भूयो द्वीपान्समस्तांश्च तथार्णवांश्च ।
शैलोपलैर्ये विचिताः समन्ताच्छिलोच्चयांस्तान्स चकार कल्पे ॥ ४७ ॥
अनेकरूपं प्रविभज्य देहं चकार देवेन्द्रगणान्समस्तान् ।
मुखाच्च वह्निर्मनसश्च चन्द्रश्चक्षोश्च सूर्यः सहसा बभूव ॥ ४८ ॥
जज्ञेऽथ तस्येश्वरयोगमूर्तेः प्रध्यायमानस्य सुरेन्द्रसङ्घः ।
वेदाश्च यज्ञाश्च तथैव वर्णास्तथा हि सर्वौषधयो रसाश्च ॥ ४९ ॥
जगत्समस्तं मनसा बभूव यत्स्थावरं किञ्चिदिहाऽण्डजं वा ।
जरायुजं स्वेदजमुद्भिजं वा यत्किञ्चिदाकीटपिपीलकाद्यम् ॥ ५० ॥

ततो विजज्ञे मनसा क्षणेन अनेकरूपाः सहसा महेशः ।
चकार यन्मूर्तिभिरव्ययात्मा अष्टाभिराविश्य पुनः स तत्र ॥ ५१ ॥
लीलां चकाराऽथ समृद्धतेजा अतोऽत्र मे पश्यत एव विप्राः ।
तेषां मया दर्शनमेव सर्वं यावन्मुहूर्तात्समकारि भूप! ॥ ५२ ॥
कृत्वा त्वशेषं किल लीलयैव स देवदेवो जगतां विधाता ।
सर्वत्रदृक्सर्वग एव देवो जगाम चाऽदर्शनमादिकर्ता ५३ ॥
यत्तन्मुहूर्तादिह नामरूपं तावत्प्रपश्यामि जगत्तथैव ।
द्वीपैः समुद्रैरभिसम्वृतं हि नक्षत्रतारादिविमानकीर्णम् ॥ ५४ ॥
वियत्पयोदग्रहचक्रचित्रं नानाविधैः प्राणिगणैर्वृतं च ।
तां वै न पश्यामि महानुभावां गोरूपिणीं सर्वसुरेश्वरीं च ॥ ५५ ॥
क्व साम्प्रतं सेति विचिन्त्य राजन्विभ्रान्तचित्तस्त्वभवं तदैव ।
दिशो विभागानवलोकयान ऋते पुनस्तां कथमीश्वराङ्गीम् ॥
पश्यामि तामत्र पुनश्च शुभ्रां महाभ्रनीलां शुचिशुभ्रतोयाम् ।
वृक्षैरनेकैरुपशोभिताङ्गीं गजैस्तुरङ्गैर्विहगैर्वृतां च ॥ ५७ ॥
यथा पुरा तीरमुपेत्य देव्याः समास्थितश्चाप्यमरकण्टके तु ।
तथैव पश्यामि सुखोपविष्ट आत्मानमव्यग्रमवाप्तसौख्यम् ॥ ५८ ॥
तथैव पुण्यामलतोयवाहां दृष्ट्वा पुनः कल्पपरिक्षयेऽपि ।
अम्बामिवार्यामनुकम्पमानामक्षीणतोयां विरुजां विशोकः ॥ ५९ ॥
एवं महत्पुण्यतमं च कल्पं पठन्ति शृण्वन्ति च ये द्विजेन्द्राः ।
महावराहस्य महेश्वरस्य दिने दिने ते विमला भवन्ति ॥ ६० ॥
अशुभशतसहस्रं ते विधूय प्रपन्नास्त्रिदिवममरजुष्टं सिद्धगन्धर्वयुक्तम् ।
विमलशशिनिभाभिःसर्वएवाप्सरोभिःसहविविधविलासैःस्वर्गसौख्यं लभ

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे श्रीनर्मदामाहात्म्ये वाराहकल्पवृत्तान्तवर्णनंनामैकोनविंशोऽध्यायः ॥१

# विंशोऽध्यायः

## वाराहकल्पवृत्तान्तवर्णनम्

युधिष्ठिर उवाच

श्रुता मे विविधा धर्माः संहारास्त्वत्प्रसादतः ।
कृता देवेन सर्वेण ये च दृष्टास्त्वयाऽनघ! ॥ १ ॥
साम्प्रतं श्रोतुमिच्छामि प्रभावं शार्ङ्गधन्वनः ।
त्वयाऽनुभूतं विप्रेन्द्र! तन्मे त्वं वक्तुमर्हसि ॥ २ ॥

श्रीमार्कण्डेय उवाच

अतः परं प्रवक्ष्यामि प्रजासंहारलक्षणम् । यच्चिह्नं दृश्यते तत्र यथाकल्पोविधीयत
उल्कापाताः सनिर्घाता भूमिकम्पस्तथैव च ।
पतते पांशुवर्षं च निर्घोषश्चैव दारुणः ॥ ४ ॥
यक्षकिन्नरगन्धर्वाः पिशाचोरगराक्षसाः । सर्वे तेप्रलयंयान्तियुगान्तेसमुपस्थिते
पर्वताः सागरा नद्यः सरांसि विविधानि च ।
वृक्षाः शोषं समायान्ति वल्लीजातं तृणानि च॥ ६ ॥
एवं हि व्याकुलीभूते सर्वौषधिजलोज्झिते । काष्ठभूते तु सञ्जातेत्रैलोक्येसचराचरे
यावत्पश्यामि मध्याह्ने स्नानकाल उपस्थिते ।
त्रैलोक्यं ज्वलनाकारं दुर्निरीक्ष्यं दुरासदम् ॥ ८ ॥
द्वौ सूर्यौपूर्वतस्तातपश्चिमोत्तरयोस्तथा । तथैव दक्षिणे द्वौ च सूर्यौदृष्टौप्रतापिनौ
द्वौ सूर्यौ नागलोकस्थौ मध्ये द्वौ गगनस्य च ।
इत्येते द्वादशादित्यास्तपन्ते सर्वतो दिशम् ॥ १० ॥
पृथिवीमदहन्सर्वा सशैलवनकाननाम् । नादग्धं दृश्यते किञ्चिद्दृतेरेवां च मां तथा
पृथिव्यां दह्यमानायां हविर्गन्धश्च जायते ।ततो मे शुष्यते गात्रं तृषाप्येवंदुरासदा

न हि विन्दामि पानीयं शोषितं च दिवाकरैः ।
यावत्कमण्डलुं वीक्षे शुष्कं तत्रापि तज्जलम् ॥ १३ ॥
ततोऽहंशोकसन्तप्तो विशेषात्क्षुत्तृषार्दितः । उत्पपातक्षितेरूर्ध्वं पश्यमानोदिवंप्रति
तावत्पश्यामि गगनेगृहंश्रृङ्गारभूषितम् । ततस्तज्ज्ञातुकामोऽहंप्रस्थितोराजसत्तम
प्राकारेण विचित्रेण कपाटार्गलभूषितम् । विचित्रशिखरोपेतंद्वारदेशमुपागतः ॥
षडशीतिसहस्राणि योजनानां समुच्छ्रये । तदर्धं तु पृथक्त्वेन काञ्चनंरत्नभूषितम्
तत्र मध्ये परां शय्यां पश्यामि नृपसत्तम! । शय्योपरिशयानंतु पुरुषंदिव्यमूर्धजम्
विकुञ्चिताग्रकेशान्तंसमस्तंयोजनायतम् । मुकुटेनविचित्रेणदीप्तिकान्तेनशोभितम्
श्यामं कमलपत्राभंसुप्रभं च सुनासिकम् । सिंहास्यमायतभुजंगलश्मश्रुवराङ्कितम्
त्रिवलीभङ्गसुभगंकर्णकुण्डलभूषितम्। विशालाभंसुपीनाङ्गंपार्श्वं स्वावर्तभूषितम्
शोभितं कटिभागेन विभक्तं जानुजङ्घयोः । पद्माङ्किततलंदेवमाताम्रसुनखांगुलिम्
मेघनादसुगम्भीरं सर्वावयवसुन्दरम् । शय्यामध्यगतंदेवमपश्यं पुरुषोत्तमम् ॥२३॥
शङ्खचक्रगदापाणिं शयानं दक्षिणेन तु । अक्षसूत्रोद्यतकरंसूर्यायुतसमप्रभम् ॥ २४ ॥
तं दृष्ट्वा भक्तिमान्देवं स्तोतुकामो व्यवस्थितः ।
जयेश! जय वागीश! जय दिव्याङ्गभूषण! ॥ २५ ॥
जय देवपते श्रीमन्साक्षाद्ब्रह्म सनातन! । तवलोका शरीरस्थास्त्वं गतिःपरमेश्वर
त्वदाधारा हि देवेश सर्वे लोका व्यवस्थिताः ।
त्वं श्रेष्ठः सर्वसत्त्वानां त्वं कर्ता धरणीधरः ॥ २७ ॥
त्वं हौत्रमग्निहोत्राणां सूत्रमन्त्रस्त्वमेव च ।
गोकर्णं भद्रकर्णं च त्वं च माहेश्वरं पदम् ॥ २८ ॥
त्वं कीर्तिः सर्वकीर्तीनां दैन्यपापप्रणाशिनी ।
त्वं नैमिषं कुरुक्षेत्रं त्वं च विष्णुपदं परम् ॥ २९ ॥
त्वया तु लीलया देव पदाक्रान्ता च मेदिनी ।
त्वया बद्धो बलिर्देव! त्वयेन्द्रस्य पदं कृतम् ॥ ३० ॥

त्वं कलिर्द्वापरं देव त्रेता कृतयुगं तथा । प्रलम्बदमनश्च त्वं स्रष्टा त्वं च विनाशकृत्
त्वया वै धार्यते लोकास्त्वं कालः सर्वसङ्क्षयः ।
त्वया हि देव सृष्टास्ताः सर्वाः वै देवयोनयः ॥ ३२ ॥
त्वं पन्थाः सर्वलोकानां त्वं च मोक्षः परा गतिः ।
ब्रह्मा त्वदुद्भवो देवो रजोरूपः सनातनः ।
रुद्रः क्रोधोद्भवोऽप्येवं त्वं च सत्त्वे व्यवस्थितः ॥ ३३ ॥
एतच्चराचरं देव! क्रीडनार्थं त्वया कृतम् । एवं सन्तप्तदेहेन स्तुतो देवो मया प्रभुः
भक्त्यापरमयाराजन्सर्वभूतपतिः प्रभुः ।स्तुवन्नेतत्रपश्यामिवारिपूर्णांस्ततोघटान्
ततो मया विस्मृता या तृषा सा वर्द्धिता पुनः ।
उपासर्पं ततस्तस्य पार्श्वं वै पुरुषस्य हि ॥ ३६ ॥
पानीयं पातुकामेन चिन्तितं च मया पुनः ।
नापश्यत हि मां चैव सुप्तोऽपि न च बुध्यते ॥ ३७ ॥
यस्तु पापेनसम्मूढः सुखं सुप्तं प्रबोधयेत् । जायतेतस्य पापस्यब्रह्महत्याफलं महत्
एवं सञ्चिन्त्यमाने तु द्वितीयो ह्यागतः पुमान् ।
नेक्षते जल्पते किञ्चिद्वामस्कन्धे मृगाजिनी ॥ ३६ ॥
जटी कमण्डलुधरोदण्डीमेखलयावृतः । भस्मोन्मृदितसर्वाङ्गोमहातेजास्त्रिलोचनः
यावत्तं स्तोतुकामोऽहमपश्यं स्वच्छचक्षुषा ।
तावत्सर्वाङ्गसम्भूत्या महत्या रूपसम्पदा ॥ ४१ ॥
अपश्यं सम्भृतां नारीं सर्वाभरणभूषिताम् ।
दृष्ट्वा तां पतितो भूमौ जयस्वेति ब्रुवंस्ततः ॥ ४२ ॥
जय रुद्राङ्गसंभूते जयब्राह्मिसनातनि । जय कौमारिमाहेन्द्रि वैष्णवीवारुणीतथा
जयकौबेरि सावित्रि जय धात्रि वरानने । तृष्णया तप्तदेहस्य रक्षां कुरु चराचरे

श्रीदेव्युवाच

प्रसन्ना विप्रशार्दूल तव वाक्यैःसुशोभनैः । वर्त्तते मानसे यत्तेमया ज्ञातं द्विजोत्तम

श्रृणु विप्रममाऽप्यस्तिव्रतमेतत्सुदारुणम् । स्त्रीलघुत्वान्मयारब्धंदुष्करंमन्दमे

यदि भावी च मे पुत्रो धर्मिष्ठो लोकविश्रुतः ।
विप्रस्य तु स्तनं दत्त्वा पश्चाद्दास्यामि बालके ॥ ४७ ॥

स मे पुत्रःसमुत्पन्नोयथोक्तो मे महामुने! । स्तनंपिबत्वंविप्रेन्द्रयदिजीवितुमिच्छ

श्रीमार्कण्डेय उवाच

अकार्यमेतद्विप्राणां यस्त्विमं पिबते स्तनम् । पुनश्चैवोपनयनं व्रतसिद्धिनगच्छ

ब्राह्मणत्वंत्रिभिर्लोकैर्दुर्लभंपद्मलोचने । संस्कारैःसंस्कृतोविप्रोयैश्चजायेततच्च

प्रथमं चैव नारीषु संस्कारैर्बीजवापनम् । बीजप्रक्षेपणादेव बीजक्षेपः स उच्य

तदन्ते च महाभागेगर्भाधानंद्वितीयकम् । पुंसवनं तृतीयं तु सीमन्तं च चतुर्थ

पञ्चमं जातकर्म स्यान्नाम वै षष्ठमुच्यते । निष्कामः सप्तमश्चैव ह्यन्नप्राशनमष्टम

नवमं वै चूडकर्म दशमं मौञ्जिबन्धनम् ।ऐषिकं दार्विकं चैव सौमिकं भौमिकं त

पत्नीसंयोजनं चान्यद्दैवकर्म ततः परम् । मानुष्यं पितृकर्म स्याद्दशमाष्टासुश

भूतं भव्यं तथेष्टंच पार्वणञ्च ततः परम् ॥ ५६ ॥

श्राद्धं श्रावण्यामाग्रयणञ्च चैत्राश्वयुज्यां दशपौर्णमास्याम् ।
निरूढपशुसवनसौत्रामण्यग्निष्टोमात्यग्निष्टोमाः ॥ ५७ ॥
षोडशीवाजपेयातिरात्राप्तोर्यामोदशवाजपेयाः ।
सर्वभूतेषु क्षान्तिरनसूया शौचमङ्गलमकार्पण्यमस्पृहेति ॥ ५८ ॥
एभिरष्टचत्वारिंशद्भिः संस्कारैः संस्कृतो ब्राह्मणो भवति ॥ ५६ ॥
एवं ज्ञात्वा महाभागे! न तु मां पातुमर्हसि ।
शिशुपेयं स्तनं भद्रे! कथं वै मद्विधः पिबेत् ॥ ६० ॥
ममैतद्वचनं श्रुत्वा नारी वचनमब्रवीत् ॥ ६१ ॥

यदि त्वं न पिबेः स्तन्यम्पयो बालो मरिष्यति ।
श्रूयते त्रिषु लोकेषु वेदेषु च स्मृतिष्वपि ।
मुच्यते सर्वपापेभ्यो भ्रूणहत्या न मुञ्चति ॥ ६२ ॥

वित्रीतवहत्या चमहाभागवतःपुनः । जन्मानि चशतान्यष्टौक्लिश्यतेभ्रूणहत्यया
तः शुनत्वंचाप्नोतिवर्षाणां तु शतत्रयम् । ततस्तस्यक्षयेजातेकाकयोनिंव्रजेत्पुनः
त्रापि च शतान्यष्टौक्लिश्यते पापकर्मणि । वराहो दशजन्मानितदन्तेजायतेकृमिः

ततश्चारोहिणीं प्राप्य गोगजाश्वनृजन्मभाक् ।
श्रूयते श्रुतिशास्त्रेषु वेदेषु च परन्तप! ॥ ६६ ॥

र्वपापाधिकस्पापस्बालहत्या द्विजोत्तम! । बालहत्यायुतोविप्रःपच्यतेनरकेध्रुवम्

वर्षाणि च शतान्यष्टौ प्राप्नोति यमयातनाम् ।
तस्मादल्पतरो दोषः पिबतो मे स्तनं तव ॥ ६८ ॥

थैवापिबतःपापंजायतेबहुवार्षिकम् । क्षुधातृषाविरामस्ते पुण्यं चपिबतःस्तनम्

अतो न चेतः सन्दिग्धं कर्तव्यमिह कर्हिचित् ।
एहि विप्र! यथाकामं बालार्थे पिब मे स्तनम् ॥ ७० ॥

ततोऽहं वचनं श्रुत्वास्तनं पातुंसमुद्यतः । नच तृप्तिंविजानामिपिबतःस्तनमुत्तमम्
त्रिंशद्वर्षसहस्राणि भारतैवं शतानि च । ततःप्रबुद्धोत्सङ्गेऽहंमायानिद्राविमोहितः
निद्राविगतमोहोऽहंयावत्पश्यामि पाण्डव । तावत्सुप्तंनपश्यामिनचतंबालकंविभो

चतुरस्तांश्च वै कुम्भान्पश्यामि तत्र भारत ।
न च पश्यामि तां देवीं गता वै कुत्रचिच्च ते ॥ ७४ ॥

एवं विमृश्यमानस्य चिन्तयानस्य तिष्ठतः । ईषद्धसितयावाचा देवीवचनमब्रवीत्

श्रीदेव्युवाच

कृष्णः स पुरुषः सुप्तो द्वितीयोऽप्यागतो हरः ।
ये चत्वारश्च ते कुम्भाः समुद्रास्ते द्विजोत्तम! ॥ ७६ ॥

यश्चबालस्त्वया दृष्टो ब्रह्मालोकपितामहः । अहं च पृथिवीज्ञेया सप्तद्वीपासपर्वता

या गता त्वां परित्यज्य भूतले सुप्रतिष्ठिता ।
इमां च प्रेक्षसे विप्र! नर्मदां सरितां वराम् ॥ ७८ ॥

सर्वसत्त्वोपकाराय बृहते पुण्यलक्षणा । रेवानदी तु विख्याता न मृतातेन नर्मदा

एवं ज्ञात्वा शमं गच्छ स्वस्थो भव महामुने! ।
इत्युक्त्वा मां तदा देवी तत्रैवाऽन्तरधीयत ॥ ८० ॥
एवं हि शेते भगवान्सत्त्वस्थः प्रलये सदा ।
सत्त्वरूपो महादेवो यदाधारे जगत्स्थितम् ॥ ८१ ॥
एवं मयानुभूतं तद्दृष्टमाश्चर्यमुत्तमम् । सर्वपापहरं पुण्यं कथितं ते नरोत्तम! ॥ ८२
विष्णोश्चरितमित्युक्तं यत्त्वया परिपृच्छितम् ।
भूय एव महाबाहो! किमन्यच्छ्रोतुमिच्छसि ॥ ८३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे वाराहकल्पवृत्तान्तवर्णनं नाम विंशोऽध्यायः ॥ २० ॥

---

# एकविंशोऽध्यायः

## कपिलासरित्सम्भववर्णनम्

### युधिष्ठिर उवाच

श्रुतं मेविविधाश्चर्यंत्वत्प्रसादाद्द्विजोत्तम। भूयश्चश्रोतुमिच्छापितन्मेकथयसुव्रत
कथमेषा नदी पुण्या सर्वनदीषुचोत्तमा। नर्मदानामविख्याताभूयो मे कथयाऽन

### श्रीमार्कण्डेय उवाच

नर्मदा सरितां श्रेष्ठासर्वपापप्रणाशिनी। तारयेत्सर्वभूतानि स्थावराणिचराणि
नर्मदायास्तु माहात्म्यं यत्पूर्वेण मया श्रुतम् ।
तत्तेऽहं सम्प्रवक्ष्यामि श्रृणुष्वैकमना नृप! ॥ ४ ॥
गङ्गा कनखले पुण्या कुरुक्षेत्रेसरस्वती। ग्रामे वा यदि वारण्ये पुण्या सर्वत्रनर्मद
त्रिभिः सारस्वतं तोयंसप्ताहेनतु यामुनम्। सद्यः पुनातिगांगेयंदर्शनादेवनार्मद
कलिङ्गदेशात्पश्चार्द्धे पर्वतेऽमरकण्टके। पुण्या च त्रिषु लोकेषु रमणीया पदेपदे

तत्र देवाश्चगन्धर्वाऋषयश्च तपोधनाः । तपस्तप्त्वामहाराज सिद्धिपरमिकांगताः

तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः ।
उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ ६ ॥
सिद्धिक्षेत्रं परं तात! पर्वतो ह्यमरंकटः ।
सर्वदेवाश्रितो यस्मादृषिभिः परिसेवितः ॥ १० ॥
सिद्धविद्याधरा भूतगन्धर्वाः स्थानमुत्तमम् ।
दृश्यादृश्याश्च राजेन्द्र! सेवन्ते सिद्धिकाङ्क्षिणः ॥ ११ ॥
अहं च परमं स्थानं ततः प्रभृति संश्रितः ।
अत्र प्रणवरूपो वै स्थाने तिष्ठत्युमापतिः ॥ १२ ॥
श्रीकण्ठः सगणः सर्वभूतसङ्घैर्निषेवितः ।
अस्माद्गिरिवराद्भूप!वक्ष्ये तीर्थस्य विस्तरम् ॥ १३ ॥

यानि सन्तीहतीर्थानिपुण्यानिनृपसत्तम! । यानियानीहतीर्थानिनर्मदायास्तटद्वये
न तेषां विस्तरं वक्तुं शक्तोब्रह्माऽपिभूपते । योजनानां शतं साग्रं श्रूयतेसरिदुत्तमा
विस्तरेण तु राजेन्द्र अर्धयोजनमायता । षष्टिर्तीर्थसहस्राणि षष्टिकोट्यस्तथैवच

पर्वतादुदधिं यावदुभे कूले न संशयः ॥ १७ ॥
सप्तषष्टि सहस्राणि सप्तषष्टिशतानि च ।
सप्तषष्टिस्तथा कोट्यो वायुस्तीर्थानि चाब्रवीत् ॥ १८ ॥

परं कृतयुगे तानि यान्ति प्रत्यक्षतां नृप! । पश्यन्ति मानवाः सर्वेसततं धर्मबुद्धयः
यथायथा कलिर्घोरो वर्ततेदारुणोनृप । तथातथाल्पतांयान्तिहीनसत्वायतोनराः
जालेश्वरादितीर्थानि पर्वतेऽस्मिन्नराधिप । पितृतृप्तिप्रदान्याहुःस्वर्गमोक्षप्रदानिच
श्रेष्ठं दारुवनं तत्र चरुकासङ्गमः शुभः । उत्तरे नर्मदायास्तु चरुकेश्वरमुत्तममम् ॥
दारुकेश्वरतीर्थं च व्यतीपातेश्वरं तथा । पातालेश्वरतीर्थं च कोटियज्ञं तथैव च ॥
इति चैवोत्तरे कूले रेवाया नृपसत्तम! । अमरेश्वरपार्श्वे च लिङ्गान्यष्टोत्तरं शतम् ॥

वरुणेश्वरमुख्यानि सर्वपापहराणि च ॥ २५ ॥

मान्धातृपुरपार्श्वे च सिद्धेश्वरयमेश्वरौ । ॐकारात्पूर्वभागे च केदारं तीर्थमुत्तमम्
तत्समीपे महाराज स्वर्गद्वारमघापहम् । नाम्ना ब्रह्मेश्वरं पुण्यं सप्तसारस्वतं पुरः
रुद्राष्टकं च सावित्रं सोमतीर्थं तथैव च । एतानि दक्षिणे तीरे रेवाया भरतर्षभ!॥

अस्मिंस्तु पर्वते तात रुद्राणां कोटयः स्थिताः ।
स्नानैस्तुष्टिर्भवेत्तेषां गन्धमाल्यानुलेपनैः ॥ २९ ॥
प्रीतास्तेऽपि भवन्त्यत्र रुद्रा राजन्न संशयः ।
जपेन पापसंशुद्धिर्ध्यानेनानन्त्यमश्नुते ॥ ३० ॥

दानेन भोगानाप्नोतिइत्येवं शङ्करोऽब्रवीत् । पर्वतात्पश्चिमेदेशे स्वयं देवो महेश्वरः

स्थितः प्रणवरूपोऽसौ जगदादिः सनातनः ॥ ३१ ॥
तत्र स्नात्वा शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः ।
पितृकार्यं प्रकुर्वीत विधिदृष्टेन कर्मणा ॥ ३२ ॥

तिलोदकेन तत्रैव तर्पयेत्पितृदेवताः । आसप्तमं कुलं तस्य स्वर्गेमोदति पाण्डव! ॥
आत्मना सह भोगांश्चविविधाँल्लभते सुखी । षष्टिवर्षसहस्राणि क्रीडतेसुरपूजितः
मोदते सुचिरं कालं पितृपूजाफलर्धितः । ततः स्वर्गात्परिभ्रष्टोजायते विमले कुले

धनवान्दानशीलश्च नीरोगो लोकपूजितः ।
पुनः स्मरति तत्तीर्थं गमनं कुरुते पुनः ॥ ३६ ॥

द्वितीये जन्मनिभवेद्रुद्रस्यानुचरोत्कटः । तथैव ब्रह्मचर्येणसोपवासो जितेन्द्रियः
सर्वहिंसानिवृत्तस्तु लभतेफलमुत्तमम् । एवं धर्मसमाचारो यस्तुप्राणान्परित्यजेत्
तस्य पुण्यफलं यद्वै तन्निबोध नराधिप! । शतं वर्षसहस्राणिस्वर्गे मोदतिपाण्डव

अप्सरोगणसङ्कीर्णे दिव्यशब्दानुनादिते ।
दिव्यगन्धानुलिप्ताङ्गो दिव्यालङ्कारभूषितः ॥ ४० ॥
क्रीडते दैवतैः सार्द्धं सिद्धगन्धर्वसंस्तुतः ।
ततः स्वर्गात्परिभ्रष्टो राजा भवति वीर्यवान् ॥ ४१ ॥

हस्त्यश्वरथयानैश्च धर्मज्ञः शास्त्रतत्परः । गृहे स्तम्भशताकीर्णे सौवर्णे रजतान्विते

सप्ताष्टभूमिसुद्वारे दासीदाससमाकुले । मत्तमातङ्गनिःश्वासैर्वाजिह्रेषितनादितैः
क्षुभ्यतेतस्य तद्द्वारमिन्द्रस्य भुवनं यथा । राजराजेश्वरःश्रीमान्सर्वस्त्रीजनवल्लभः

तस्मिन्गृहे वसित्वा तु क्रीडाभोगसमन्वितः ।
जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ ४५ ॥

एवं तेषां भवेत्सर्वं ये मृता ह्यमरेश्वरे । अग्निप्रवेशं यः कुर्याद्भक्त्या ह्यमरकण्टके ॥

स मृतः स्वर्गमाप्नोति यास्यते परमां गतिम् ।
स्नानं दानं जपो होमः शुभं वा यदि वाऽशुभम् ॥ ४७ ॥
पुराणे श्रूयते राजन्सर्वं कोटिगुणं भवेत् ।
तस्यास्तीरे तु ये वृक्षाः पतिताः कालपर्यये ॥ ४८ ॥
नर्मदातोयसंस्पृष्टास्ते यान्ति परमां गतिम् ।
अनिवृत्तिका गतिस्तस्य पवनस्याऽम्बरे यथा ॥ ४६ ॥
पतनं कुरुते यस्तु तस्मिंस्तीर्थे नराधिप! ।
कन्यास्त्रीणि सहस्राणि पाताले भोगभागिनः ॥ ५० ॥
तिष्ठन्ति भवने तस्य प्रेषणे प्रार्थयन्ति च ।
दिव्यभोगैः सुसम्पन्नः क्रीडते कालमीप्सितम् ॥ ५१ ॥

पृथिव्यां ह्यासमुद्रायां तादृशो नैव जायते । यादृशोऽहं नरश्रेष्ठ पर्वतोऽमरकण्टकः
तत्र तीर्थं तु विज्ञेयं पर्वतस्यानु पश्चिमे । ह्रदो जालेश्वरोनाम त्रिषुलोकेषुविश्रुतः
तत्र पिण्डप्रदानेनसन्ध्योपासनकेन तु । पितरो द्वादशाब्दानितर्पितास्तुभवन्तिवै
दक्षिणे नर्मदातीरे कपिला तु महानदी । सरलार्जुनसंच्छन्नाखदिरैरुपशोभिता ॥
माधवीसल्लकीभिश्चवल्लीभिश्चाप्यलङ्कृता ।श्वापदैर्गर्जमानैश्चगोमायुवानरादिभिः
पक्षिजातिविशेषैश्च नित्यं प्रमुदितानृप । साग्रं कोटिशतंतत्रऋषीणामितिशुश्रुम
तपस्तप्त्वा गतं मोक्षं येषां जन्म न चागमः । येन तत्रतपस्तप्तंकपिलेन महात्मना

तत्र तच्चाऽभवत्तीर्थं पुण्यं सिद्धनिषेवितम् ।
ये न सा कापिलैस्तात सेविता ऋषिभिः पुरा ॥ ५६ ॥

तेन सा कपिलानाम गीता पापक्षयङ्करी । तत्रकोटि शतं साग्रं तीर्थानाममरेश्वरे

अहोरात्रोषितो भूत्वा मुच्यते सर्वकिल्बिषैः ।

दानं च विधिवद् दत्त्वा यथाशक्त्या द्विजोत्तमे ॥ ६१ ॥

ईश्वरानुग्रहात्सर्वं तत्र कोटिगुणं भवेत् । यस्मादनक्षरं रूपं प्रणवस्येह भारत! ॥

शिवस्वरूपस्य ततः कृतमात्राक्षरं भवेत् । तिर्यञ्चः पशवश्चैववृक्षा गुल्मलतादयः ॥

तेऽपि तत्र क्षयं याताः स्वर्गं यान्ति न संशयः ।

विशल्या तत्र या प्रोक्ता तत्रैव तु महानदी ॥ ६४ ॥

स्नात्वा दत्त्वा यथान्यायं तत्राऽपि सुकृती भवेत् ।

तत्र देवगणाः सर्वे सकिन्नरमहोरगाः ॥ ६५ ॥

यक्षराक्षसगन्धर्वा ऋषयश्च तपोधनाः । सर्वे समागतास्तां वै पश्यन्ति ह्यमरेश्वरे

तैश्च सर्वैः समागम्य वन्दितौ तौ शुभौ कटौ ।

पुरा युगे महाघोरे सर्वलोकभयङ्करे ॥ ६७ ॥

नर्मदायाः सुतस्तत्र सशल्योविशलीकृतः । सर्वदेवैश्चऋषिभिर्विशल्यातेनसास्मृता

युधिष्ठिर उवाच

उत्पन्ना तु कथं तात! विशल्या कपिला कथम् ।

कथं वा नर्मदापुत्रः शल्ययुक्तोऽभवन्मुने! ॥ ६९ ॥

आश्चर्यभूतं लोकस्य श्रोतुमिच्छामि सुव्रत! ॥ ७० ॥

श्रीमार्कण्डेय उवाच

पुरा दाक्षायणीनामसहिताशूलपाणिना । क्रीडित्वानर्मदातोयेपरया च मुदानृप

जलादुत्तीर्य सहसावस्त्रमन्यत्समाहरत् । देव्यास्तुस्नानवस्त्रं तत्पीडितंलीलयानृप

सहितानुचरीभिस्तु इन्द्रायुधनिभं भृशम् ।

तस्मिन्निष्पीड्यमाने तु वारि यन्निःसृतं तदा ॥ ७३ ॥

तस्मादियं सरिज्जज्ञे कपिलाख्या महानदी ।

संयोगादङ्गरागस्य वस्त्रोद्यत्कपिलं जलम् ॥ ७४ ॥

गलितं तेन कपिला वर्णतो नामतोऽभवत् ।
तथा गन्धरसैर्युक्तं नानापुष्पैस्तु वासितम् ॥ ७५ ॥
नानावर्णारुणं शुभ्रं वस्त्राद्यद्वारिनिःसृतम् । पीड्यमानंकरैःशुभ्रैस्तैस्तुपल्लवकोमलैः
कपिलंजलमिश्रैस्तुतस्माद्देशासरिद्वरा । कपिलाचोच्यतेतज्ज्ञैःपुराणार्थविशारदैः
एषा वै वस्त्रसम्भूता नर्मदातोयसम्भवा । महापुण्यतमा ज्ञेया कपिला सरिदुत्तमा
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये कपिलासरित्सम्भववर्णनंनामैकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः

## विशल्यासम्भववर्णनम्

श्रीमार्कण्डेय उवाच

अतः परं प्रवक्ष्यामि साविशल्या ह्यभूद्यथा । आश्चर्यभूतालोकस्यसर्वपापक्षयङ्करी
ब्रह्मणो मानसः पुत्रोमुख्योह्यग्निरजायत । मुख्योवह्निरितिप्रोक्तऋषिःपरमधार्मिकः
तस्य स्वाहाऽभवत्पत्नी स्मृता दाक्षायणी तु सा ।
तस्यां मुख्या महाराज! त्रयः पुत्रास्तदाऽभवन् ॥ ३ ॥
अग्निराहवनीयस्तुदक्षिणाग्निस्तथैव च । गार्हपत्यस्तृतीयस्तुत्रैलोक्यंयैश्चधार्यते
तथा वै गार्हपत्योग्निर्जज्ञे पुत्रद्वयं शुभम् । पञ्चकः शङ्कुनामा च तावुभावग्निसत्तमौ
वसन्नग्निर्नदीतीरे समाश्रित्य महत्तपः । रुद्रमाराधयामास जितात्मासुसमाहितः
दशवर्षसहस्राणि चचारविपुलं तपः । तमुवाच महादेवः प्रसन्नोवृषभध्वजः ॥ ७ ॥
भोभो ब्रूहि महाभागयत्तेमनसिवर्तते । दाता ह्यहमसन्देहोयद्यपि स्यात्सुदुर्लभम्

अग्निरुवाच

नर्मदेयं महाभागा! सरितोयाश्चषोडश । भवन्तु ममपत्न्यस्तास्त्वत्प्रसादान्महेश्वर

तासु वै चिन्तितान्पुत्रानग्र्यानुत्पादयाम्यहम् ।
एष एव वरो देव दीयतां मे महेश्वर! ॥ १० ॥

ईश्वर उवाच

एतास्तु धिषिणनाम्न्यो वै भविष्यन्ति सरिद्वराः
पत्न्यस्तव विशालाक्ष्यो वेदे ख्याता न संशयः ॥ ११ ॥
तासां पुत्रा भविष्यन्ति ह्यग्नयो येऽध्वरे स्मृताः ।
धिष्ण्यानाम सुविख्याता यावदाभूतसम्प्लवम् ॥ १२ ॥

एवमुक्त्वा महादेवस्तत्रैवाऽन्तरधीयत । नर्मदा च सरिच्छ्रेष्ठा तस्यभार्या बभूवह
कावेरी कृष्णवेणीचरेवाचयमुनातथा । गोदावरीवितस्ता च चन्द्रभागाइरावती

विपाशा कौशिकी चैव सरयूः शतरुद्रिका ।
शिप्रा सरस्वती चैव ह्रादिनी पावनी तथा ॥ १५ ॥
एताः षोडश नद्यो वै भार्यार्थं सम्व्यवस्थिताः ।
तदाऽऽत्मानं विभज्याऽऽशु धिष्णीषु स महाद्युतिः ॥ १६ ॥
व्यभिचारात्तु भर्त्तुर्वै नर्मदाद्यासु धिष्णिषु ।
उत्पन्नाः शुचयः पुत्राः सर्वे ते धिष्ण्यपाः स्मृताः ॥ १७ ॥
तस्याश्च नर्मदायास्तु धिष्णीन्द्रोनाम विश्रुतः ।
बभूव पुत्रो बलवान्रूपेणाऽप्रतिमो नृप! ॥ १८ ॥

ततो देवासुरं युद्धमभवल्लोमहर्षणम् । मयतारकमित्येवं त्रिषु लोकेषु विश्रुतम्
तत्र दैत्यैर्महाघोरैर्मयतारपुरोगमैः । ताडितास्तेसुरास्त्रस्ताविष्णुं वै शरणं ययुः

त्रायस्व नो हृषीकेश! घोरादस्मान्महाभयात् ।
दैत्यान्सर्वान्संहरस्व मयतारपुरोगमान् ॥ २१ ॥

एवमुक्तः स भगवान्दिशो दश व्यलोकयत् । ततो भगवता दृष्टौ रणेपावकमारुतौ

आहूतौ विष्णुना तौ तु सकाशं जग्मतुः क्षणात् ।
स्थितौ तौ प्रणतौ चाग्रे देवदेवस्य धीमतः ॥ २३

ततो धिष्णिः पावकेन्द्रो देवेनोक्तो महात्मना ।
निर्द्दहेमान्महाघोरान्नार्मदेयमहासुरान् ॥ २४ ॥
अथैवमुक्तौ तौ देवौ रणे पावकमारुतौ । दैत्यान्ददहतुः सर्वान्मयतारपुरोगमान् ॥
दह्यमानास्तु ते सर्वे शस्त्रैरग्निं त्ववेष्टयन् । दिव्यैरग्न्यर्कसङ्काशैः शतशोऽथसहस्रशः
तांश्चाग्निःशस्त्रनिकरैर्निर्द्ददाहमहासुरान् । ज्वालामालाकुलंसर्वंवायुनानिर्मितंतदा
दह्यमानास्ततो दैत्या अग्निज्वालासमावृताः ।
प्रविश्य पातालतलं जले लीनाः सहस्रशः ॥ २८ ॥
ततः कुमारमग्निं तु नर्मदापुत्रमव्ययम् । पूजयित्वा सुराः सर्वेजग्मुस्तेत्रिदशालयम्
सशल्यस्तु महातेजारेवापुत्रोवृतोऽग्निभिः । नर्मदामागतः क्षिप्रंमातरंद्रष्टुमुत्सुकः
तं दृष्ट्वा पुत्रमायान्तं शस्त्रौघेण परिक्षतम् ।
नर्मदा पुण्यसलिला अभ्युत्थाय सुविस्मिता ॥ ३१ ॥
पर्यष्वजत बाहुभ्यां प्रस्नवापीडितस्तनी । सशल्यं पुत्रमादायकापिलंह्रदमाविशत्
प्रविष्टमात्रे तु ह्रदे कापिलेपापनाशिनि । सशल्यं तं विशल्यंचक्षणात्कृतवतीतदा
स विशल्योऽभवद्यस्मात्प्राप्य तस्याः शिवं जलम् ।
कपिला नामतस्तेन विशल्या चोच्यते बुधैः ॥ ३४ ॥
अन्येऽपि तत्र ये स्नाताः शुचयस्तु समाहिताः ।
पापशल्यैः प्रमुच्यन्ते मृता यान्ति सुरालयम् ॥ ३५ ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं पुरा त्वया ।
उत्पत्तिकारणं तात! विशल्याया नरेश्वर! ॥ ३६ ॥
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये विशल्यासम्भवोनाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

# त्रयोविंशोऽध्यायः

## विशल्यासङ्गममाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तत्रैव सङ्गमे राजन्! भक्त्या परमया नृप! ।
प्राणास्त्यजन्ति ये मर्त्यास्ते यान्ति परमां गतिम् ॥ १ ॥
सन्न्यस्तसर्वसङ्कल्पो यस्तु प्राणान्परित्यजेत् ।
अमरेश्वरमासाद्य स स्वर्गे नियतं वसेत् ॥ २ ॥
शैलेन्द्रं यः समासाद्य आत्मानं मुञ्चतेनरः । विमानेनार्कवर्णेनसगच्छेदमरावतीम्
नरं पतन्तमालोक्य नगादमरकण्टकात् । ब्रुवन्त्यप्सरसः सर्वा मम भर्त्ता भवेदिति
समं जलं धर्मविदो वदन्ति सारस्वतं गाङ्गमिति प्रबुद्धाः ।
तस्योपरिष्टात्प्रवदन्ति तज्ज्ञा रेवाजलं नात्र विचारणाऽस्ति ॥ ५ ॥
अनेकविद्याधरकिन्नराद्यैरध्यासितं पुण्यतमाधिवासैः ।
रेवाजलं धारयतो हि मूर्ध्ना स्थानं सुरेन्द्राधिपतेः समीपे ॥ ६ ॥
नर्मदा सर्वदा सेव्या बहुनोक्तेन किं नृप! । यदीच्छेन्न पुनर्द्रष्टुं घोरंसंसारसागरम्
त्रयाणामपि लोकानांमहतीपावनीस्मृता । यत्रतत्रमृतस्यापिध्रुवंगाणेश्वरीगतिः
अनेकयज्ञायतनैर्वृताङ्गी न ह्यत्र किञ्चिद्यदतीर्थमस्ति ।
तस्यास्तु तीरे भवता यदुक्तं तपस्विनो वाप्यतपस्विनो वा ॥ ६ ॥
म्रियन्ति ये पापकृतोमनुष्यास्ते स्वर्गमायान्ति यथाऽमरेन्द्राः ॥ १० ॥
एवं तु कपिला चैव विशल्याराजसत्तम! । ईश्वरेणपुरासृष्टालोकानांहितकाम्यया
तत्रस्नात्वानरोराजन्सोपवासोजितेन्द्रियः। अश्वमेधस्यमहतोऽसंशयंफलमाप्नुयात्
अनाशकं च यः कुर्यात्तस्मिंस्तीर्थे नराधिप! ।
सर्वपापविनिर्मुक्तो याति वै शिवमन्दिरम् ॥ १३ ॥

पृथिव्यां सागरान्तायां स्नानदानेन यत्फलम् ।
विशल्यासङ्गमे स्नात्वा सकृत्तत्फलमश्नुते ॥ १४
एवं पुण्या पवित्रा चकथिता तव भूपते । भूयोमांपृच्छसिचयत्तच्चैवकथयाम्यहम्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे विशल्यासङ्गममाहात्म्यवर्णनंनाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# चतुर्विंशोऽध्यायः

## करनर्मदासङ्गममाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

सङ्गमः करनर्मदयोः पुरे मान्धातृसञ्ज्ञिते ।
गत्वा स्नात्वा तर्पयित्वा पितॄन्विष्णुपुरं नयेत् ॥ १ ॥
मर्द्दयित्वाकरौ पूर्वं विष्णुर्दैत्यजिघांसया । चक्रं जग्राहतत्रैव स्वेदाज्जातासरिद्वरा
सङ्गता रेवया तत्र स्नात्वा पापैः प्रमुच्यते ॥ ३ ॥
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदामाहात्म्ये करनर्मदासङ्गममाहात्म्यवर्णनंनाम-
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

# पञ्चविंशोऽध्यायः

## नीलगङ्गासङ्गममाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ॐकारात्पूर्वभागे वै सङ्गमो लोकविश्रुतः । रेवया सङ्गता यत्र नीलगङ्गानृपोत्त
तत्र स्नात्वा जपित्वा च कोऽर्थोऽलभ्यो भवेद्भुवि ।
षष्टिवर्षसहस्राणि नीलकण्ठपुरे वसेत् ॥ २ ॥
तर्पयित्वा पितृञ्छ्राद्धेतिलमिश्रैर्जलैरपि । उद्धरेदात्मना सार्द्धं पुरुषानेकविंशति

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये नीलगङ्गायाः सङ्गममाहात्म्यवर्णनंनाम-पञ्चविंशोऽध्यायः ॥ २५ ॥

---

# षड्विंशोऽध्यायः

## मधूकतृतीयाव्रतविधानवर्णनम्

युधिष्ठिर उवाच

जालेश्वरेऽपि यत्प्रोक्तंत्वयापूर्वंद्विजोत्तम । तत्कथंतु भवेत्पुण्यमृषिसिद्धनिषेवित

श्रीमार्कण्डेय उवाच

जालेश्वरात्परं तीर्थंनभूतंन भविष्यति । तस्योत्पत्तिकथयतःश्रृणु त्वं पाण्डुनन्द
पुरा ऋषिगणाः सर्वेसेन्द्राश्चैवमरुद्गणाः । तापिताअसुरैः सर्वैः क्षयंनीताह्यनेक
बाणासुरप्रभृतिभिर्जम्भशुम्भपुरोगमैः । वध्यमाना ह्यनेकैश्च ब्रह्माणं शरणं ग
विमानैः पर्वताकारैर्हयैश्चैव गजोपमैः । स्यन्दनैर्नगराकारैः सिंहशार्दूलयोजि

च्छपैर्मकरैश्चान्ये जग्मुरन्ये पदातयः । प्राप्य ते परमं स्थानमशक्यं यदधार्मिकैः
ष्ट्वा पद्मोद्भवं देवंसर्वलोकस्य शङ्करम् । तेसर्वे तत्र गत्वा तु स्तुतिंचक्रुःसमाहिताः

देवा ऊचुः

जयामेय जयाभेद जय सम्भूतिकारक !। पद्मयोने सुरश्रेष्ठ त्वां वयं शरणं गताः ॥

तच्छ्रुत्वा तु वचोदेवो देवानां भावितात्मनाम् ।
मेघगम्भीरया वाचा प्रत्युवाच पितामहः ॥ ६ ॥

क वो ह्यागमनंदेवाःसर्वेषां चविवर्णता । केनावमानिताः सर्वे शीघ्रंकथयतामराः

देवा ऊचुः

बाणोनाम महावीर्यो दानवोबलदर्पितः । तेनास्माकं हृतं सर्वंधनरत्नैर्वियोजिताः
देवानांवचनंश्रुत्वाब्रह्मालोकपितामहः । चिन्तयामासदेवेशस्तस्यनाशाययाक्रिया

अवध्यो दानवः पापः सर्वेषां वै दिवौकसाम् ।
मुक्त्वा तु शङ्करं देवं न मया न च विष्णुना ॥ १३ ॥

तत्रैव सर्वे गच्छामो यत्र देवो महेश्वरः । सगतिश्चैव सर्वेषां विद्यतेऽन्यो नकश्चन
एवमुक्त्वा सुरैः सर्वैर्ब्रह्मा वेदविदांवरः । ब्राह्मणैः सह विद्वद्भिर्गतो यत्र महेश्वरः

स्तुतिभिश्च सुपुष्टाभिस्तुष्टाव परमेश्वरम् ॥ १६ ॥

देवा ऊचुः

जय त्वं देवदेवेश! जयोमार्द्धशरीरधृक्! ।
वृषासन! महाबाहो शशाङ्ककृतभूषण! ॥ १७ ॥

नमः शूलाग्रहस्ताय नमः खट्वाङ्गधारिणे । जय भूतपते देव! दक्षयज्ञविनाशन ॥
पञ्चाक्षर नमो देव पञ्चभूतात्मविग्रह । पञ्चवक्त्रमयेशान वेदैस्त्वं तु प्रगीयसे ॥
सृष्टिपालनसंहारांस्त्वं सदाकुरुषे नमः । अष्टमूर्ते स्मरहरस्मर सत्यं यथा स्तुतः
पञ्चात्मिका तनुर्देव ब्राह्मणैस्ते प्रगीयते । सद्यो वामे तथाऽघोरेईशे तत्पुरुषे तथा
हेमजाले सुविस्तीर्णे हंसवत्कूजसे हर । एवं स्तुतोमुनिगणैर्ब्रह्माद्यैश्च सुरासुरैः

प्रहृष्टः सुमना भूत्वा सुरसङ्घानुवाच ह ॥ २३ ॥

ईश्वर उवाच

स्वागतं देवविप्राणां सुप्रभाताऽद्य शर्वरी ।
किं कुर्मो वदत क्षिप्रं कोऽन्यःसेव्यःसुरासुरैः ॥ २४ ॥
किं दुःखं को नु सन्तापः कुतो वो भयमागतम् ।
कथयध्वं महाभागाः! कारणं यन्मनोगतम् ॥ २५ ॥
एवमुक्तास्तु रुद्रेण प्रत्यवोचन्सुरर्षभाः ।
स्वान्स्वान्देहान्दर्शयन्तो लज्जमाना अधोमुखाः ॥ २६ ॥

अस्तिघोरोमहावीर्योदानवोबलदर्पितः । बाणोनाम्नेतिविख्यातोयस्यतत्त्रिपुरंमह
तेन वै सुतपस्तप्तं दशवर्षशतानि हि । तस्य तुष्टोऽभवद्ब्रह्मा नियमेन दमेन
पुराणि तान्यभेद्यानिददौकामगमानि वै । आयसं राजतं चैवसौवर्णंचतथापर

त्रिपुरं ब्रह्मणा सृष्टं भ्रमत्तत्कामगामि च ।
तस्यैव तु बलोत्कृष्टास्त्रिपुरे दानवाः स्थिताः ॥ ३० ॥

त्रैलोक्यं सकलंदेव!पीडयन्तिमहासुराः । दण्डपाशासिशस्त्राणिअविकारेविकुर्व

त्रिपुरं दानवैर्जुष्टं भ्रमत्तच्चक्रसन्निभम् ॥ ३१ ॥
क्वचिद् दृश्यमदृश्यं वा मृगतृष्णेव लक्ष्यते ॥ ३२ ॥

यस्मिन्पतति तद्दिव्यं दृप्तस्य त्रिपुरंमहत् । नतत्रब्राह्मणादेवागावो नैव तुजन्तव
न तत्र दृश्यते किञ्चित्पतेद्यत्र पुरत्रयम् । नद्यो ग्रामाश्चदेशाश्चबहवोभस्मसात्कृता
सुवर्णं रजतं चैव मणिमौक्तिकमेवच । स्त्रीरत्नं शोभनं यच्च तत्सर्वं कर्षते बला
न शस्त्रेण न चास्त्रेण न दिवा निशि वा हर । शक्यतेदेवसङ्घैश्चनिहन्तुं सकथञ्च
तद्दहस्वमहादेव त्वं हि नः परमा गतिः । एवं प्रसादं देवेश! सर्वेषां कर्तुमर्हसि
येन देवाश्च गन्धर्वा ऋषयश्च तपोधनाः । परां धृतिंसमायान्ति तत्प्रभो कर्तुमर्हसि

ईश्वर उवाच

एतत्सर्वं करिष्यामि मा विषादं गमिष्यथ ।
आचरेणैव कालेन कुर्यां युष्मत्सुखावहम् ॥ ३६ ॥

आश्वासयित्वा तान्देवान्सर्वानिन्द्रपुरोगमान्
चिन्तयामास देवेशस्त्रिपुरस्य वधम्प्रति ॥ ४० ॥
कथं केन प्रकारेण हन्तव्यं त्रिपुरं मया। तमेकंनारदंमुक्त्वा नान्योपायोविधीयते
एवं संस्तस्य चात्मानं ततो ध्यातः स नारदः।
तत्क्षणादेव सम्प्राप्तो वायुभूतो महातपाः ॥ ४२ ॥
कमण्डलुधरो देवस्त्रिदण्डीज्ञानकोविदः। योगपट्टाक्षसूत्रेण छत्रेणैव विराजितः
जटाजूटाबद्धशिराज्वलनार्कसमप्रभः। त्रिधा प्रदक्षिणीकृत्य दण्डवत्पतितोभुवि
कृताञ्जलिपुटो भूत्वा नारदो भगवान्मुनिः।
स्तोत्रेण महता शर्वः स्तुतो भक्त्या महामनाः ॥ ४५ ॥



नारद उवाच

जय शम्भोविरूपाक्ष! जय देव त्रिलोचन। जय शङ्कर ईशान रुद्रेश्वर नमोऽस्तुते ॥
त्वं पतिस्त्वं जगत्कर्ता त्वमेव लयकृद्विभो।
त्वमेव जगतांनाथोदुष्टान्तकनिषूदनः ॥ ४७ ॥
त्वं नः पाहि सुरेशान! त्रयीमूर्ते सनातन। भवमूर्ते भवारे त्वं भजतामभयो भव
भवभावविनाशार्थं भव त्वां शरणं भजे।
किमर्थं चिन्तितो देव! आज्ञा मे दीयतां प्रभो !॥ ४६! ॥
कस्य संक्षोभये चित्तं को वाऽद्य पततु क्षितौ। कमद्यकलहेनाहंयोजये जयताम्वर
नारदस्य वचः श्रुत्वा देवदेवो महेश्वरः। उत्फुल्लनयनो भूत्वा इदं वचनमब्रवीत् ॥
स्वागतं ते मुनिश्रेष्ठ सदैव कलहप्रिय!। वीणावादनतत्त्वज्ञ! ब्रह्मपुत्र सनातन ॥
गच्छ नारद! शीघ्रं त्वं यत्र तत्त्रिपुरं महत्।
बाणस्य दानवेन्द्रस्य सर्वलोकभयावहम् ॥ ५३ ॥
भर्तारो देवतातुल्याः स्त्रियस्तत्राऽप्सरःसमाः।
तासां वै तेजसा चैव भ्रमते त्रिपुरं महत् ॥ ५४ ॥
न शक्यते कथं भेत्तुं सर्वोपायैर्द्विजोत्तम। गत्वा त्वं मोहय क्षिप्रं पृथग्धर्मैरनेकधा

नारद उवाच

तव वाक्येन देवेश भेदयामि पुरोत्तमम् । अभेद्यं बहुधोपायैर्यत्तु देवैः सवासवैः

एवमुक्त्वा गतो भूप! शतयोजनमायतम् । बाणस्य तत्पुरश्रेष्ठमृद्धिवृद्धिसमायुत

कृतकौतुकसम्बाधं नानाधातुविचित्रितम् । अनेकहर्म्यसञ्छन्नमनेकायतनोज्वल

द्वारतोरणसंयुक्तं कपाटार्गलभूषितम् । बहुयन्त्रसमोपेतं प्राकारपरिखोज्ज्वलम्

वापीकूपतडागैश्च देवतायतनैर्युतम् । हंसकारण्डवाकीर्णं पद्मिनीखण्डमण्डित

अनेकवनशोभाढ्यं नानाविहगमण्डितम् ।
एवं गुणगणाकीर्णं बाणस्य पुरमुत्तमम् ॥ ६१ ॥
तस्य मध्ये महाकायं सप्तकक्षं सुशोभितम् ।
बाणस्य भवनं दिव्यं सर्वं काञ्चनभूषितम् ॥ ६२ ॥
मौक्तिकादामशोभाढ्यं वज्रवैडूर्यभूषितम् ।
रुक्मपट्टतलाकीर्णं रत्नभूम्या सुशोभितम् ॥ ६३ ॥

मत्तमातङ्गनिःश्वासैः स्यन्दनैः सङ्कुलीकृतम् । हयहेषितशब्दैश्च नारीणांनूपुरस्वनं

खड्गतोमरहस्तैश्च वज्राङ्कुशशरायुधैः । रक्षितं घोररूपैश्च दानवैर्बलदर्पितैः ॥ ६५

एवंगुणगणाकीर्णं बाणस्य भवनोत्तमम् । कैलासशिखरप्रख्यं महेन्द्रभवनोपम

नारदो गगने शीघ्रमगमत्पुरसन्मुखः । द्वारदेशं समासाद्य क्षत्तारं वाक्यमब्रवी

भोभोः क्षत्तर्महाबुद्धे राजकार्यविशारद! ।
शीघ्रं बाणाय चाचक्ष्व नारदो द्वारि तिष्ठति ॥ ६८ ॥
स वन्दयित्वा चरणौ नारदस्य त्वरान्वितः ।
सभामध्यगतं बाणं विज्ञप्तुमुपचक्रमे ॥ ६९ ॥

वेपमानाङ्गयष्टिस्तु करेणापिहिताननः । शृण्वतां सर्वयोधानामिदं वचनमब्रवी

वन्दितो देवगन्धर्वैर्यक्षकिन्नरदानवैः । कलिप्रियो दुराराध्यो नारदो द्वारितिष्ठ

द्वारपालस्य तद्वाक्यं श्रुत्वा बाणस्त्वरान्वितः ।
द्वाःस्थमाह महादैत्यः सविस्मयमिदं तदा ॥ ७२ ॥

बाण उवाच

ब्रह्मपुत्रं सतेजस्कं दुःसहं दुरतिक्रमम् । प्रवेशय महाभागं किमर्थं वारितो बहिः
श्रुत्वा प्रभोर्वचस्तस्य प्रावेशयदुदीरितम् । गत्वा वेगेन महता नारदं गृहमागतम्
दृष्ट्वा देवर्षिमायान्तं नारदं सुरपूजितम् । सहसोत्थाय संहृष्टो ववन्दे चरणौ मुनेः

ददौ चाऽऽसनमर्घ्यं च पाद्यं पूजां यथाविधि ।
न्यवेदयच्च तद्राज्यमात्मानं बान्धवैः सह ॥ ७६ ॥
पप्रच्छ कुशलञ्चाऽपि मुनिं बाणासुरः स्वयम् ॥ ७७ ॥

नारद उवाच

साधुसाधु महाबाहोदनोर्वंशविवर्द्धन ।कोऽन्यस्त्रिभुवनेश्लाघ्यस्त्वांमुत्तवादनुपुङ्गव
पूजितोऽहंदनुश्रेष्ठ धनरत्नैः सुशोभनैः ।राज्येन चात्मना वापि ह्येवं कः पूजयेत्परः

न मे कार्यं हि भोगेन भुङ्क्ष्व राज्यमनामयम् ।
त्वद्दर्शनोत्सुकः प्राप्तो दृष्ट्वा देवं महेश्वरम् ॥ ८० ॥
भ्रमते त्रिपुरं लोके स्त्रीसतीत्वान्मया श्रुतम् ।
तान्द्रष्टुकामः सम्प्राप्तस्त्वद्द्वारान्दानवेश्वर !॥ ८१ ॥

मन्यसेयदि मे शीघ्रंदर्शयस्वचमाचिरम् । नारदस्यवचःश्रुत्वाकञ्चुकिं समुदीक्ष्यवै
अन्तःपुरचरंवृद्धंदण्डपाणिंगुणान्वितम् । उवाच राजा हृष्टात्माशब्देनापूरयन्दिशः
नारदाय महादेवीं दर्शयस्वेह कञ्चुकिन् !। अन्तःपुरचरैः सर्वैः समेतामविशङ्कितः
नाथस्याज्ञांपुरस्कृत्यगृहीत्वा नारदंकरे । प्रविश्याकथयद्देव्यैःनारदोऽयंसमागतः

दृष्ट्वा देवी मुनिश्रेष्ठं कृत्वा पादाभिवन्दनम् ।
आसनं काञ्चनं शुभ्रमर्घ्यपाद्यादिकं ददौ ॥ ८६ ॥
तस्यै स भगवांस्तुष्टो ह्याशीर्वादमदात्परम् ।
नान्या देवि! त्रिलोकेऽपि त्वत्समा दृश्यतेऽङ्गना ॥ ८७ ॥

पतिव्रताशुभाचारासत्यशौचसमन्विता । यस्याः प्रभावात्त्रिपुरंभ्रमतेचक्रवत्सदा

तच्छ्रुत्वा वचनं देवी नारदस्य मुदान्वितम् ।

पर्यपृच्छद्दृषिं भक्त्या धर्मं धर्मभृताम्वरा ॥ ८६ ॥

राज्ञ्युवाच

भगवन्मानुषे लोके देवास्तुष्यन्ति कैर्व्रतैः ।
कानि दानानि दीयन्ते येषां च स्यान्महत्फलम् ॥ ९० ॥
उपवासाश्च ये केचित्स्त्रीधर्मे कथिता बुधैः ।
यैः कृतैः स्वर्गमायान्ति सुकृतिन्यः स्त्रियो यथा ॥ ९१ ॥
एतत्सर्वंमहाभाग!कथयस्वयथातथम् । श्रोतुमिच्छाम्यहंसर्वं कथयस्वाविशङ्कि

नारद उवाच

साधुसाधु महाभागे! प्रश्नोऽयं वेदितस्त्वया ।
यं श्रुत्वा सर्वनारीणां धर्मवृद्धिस्तु जायते ॥ ९३ ॥
उपवासैश्च दानैश्च पतिपुत्रौ वशानुगौ । बान्धवैः पूज्यते नित्यं यैःकृतैःकथयामि
दुर्भगा सुभगायैस्तु सुभगादुर्भगाभवेत् । पुत्रिणी पुत्ररहिताह्यपुत्रा पुत्रिणीतथा
भर्त्तारं लभतेकन्यातथान्याभर्तृवर्जिता । कृताकृतैश्चजायन्ते तन्निबोधस्वसुन्दरि
तिलधेनुं सुवर्णं च रूप्यं गा वाससी तथा ।
पानीयं भूमिदानं च गन्धधूपानुलेपनम् ॥ ९७ ॥
पादुकोपानहौ छत्रं पुण्यानि व्यञ्जनानि च ।
पादाभ्यङ्गं शिरोभ्यङ्गं स्नानं शय्यासनानि च ॥ ९८ ॥
एतानि ये प्रयच्छन्ति नोपसर्पंति ते यमम् । मधुमाषंपयःसर्पिर्लवणं गुडमौषधम्
पानीयं भूमिदानं च शालीनिक्षुरसांस्तथा ।
आरक्तवाससीश्लक्ष्णे दम्पत्योर्ललितादिने ॥ १०० ॥
सौभाग्यं जायते चैव इहलोके परत्र च । ब्राह्मणे वृत्तसम्पन्ने सुरूपे च गुणान्विते
तिथौ यस्यामिदं देयं तत्ते राज्ञि वदाम्यहम् ।
प्रतिपत्सु च या नारी पूर्वाह्णे च शुचिव्रता ॥ १०२ ॥
इन्धनं ब्राह्मणेदद्यात्प्रीयतां मे हुताशनः । तस्याजन्मनि षट्त्रिंशदङ्गप्रत्यङ्गसन्धिषु

न रजो नैव सन्तापोजायते राजवल्लभे । द्वितीयायांतुयानारीनवनीतं मुदान्विता
ददाति द्विजमुख्याय सुकुमारतनुर्भवेत् । लवणं विप्रवर्याय तृतीयायां प्रयच्छति

गौरी मे प्रीयतां देवी तस्याः पुण्यफलं शृणु ।
कौमारिका पतिं प्राप्य तेन सार्द्धमुमा यथा ॥ १०६ ॥
क्रीडत्यविधवा चापि लभते सा महद्यशः ।
नक्तं कृत्वा चतुर्थ्याम्वै दद्याद्विप्राय मोदकान् ॥ १०७ ॥

प्रीयतां मम देवेशो गणनाथो विनायकः । तस्यास्तेनफलेनाशुसर्वकर्मसुभामिनि

विघ्नं न जायते क्वापि एवमाह पितामहः ।
पञ्चमीं तु ततः प्राप्य ब्राह्मणे तिलदा तु या ॥ १०९ ॥

सा भवेद्रूपसम्पन्नायथा चैव तिलोत्तमा । षष्ठ्यांतुयामधूकस्यफलदा तुभवेत्सदा
उद्दिश्यचाग्निजंदेवं ब्राह्मणे वेदपारगे । तस्याःपुत्रोयथा स्कन्दोदेवसङ्घेषुचोत्तमः
उत्पद्यते महाराजः सर्वलोकेषु पूजितः । सप्तम्यां या द्विजश्रेष्ठं सुवर्णेन प्रपूजयेत्
उद्दिश्य जगतोनाथं देवदेवं दिवाकरम् । तस्यपुण्यफलं यद्वै कथितं द्विजसत्तमैः

तत्ते राज्ञि! प्रवक्ष्यामि शृणुष्वैकमनाः सति !।
दद्रूश्चित्रककुष्ठानि मण्डलानि विचर्चिका ॥ ११४ ॥
न भवन्तीहचाङ्गेषु पूर्वकर्मार्जितान्यपि ।
कृष्णां धेनुं तथाऽष्टम्यां या प्रयच्छति भामिनी ॥ ११५ ॥

ब्राह्मणेवृत्तसम्पन्नेप्रीयतां मे महेश्वरः । तस्याजन्मार्जितं पापंनश्यतेविभवान्विता

जायते नात्र सन्देहो यस्माद्दानमनुत्तमम् ।
गन्धधूपं तु या नारी भक्त्या विप्राय दापयेत् ॥ ११७ ॥
कात्यायनीं समुद्दिश्य नवम्यां शृणु यत्फलम् ।
तस्या भ्राता पिता पुत्रः पतिर्वा रणमुत्तमम् ॥ ११८ ॥

प्राप्यते नैव सीदन्ति तेन दानेन रक्षिताः । इक्षुदण्डरसंदेवि! दशम्यांयाप्रयच्छति
लोकपालान्समुद्दिश्य ब्राह्मणे व्यङ्गवर्जिते । तेन दानेनसानित्यं सर्वलोकस्यवल्लभा

जायतेनात्रसन्देह इत्येवं शङ्करोऽब्रवीत् । एकादश्यामुपोष्याथ द्वादश्यामुदकम्
नारायणं समुद्दिश्य ब्राह्मणेविष्णुतत्परे । सा सदास्पर्शसम्भाषैर्द्रावयेद्द्रावयेज्ज
यस्माद्दानं महर्लोके ह्यनन्तमुदके भवेत् ।
पादाभ्यङ्गं शिरोभ्यङ्गं काममुद्दिश्य वै द्विजे ॥ १२३ ॥
ददाति च त्रयोदश्यां भक्त्या परमयाङ्गना ।
यस्यां यस्यां मृता जायेद्भूयो योन्यां तु जन्मनि ॥ १२४ ॥
तस्यां तस्यां तु सा भर्तुर्न वियुज्येत कर्हिचित् ।
तथाप्येवं चतुर्द्दश्यां दद्यात्पात्रमुपानहौ ॥ १२५ ॥
ब्राह्मणे धर्ममुद्दिश्य तस्यालोका ह्यनामयाः ।
एवं च पक्षपक्षान्ते श्राद्धे तर्पेद्द्विजोत्तमान् ॥ १२६ ॥
अव्युच्छिन्ना सदा राज्ञि! सन्ततिर्जायते भुवि ।
एवं ते तिथिमाहात्म्यं दानयोगेन भाषितम् ॥ १२७ ॥
तथा वनस्पतीनांतु आराधनविधिंश्रृणु । जम्बूं निम्बतरुञ्चैव तिन्दुकंमधुकंतथ
आम्रं चामलकञ्चैव शाल्मलिं वटपिप्पलौ ।
शमीविल्वामलीवृक्षं कदलीं पाटलीं तथा ॥ १२९ ॥
अन्यान्पुण्यतमान्वृक्षानुद्दिश्य स्वर्गमाप्नुयात् ॥ १३० ॥

नारद उवाच

चैत्रे मासे तु या नारी कुर्याद्व्रतमनुत्तमम् ।
तस्य व्रतस्य चान्यानिःकलांनार्हन्ति षोडशीम् ॥ १३१ ॥
व्रतेन येन सुभगे दुर्भत्वं न पश्यति । यथा हिमं रविं प्राप्य विलयं याति भूत
तथा दुःखञ्च दौर्भाग्यंव्रतादस्माद्विलीयते । मधुकाख्यांतुललितामाराधयतियेन
विधिंतंश्रृणुसुभगे! कथ्यमानं सुखावहम् । चैत्रेशुक्लतृतीयायां सुस्नाताशुद्धमानस
प्रतिमांमधुवृक्षस्य शाङ्करीमुमयासह । कारयित्वा द्विजवरैः प्रतिष्ठाप्ययथाविधि
सुगन्धिकुसुमैर्धूपैस्तथा कर्पूरकुङ्कुमैः । पूजयेद्विधिनादेवं मन्त्रयुक्तेन भामिनि

पादौनमःशिवायेतिमेढ्रं वै मन्मथाय च । कालोदरायेत्युदरंनीलकण्ठायकण्ठकम्

शिरः सर्वात्मने पूज्य उमां पश्चात्प्रपूजयेत् ।
क्षामोदरायै ह्युदरं सुकण्ठाये च कण्ठकम् ॥ १३८ ॥
शिरः सौभाग्यदायिन्यै पश्चादर्घ्यम्प्रदापयेत् ॥ १३९ ॥

नमस्ते देवदेवेश उमावर जगत्पते । अर्घ्येणानेन मे सर्वं दौर्भाग्यं नाशय प्रभो ! ॥

इति अर्घ्यमन्त्रः

अर्घ्यं दत्त्वा ततः पश्चात्करकंवारिपूरितम् । मधूकपात्रोपभृतं सहिरण्यंतुशक्तितः

करकं वारिसम्पूर्णं सौभाग्येन तु संयुतम् ।
दत्तं तुललिते! तुभ्यं सौभाग्यादिविवर्धनम् ॥ १४२ ॥

इति करकदानमन्त्रः

मंत्रेणानेन विप्राय दद्यात्करकमुत्तमम् । लवणंवर्जयेच्छुक्लांयावदन्यांतृतीयिकाम्
क्षमाप्य देवींदेवेशंनक्तमद्यात्स्वयंहविः । अनेन विधिनासार्धंमासिमासिह्युपक्रमेत्

फाल्गुनस्य तृतीयायां शुक्लायां तु समाप्यते ।
वैशाखे लवणं देयं ज्येष्ठे चाज्यं प्रदीयते ॥ १४५ ॥
आषाढे मासि निष्पावाः पयो देयं तु श्रावणे ।
मुद्गा देया नभस्ये तु शालिमाश्वयुजे तथा ॥ १४६ ॥

कार्त्तिके शर्करापात्रं करकं रसम्भृतम् । मार्गशीर्षे तु कार्पासं करकं घृतसंयुतम्
पौषे तुकुङ्कुमं देयंमाघेपात्रंतिलैर्भृतम् । फाल्गुनेमासिसम्प्राप्तेपात्रंमोदकसम्भृतम्

पश्चात्तृतीयादेयं यत्तत्पूर्वस्यां विवर्जयेत् ।
विधानमासां सर्वासां सामान्यं मनसः प्रिये! ॥ १४९ ॥

प्रतिमां मधुवृक्षस्य तामेव प्रति पूजयेत् । तस्मै सर्वं तु विप्रायआचार्यायप्रदीयते
ततः सम्वत्सरस्यान्ते उद्यापनविधिं शृणु । मधुवृक्षं ततोगत्वा बहुसम्भारसम्भृतः

निखनेत्प्रतिमां मध्ये माधूकीं मधुकस्य च ।
तत्रस्थं पूजयेत्सर्वमुमादेहार्द्धधारिणम् ॥ १५२ ॥

पूजोपहारैर्विपुलैः कुङ्कुमेन पुनःपुनः ।
श्लक्ष्णाभिःपुष्पमालाभिःकौसुम्भैःकेसरेण च ॥ १५३ ॥
कौसुम्भे वाससी शुभ्रे अतसीपुष्पसन्निभे ।
परिधाप्य तां प्रतिमां दम्पती रविसंख्यया ॥ १५४ ॥
उपानद्य गलैश्छत्रैः कण्ठसूत्रैः सकण्ठिकैः ।
कटकैरङ्गुलीयैश्च शयनीयैः शुभास्तृतैः ॥ १५५ ॥
कुङ्कुमेन विलिप्ताङ्गौ बहुपुष्पैश्च पूजितौ । भोजयेद्विविधैरन्नैर्मधूकावासके स्थितौ
भुक्तोत्थितौ तु विश्राम्य शय्यासु च क्षमापयेत् ।
गुरुमूलं यतः सर्वं गुरुर्ज्ञेयो महेश्वरः ॥ १५७ ॥
प्रीते गुरौ ततः सर्वं जगत्प्रीतं सुरासुरम् । यद्यदिष्टतमं लोके यत्किंचिद्दयितं गृहे
तत्सर्वं गुरवे देयमात्मनः श्रेय इच्छता । इदं तु धनिभिर्द्देयमन्यैर्देयं यथोच्यते॥
दाम्पत्यमेकं विधिवत्प्रतिपूज्य शुभव्रतैः । द्वितीयंगुरुदाम्पत्यं वित्तशाठ्यं विवर्जयेत्
ततःक्षमापयेद्देवीं देवं च ब्राह्मणं गुरुम् । यथा त्वंदेविललितेनवियुक्तासिशम्भुना
तथा मे पतिपुत्राणामवियोगः प्रदीयताम् ।
अनेन विधिना कृत्वा तृतीयां मधुसञ्ज्ञिकाम् ॥ १६२ ॥
इन्द्राणी चेन्द्रपत्नीत्वमवाप सुतमुत्तमम् । सौभाग्यं सर्वलोकेषुसर्वर्द्धिसुखमुत्तमम्
अनेन विधिना यातुकुमारीव्रतमाचरेत् । शोभनं पतिमाप्नोतियथेन्द्राण्याशतक्रतुः
दुर्भगा सुभगत्वं च सुभगा पुत्रिणी भवेत् ।
पुत्रिण्यक्षयमाप्नोति न शोकं पश्यति क्वचित् ॥ १६५ ॥
अनेकजन्मजनितं दौर्भाग्यं नश्यति ध्रुवम् । मृता तु त्रिदिवंप्राप्य उमयासहमोदते
कल्पकोटिशतं साग्रं भुक्त्वा भोगान्यथेप्सितान् ।
पुनस्तु सम्भवे लोके पार्थिवं पतिमाप्नुयात् ॥ १६७ ॥
सुभगा रूपसम्पन्ना पार्थिवं जनयेत्सुतम् ॥ १६८ ॥
एतत्ते कथितं सर्वं व्रतानामुत्तमं व्रतम् ।

अन्यत्पृच्छस्व सुभगे वाञ्छितं यद्धृदि स्थितम् ॥ १९९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये मधूकतृतीयाव्रतविधानमाहात्म्यवर्णनंनाम षड्विंशोऽध्यायः ॥ २६ ॥

---

# सप्तविंशोऽध्यायः

## त्रिपुरक्षोभणवर्णनम्

श्रीमार्कण्डेय उवाच

नारदस्य वचः श्रुत्वा राज्ञी वचनमब्रवीत् । प्रसादंकुरु विप्रेन्द्र गृह्ण दानंयथेप्सितम्

सुवर्णमणिरत्नानि वस्त्राणि विविधानि च ।

तत्ते दास्यामि विप्रेन्द्र! यच्चान्यदपि दुर्ल्लभम ॥ २ ॥

राज्ञ्यास्तु वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ।

अन्येषां दीयतां भद्रे! ये द्विजाः क्षीणवृत्तयः ॥ ३ ॥

वयं तु सर्वसम्पन्नाभक्तिग्राह्याःसदैव हि । इत्युक्तासातदाराज्ञीवेदवेदाङ्गपारगान्

आहूयब्राह्मणान्निःस्वान्दातुंसमुपचक्रमे । यत्किञ्चिन्नारदेनोक्तंदानंसौभाग्यवर्द्धनम्

तेन दानेन मे नित्यं प्रीयेतां हरिशङ्करौ । ततो राज्ञीच सा प्राह नारदंमुनिपुङ्गवम्

राज्ञ्युवाच

दानं दत्तं त्वयोक्तंयद्भर्तृ कर्मपरं हि तत् । आजन्मजन्म मे भर्ताभवेद्बाणोद्विजोत्तम

नान्यो हि दैवतं तात! मुक्त्वा बाणं द्विजोत्तम! ।

तेन सत्येन मे भर्त्ता जीवेच्च शरदां शतम् ॥ ८ ॥

नान्यो धर्म्मो भवेत्स्त्रीणां दैवतं हि पतिर्यथा ।

तथापि तव वाक्येन दानं दत्तं यथाविधि ॥ ९ ॥

स्वकंकर्मकरिष्यामोभर्त्तारंप्रतिमानद । ब्रह्मर्षेगच्छचेदानींत्वमाशीर्वादःप्रदीयता
तथेति तामनुज्ञाप्य नारदो नृपसत्तम ।। सर्वासां मानसं हृत्वा अन्यतःकृतमान
जगामादर्शनं विप्रःपूज्यमानस्तु खेचरैः । ततो गतमनस्कास्ताभर्त्तारंप्रति भा
विवर्णा निष्प्रभा जाता नारदेन विमोहिताः ॥ १३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये त्रिपुरक्षोभणवर्णनंनाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

# अष्टाविंशोऽध्यायः

## त्रिपुरविध्वंसनेजालेश्वरतीर्थामरेश्वरतीर्थवर्णनम्

मार्कण्डेय उवाच

एतस्मिन्नन्तरे रुद्रो नर्मदातटमास्थितः । क्रीडते ह्युमया सार्द्धं नारदस्तत्रचागत
प्रणम्य देवदेवेशमुमया सह शङ्करम् । व्यज्ञापयत्तदा देवं यद्वृत्तं त्रिपुरे तदा ॥ २
गतोऽहं स्वामिनिर्द्देशाद्यत्र तद्बाणमन्दिरम् ।
दृष्ट्वा बाणं यथान्यायं गतो ह्यन्तःपुरं महत् ॥ ३ ॥
तत्रभार्यासहस्राणिदृष्ट्वाबाणस्यधीमतः । यथायोग्यं यथाकममागतःक्षोभ्यतत्पुर
नारदस्य वचः श्रुत्वा साधुसाध्विति पूयजन् ।
चिन्तयामास देवेशो भ्रमणं त्रिपुरस्य हि ॥ ५ ॥
करमुक्तं यथा चक्रं विष्णुना प्रभविष्णुना । महावेगं महायामं रक्षितं तेजसा मम
स च मेभक्तिनिरतोबाणोलोके चविश्रुतः । भारतीचमयादत्ताब्राह्मणानांविशेषत
एवं स सुचिरं कालं देवदेवो महेश्वरः । चिन्तयित्वा सुनिर्वाणं कार्यंप्रतिजनेश्वर
ततोऽसौ मन्दरं ध्यात्वा चापे कृत्वा गुणे महीम् ।
विष्णुं सनातनं देवं बाणे ध्यात्वा त्रिलोचनः ॥ ६ ॥

फले हुताशनं देवं ज्वलन्तं सर्वतोमुखम् । सुपर्णं पुङ्खयोर्मध्ये जवे वायुं प्रकल्प्य च
रथं महीमयं कृत्वा धुरि तावश्विनावुभौ । अक्षे सुरेश्वरं देवमग्रकील्यांधनाधिपम्
यमं तु दक्षिणेपार्श्वेवामेकालंसुदारुणम् । आदित्यचन्द्रौचक्रे तुगन्धर्वानारकादिषु

यन्तारं च सुरज्येष्ठं वेदान्कृत्वा हयोत्तमान् ।
खलीनादिषु चाङ्गानि रश्मींश्छन्दांसि चाऽकरोत् ॥ १३ ॥

कृत्वा प्रतोदमोङ्कारं मुखग्राह्यं महेश्वरः । धातारं चाग्रतः कृत्वाविधातारंचपृष्ठतः
मारुतात्सर्वतोदिग्भ्यऊर्ध्वयन्त्रेतथैवच । महोरगपिशाचांश्चसिद्धविद्याधरांस्तथा

गणांश्च भूतसङ्घांश्च सर्वे सर्वाङ्गसन्धिषु ।
युगमध्ये स्थितो मेरुर्युगस्याऽधो महागिरिः ॥ १६ ॥
सर्पा यन्त्रस्थिता घोराः शम्ये वरुणनैर्ऋतौ ।
गायत्री चैव सावित्री स्थिते ते रश्मिबन्धने ॥ १७ ॥

सत्यं रथध्वजे शौचं दमं रक्षां समन्ततः । रथं देवमयं कृत्वा देवदेवो महेश्वरः ॥

सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।
बद्ध्वा परिकरं गाढं जटाजूटं नियम्य च ॥ १९ ॥
सज्जं कृत्वा धनुर्दिव्यं योजयित्वा रथोत्तमम् ।
रथमध्ये स्थितो देवः शुशुभे च युधिष्ठिर ॥ २० ॥

धनुषःशब्दनादेनाकम्पयच्चजगत्त्रयम् । स्थानं कृत्वा तु वैशाखंनिभृतंसंस्थितोहरः

निरीक्ष्य सुचिरं कालं कोपसंरक्तलोचनः ।
ध्यात्वा तं परमं मन्त्रमात्मानं च निरुध्य सः ॥ २२ ॥
मुमोच सहसा बाणं पुरस्य वधकाङ्क्षया ।
यदा त्रीणि समेतानि अन्तरिक्षस्थितानि तु ॥ २३ ॥

ततः कालनिमेषार्धं दृष्ट्वैक्यंत्रिपुरस्य च । त्रिपर्वणात्रिशल्येनततस्तान्यवसादयत्
ततो लोकाभयत्रस्तास्त्रिपुरे भरतोत्तम । सर्वासुरविनाशाय कालरूपाभयावहाः
अट्टहासान्प्रमुञ्चन्ति कष्टरूपा नरास्तदा ! निमेषोन्मेषणं चैव कुर्वन्तिलिपिकर्मसु

निष्पन्दनयना मर्त्याश्चित्रेष्वालिखिता इव ।
देवायतनगा देवा रुदन्ति प्रहसन्ति च ।
स्वप्ने पश्यन्ति चात्मानं रक्ताम्बरविभूषितम् ॥ २७ ॥
रक्तमाल्योत्तमाङ्गाश्च पतन्तः कार्द्दमे ह्रदे ।
पश्यन्ति नाम चात्मानं सतैलाभ्यङ्गमस्तकम् ॥ २८ ॥
पश्यन्ति यानमारूढं रासभैश्चनृपोत्तम !। संवर्त्तकोमहावायुर्युगान्तप्रतिमो महान्
गृहानुन्मूलयामासवृक्षजातीननेकशः । भूमिकम्पाःसनिर्घाताउल्कापाताःसहस्रशः
रुधिरं वर्षते देवो मिश्रितं कर्करैर्बहु । अग्निकुण्डेषुविप्राणां हुतः सम्यग्घुताशनः॥
ज्वलते धूमसंयुक्तो विस्फुलिङ्गकणैः सह ।
कुञ्जरा विमदा जातास्तुरगाः सत्त्ववर्जिताः ॥ ३२ ॥
अवादितानि वाद्यन्ते वादित्राणि सहस्रशः ।
ध्वजा ह्यकम्पिताः पेतुश्छत्राणि विविधानि च ॥ ३३ ॥
ज्वलन्तिपादपास्तत्रपर्णानिचसमन्ततः । सर्वंतद्भयाकुलीभूतंहाहाकारसमन्वितम्
उद्यानानि विचित्राणि प्रबभञ्ज प्रभञ्जनः ।
तेन सम्प्रेरिताः सर्वे ज्वलन्ति विशिखाः शिखाः ॥ ३५ ॥
वृक्षगुल्मलतावल्योगृहाणि च समन्ततः । दिग्विभागैश्चसर्वैश्च प्रवृत्तोहव्यवाहनः
सर्वं किंशुकपर्णाभंप्रज्वलच्चैव दृश्यते । गृहाद्गृहं तदागन्तुं नैवधूमेनशक्यते ॥३७॥
हरकोपाग्निनिर्दग्धाः क्रन्दन्ते त्रिपुरे जनाः । प्रदीप्तं सर्वतो दिक्षुदह्यते त्रिपुरं परम्
पतन्तिशिखराग्राणिविशीर्णानिसहस्रशः । पावकोधूमसम्पृक्तो दह्यमानःसमन्ततः
नृत्यन्वै व्याप्तदिग्देशः कान्तारेष्वभिधावति ।
देवागारेषु सर्वेषु गृहेष्वट्टालकेषु च ॥ ४० ॥
प्रवृत्तो हुतभुक्तत्र पुरे कालप्रचोदितः । ददाह लोकान्सर्वत्र हरकोपप्रकोपितः ॥
दहते त्रैपुरं लोकं बालवृद्धसमन्वितम् । सपुरं सगृहद्वारं सवाहनवनं नृप ॥ ४२ ॥
केचिद्भोजनसक्ताश्च पानासक्तास्तथापरे । अपरा नृत्यगीतेषु संसक्ता वारयोषितः

अन्योन्यं च परिष्वज्य हुताशनशिखार्द्दिताः ।
दह्यमाना नृपश्रेष्ठ! सर्वे गच्छन्त्यचेतनाः ॥ ४४ ॥
अथान्ये दानवास्तत्र दह्यन्तेऽग्निविमोहिताः ।
न शक्ताश्चाऽन्यतो गन्तुं धूमेनाकुलिताननाः ॥
हंसकारण्डवाकीर्णा नलिन्योहेमपङ्कजाः ॥ ४५ ॥
दह्यन्ते विविधास्तत्र वाप्यः कूपाश्च भारत !।
दृश्यन्तेऽनलदग्धानि पुरोद्यानानि दीर्घिकाः ॥
अम्लानैः पङ्कजैश्छन्ना विस्तीर्णा वसुयोजनाः ॥ ४६ ॥
गिरिकूटनिभास्तत्रप्रासादारत्नशोभिताः ।दृश्यन्तेऽनलसंदग्धाविशीर्णाधरणीतले
नरस्त्रीबालवृद्धेषु दह्यमानेषु सर्वतः । निर्द्दयं ज्वलते वह्निर्हाहाकारो महानभूत्
काचिच्च सुखसंसुप्ता प्रमत्ताऽन्या नृपोत्तम !॥ ४८ ॥
क्रीडित्वा च सुविस्तीर्णशयनस्था वराङ्गना ।
काचित्सुप्ता विशालाक्षी हारावलिविभूषिता ।
धूमेनाऽऽकुलिता दीना न्यपत्तद्धव्यवाहने ॥ ४६ ॥
काचित्तस्मिन्पुरे दीप्ते पुत्रस्नेहानुलालसा । पुत्रमालिङ्गतेगाढं दह्यतेत्रिपुरेऽग्निना
काचित्कनकवर्णाभाइन्द्रनीलविभूषिता । भर्त्तारं पतितंदृष्ट्वा पतितातस्य चोपरि
काचिदादित्यवर्णाभाप्रसुप्ता तुप्रियोपरि । अग्निज्वालाहतागाढंकण्ठमालिङ्गतेनृप
मेघवर्णा परा नारी चलत्कनकमेखला । श्वेतवस्त्रोत्तरीया तु पपात धरणीतले ॥
काचित्कुन्देन्दुवर्णाभा नीलरत्नविभूषिता ।
शिरसा प्राञ्जलिर्भूत्वा विज्ञापयति पावकम् ॥ ५४ ॥
कस्याश्चिज्ज्वलते वस्त्रं केशाः कस्याश्च भारत !।
ज्वलज्ज्वलनसङ्काशैर्हेमभाण्डैस्त्रसन्ति च ॥ ५५ ॥
काचित्प्रभूतदुःखार्ता विललापवराङ्गना । भस्मीभूतंपतिं दृष्ट्वा क्रन्दन्तीकुररीयथा
आलिङ्ग्य गाढं सहसा पतिता तस्य मूर्द्धनि ।

काचिच्च बहुदुःखार्त्ता व्यलपत्स्त्री स्ववेश्मनि ॥ ५७ ॥

भस्मसाच्च कृतं दृष्ट्वा क्रन्दते कुररी यथा । मातरं पितरं काचिद्दृष्ट्वा विगतचेतनम्
वेपते पतिता भूमौ खेदिता बडवा यथा । इतश्चेतश्च काचिच्च दह्यमानावराङ्गना

नापश्यद्बालमुत्सङ्गे विपरीतमुखी स्थिता ।
कुम्भिलस्य गृहं दग्धं पतितं धरणीतले ॥ ६० ॥
कूष्माण्डस्य च धूम्रस्य कुहकस्य वकस्य च ।
विरूपनयनस्यापि विरूपाक्षस्य चैव हि ॥ ६१ ॥
शुम्भोडिम्भश्च रौद्रश्च प्रह्लादश्चासुरोत्तमः ।
दण्डपाणिर्विपाणिश्च सिंहवक्त्रस्तथाऽनघ!॥ ६२ ॥
दुन्दुभश्चैव संह्लादो डिण्डिर्मुण्डिस्तथैव च ।
बाणभ्राताच बाणश्चक्रव्यादव्याघ्रवक्त्रकौ ॥ ६३ ॥

एवमन्येऽपि येकेचिद्दानवा बलदर्पिताः । तेषां गृहे तथा वह्निर्ज्वलते निर्दयो नृप

दह्यमानाः स्त्रियस्तात! विलपन्ति गृहेगृहे ॥ ६४ ॥

करुणाक्षरवादिन्यो निराधारा गताः शिवम् । यदिवैरंसुरारेश्चपुरुषोपरि पावक

स्त्रियः किमपराध्यन्ति गृहपञ्जरकोकिलाः ।
अनिर्दयो नृशंसस्त्वं कस्तेकोपःस्त्रियम्प्रति ॥ ६६ ॥
किं त्वया न श्रुतंलोके अवध्या सर्वथा स्त्रियः ।
किं तु तुभ्यं गुणो ह्यस्ति दहने पवनेरितः ॥ ६७ ॥
न कारुण्यं त्वया किञ्चिद्दाक्षिण्यं च स्त्रियम्प्रति ।
दयां म्लेच्छा हि कुर्वन्ति वचनं वीक्ष्य योषिताम् ॥ ६८ ॥
म्लेच्छानामपि च म्लेच्छो दुर्न्निवार्य्यो ह्यचेतनः ।
एवं विलपमानानां स्त्रीणां तत्रैव भारत ॥ ६९ ॥

ज्वालाकलापबहुलः प्रज्वलत्येव पावकः । एवं दृष्ट्वा ततो बाणो दह्यमान उवाच ह
अवज्ञाहविनष्टोऽहंपापात्माहरमञ्जसा । मया पापेन मूर्खेण येलोकानाशिताध्रुवम्

गोब्राह्मणाहतानित्यमिहलोकेपरत्र च ।
नाशितान्यन्नपानानिमठारामाश्रमास्तथा ॥७२ ॥
ऋषीणामाश्रमाश्चैव देवारामागणालयाः । तेनपापेन मे ध्वंसस्तपसश्च बलस्य च
किं धनेन करिष्यामि राज्येणान्तःपुरेण च ॥ ७४ ॥
वरं शङ्करपादौच शरणंयामि मूढधीः । न माता न पिताचैव न बन्धुर्नापरो जनः
मुक्त्वा चैव महेशानंपरमार्तिहरंपरम् । आत्मना च कृतं पापमात्मनैव तु भुज्यते
अहंपुनःसमस्तैश्चदह्यामिसहसाधुभिः । एवमुक्त्वाशिवंलिङ्गंकृत्वातन्मस्तकोपरि
निर्जगाम गृहाच्छीघ्रं पावकेनावगुण्ठितः ।
स खिन्नः स्विन्नगात्रस्तु प्रस्खलंस्तु मुहुर्मुहुः ॥ ७८ ॥
हरं गद्गदयावाचास्तुवन्वैशरणंययौ । त्वत्कोपानलनिर्दग्धोयदिवध्योऽस्मिशङ्कर
त्वत्प्रसादान्महादेवमामे लिङ्गं प्रणश्यतु ।
अर्चितं मे सुरश्रेष्ठ ध्यातं भक्त्या मया विभो ॥ ८० ॥
प्राणादिष्टतमं देव! तस्माद्रक्षितुमर्हसि । यदि तेऽहमनुग्राह्यो वध्यो वा सुरसत्तम
प्रतिजन्म महादेव त्वद्भक्तिरचलास्तु मे । पशुकीटपतङ्गेषु तिर्यग्योनिगतेषु च ॥
स्वकर्मणा महादेव त्वद्भक्तिरचलास्तु मे ॥ ८२ ॥
एवमुक्त्वा महाभागो बाणो भक्तिमतां वरः ।
स्तोत्रेण देवदेवेशं च्छन्दयामास भारत !॥ ८३ ॥

बाण उवाच

शिव शङ्कर सर्वहराय नमो भवभीतभयार्तिहराय नमः ।
कुसुमायुधदेहविनाशकर! प्रमदाप्रियकामकर! देव नमः ॥ ८४ ॥
जय पार्वतीश! परमार्थसार! जय विरचितभीमभुजङ्गहार !।
जय निर्मलभस्मविलिप्तगात्र! जय मन्त्रमूल जगदेकपात्र !॥ ८५ ॥
जय विषधरकपिलजटाकलाप जय भैरवविधृतपिनाकचाप !।
जय विषमनयतपरिमुक्तसङ्ग जय शङ्कर धृतगाङ्गतरङ्ग !॥ ८६ ॥

जय भीमरूप खट्वाङ्गहस्त शशिशेखर जय जगतां प्रशस्त !।
जय सुरवरेश सुरलोकसार जय सर्वसकलनिर्द्दग्धसार !॥ ८७ ॥
जय कीर्त्तनीय! जगतां पवित्र! जय वृषाङ्क बहुविधचरित्र !।
जय विरचितनरकङ्कालमाल अधासुरदेहकङ्कालकाल !॥ ८८ ॥
जय नीलकण्ठ वरवृषभगमन जय सकललोकदुरितानुशमन !।
जय सिद्धसुरासुरविनतचरण जय रुद्र रौद्रभवजलधितरण !॥ ८९ ॥
जय गिरीश सुरेश्वरमाननीय! जय सूक्ष्मरूप सञ्चिन्तनीय !।
जय दग्धत्रिपुर।विश्वसत्त्व! जय सकलशास्त्रपरमार्थतत्त्व !॥ ९० ॥
जय दुरवबोध संसारतार कलिकलुषमहार्णवघोरतार !।
जय सुरासुरदेवगणेश नमो हयवानरसिंहगजेन्द्रमुख !॥ ९१ ॥
अतिह्रस्वस्थूलसुदीर्घतम उपलब्धिर्नशक्यते ते ह्यमरैः ।
प्रणतोऽस्मि निरञ्जन ते चरणौ जय साम्ब सुलोचनकान्तिहर ॥९२॥
अप्राप्य त्वां किमत्यन्तमुच्छ्रयी न विनाशयेत् ।
अतिप्रमाथि च तदा तपो महत्सुदारुणम् । ९३ ॥
न पुत्रबान्धवादारा नसमस्तःसुहृज्जनः । सङ्कटेऽभ्युपगच्छन्तिव्रजन्तमेकगामिनम्
यदेवकर्मकैवल्यं कृतं तेन शुभाशुभम् । तदेव सार्थवत्तस्य भवत्यग्रे तु गच्छतः ॥
निर्द्धनस्यैव चरतोन भयं विद्यते क्वचित् ।
धनी भयैर्न मुच्येत धनं तस्मात्त्यजाम्यहम् ॥ ९६ ॥
लुब्धाः पापानि कुर्वन्ति शुद्धांशा नैव मानवाः ।
श्रुत्वा धर्मस्य सर्वस्वं श्रुत्वा चैवाऽवधार्य तत् ॥ ९७ ॥
त्वं विष्णुस्त्वं जगन्नाथो ब्रह्मरूपः सनातनः ।
इन्द्रस्त्वं देवदेवेश सुरनाथ! नमोऽस्तु ते ॥ ९८ ॥
त्वं क्षितिर्वरुणश्चैव पवनस्त्वंहुताशनः । त्वं दीक्षा यजमानश्च आकाशं सोमएव च
त्वं सूर्यस्त्वं तु वित्तेशो यमस्त्वं गुरुरेव च ।

त्वया व्याप्तं जगत्सर्वं त्रैलोक्यं भास्वता यथा ॥ १०० ॥
एतद्बाणकृतंस्तोत्रं श्रुत्वादेवो महेश्वरः । क्रोधंमुक्त्वाप्रसन्नात्मातदावचनमब्रवीत्

ईश्वर उवाच

न भेतव्यं न भेतव्यमद्यप्रभृति दानव !। सौवर्णे भवने तिष्ठ मम पार्श्वेऽथवा पुनः
पुत्रपौत्रप्रपौत्रैश्च बान्धवैः सह भार्यया ।
अद्यप्रभृति वत्स! त्वमवध्यः सर्वशत्रुषु ॥ १०३ ॥

मार्कण्डेय उवाच

भूयस्तस्य वरो दत्तो देवदेवेन भारत !। स्वर्गे मर्त्ये च पाताले पूजितः ससुरासुरैः
अक्षयश्चाऽव्ययश्चैव वस त्वं वै यथासुखम् । ततोनिवारयामासरुद्रःसप्तशिखंतदा
तृतीयंरक्षितं तस्य पुरं देवेन शम्भुना । ज्वालामालाकुलं चान्यत्पतितं धरणीतले
अर्द्धेन प्रस्थितादूद्र्ध्वं तस्य ज्वाला दिवं गताः ।
हाहाकारो महांस्तत्र ऋषिसङ्घैरुदीरितः ॥ १०७ ॥
दैवतैश्च महाभागैः सिद्धविद्याधरादिभिः । एकं तु पतितंतत्र श्रीशैले खण्डमुत्तरम्
द्वितीयं पतितं राजञ्छैले ह्यमरकण्टके । प्रज्वलत्पतितं तत्र तेनज्वालेश्वरं स्मृतम्
दग्धे तुत्रिपुरेराजन्पतितेखण्डउत्तमे । रुद्रो देवःस्थितस्तत्रज्वालामालानिवारकः
हाहाकारपराणां तु ऋषीणां रक्षणाय च । स्वयंमूर्तिर्महेशान उमावृषभसंयुतः ॥
मनसाऽपि स्मरेद्यस्तुभक्त्या ह्यमरकण्टकम् ।
चान्द्रायणाधिकं पुण्यं स लभेन्नात्र संशयः ॥ ११२ ॥
अतिपुण्यो गिरिश्रेष्ठो यस्माद्भरतसत्तम !। अस्मान्नित्यं भवेद्राजन्सर्वपापक्षयङ्करः
नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ।
नानागुल्मलताकीर्णो नानावल्लीभिरावृतः ॥ ११४ ॥
सिंहव्याघ्रसमाकीर्णोमृगयूथैरलङ्कृतः । श्वापदानांचघोषेणनित्यंप्रमुदितोऽभवत्
ब्रह्मेन्द्रविष्णुप्रमुखैर्ह्यमरैश्च सहस्रशः । सेव्यते देवदेवेशः शङ्करस्तत्र पर्वते ॥ ११६॥
पतनं कुरुते योऽस्मिन्पर्वतेऽमरकण्टके ।क्रीडते क्रमशो राजन्भुवनानि चतुर्द्दश ॥

ऐन्द्रं वाह्नं च कौबेरं वायव्यं याम्यमेव च ।
नैर्ऋत्यं वारुणं चैव सौम्यं सौरं तथैव च ॥ ११८ ॥
ब्राह्मं च पद्ममक्लिष्टं वैष्णवं तदनन्तरम् । उमारुद्रं महाभाग! ऐश्वरं तदनन्तरम्
परं सदाशिवं शान्तं सूक्ष्मं ज्योतिरतीन्द्रियम् ।
तस्मिन्याति लयं धीरो विधिना नात्र संशयः ॥ १२० ॥

युधिष्ठिर उवाच

कोऽप्यत्रविधिरुद्दिष्टः पतने ऋषिसत्तम !। एतन्मे सर्वमाचक्ष्वसंशयोऽस्तिमहामु

श्रीमार्कण्डेय उवाच

शृणुष्व कथयिष्यामि तं विधिं पाण्डुनन्दन !।
यत्कृत्वा प्रथमं कर्म निपतेत्तदनन्तरम् ॥ १२२ ॥
कृत्वा कृच्छ्रत्रयं पूर्वं जप्त्वा लक्षं दशैवतु । शाकयावकभुक्चैवशुचिस्त्रिषवणो
त्रिकालमर्चयेदीशं देवदेवं त्रिलोचनम् । दशांशेन तु राजेन्द्र होमं तत्रैव कारयेत्
लक्षवारं जपेदेवं गन्धमाल्यैश्चपूजयेत् । रात्रौस्वप्ने तदापश्येद्विमानस्थंततःक्षिपे
अनेनैव विधानेन आत्मानंयस्तुनिक्षिपेत् । स्वर्गलोकमनुप्राप्यक्रीडते त्रिदशैःस
त्रिंशद्वर्षसहस्राणि त्रिंशत्कोट्यस्तथैव च ।
भुक्त्वा मनोरमान्भोगांस्तदागच्छेन्महीतलम् ॥ १२७ ॥
पृथिवीमेकच्छत्रेण भुनक्ति लोकपूजितः ।
व्याधिशोकविमिर्मुक्तोजीवे च शरदां शतम् ॥ १२८ ॥
ज्वालेश्वरं तु तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र ज्वाला नदी पार्थ प्रसूता शिवनिर्मिता ॥ १२६ ॥
निर्वाप्य तद्बाणपुरंरेवया सह सङ्गता । तत्रस्नात्वा महाराजविधिनामन्त्रसंयु
तिलसम्मिश्रतोयेन तर्पयेत्पितृदेवताः । पिण्डदानेनचपितॄन्पौण्डरीकफलं लभे
अनाशकन्तु यःकुर्यात्तस्मिंस्तीर्थे नराधिप !।
मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ १३२ ॥

अमराणां शतैश्चैव सेवितो ह्यमरेश्वरः । तथैव ऋषिसङ्घैश्च तेन पुण्यतमो महान्
समन्ताद्योजनं तीर्थं पुण्यं ह्यमरकण्टकम् । रुद्रकोटिसमोपेतं तेन तत्पुण्यमुत्तमम्॥
तस्य पर्वतराजस्य यः करोतिप्रदक्षिणम् । प्रदक्षिणीकृतातेनपृथिवीनाऽत्र संशयः

वाचिकं मानसं चैव कायिकं त्रिविधं च यत् ।
नश्यते पातकं सर्वमित्येवं शङ्करोऽब्रवीत् ॥ १३६ ॥

अमरेश्वरपार्श्वे च तीर्थं शक्रेश्वरं नृप !। तपस्तप्त्वापुरा तत्र शक्रेण स्थापितंकिल

कुशावर्तं नाम तीर्थं ब्रह्मणा च कृतं शुभम् ।
ब्रह्मकुण्डमिति ख्यातं हंसतीर्थं तथा परम् ॥ १३८ ॥

अम्बरीषस्य तीर्थं च महाकालेश्वरंतथा । कावेर्याः पूर्वभागे चतीर्थंवैमातृकेश्वरम्
एतानि दक्षिणे तीरे रेवाया भरतर्षभ । संसेवनस्नानदानैः पापसङ्घहराणि च ॥
भृगुतुङ्गे महाराज प्रसिद्धो भैरवःशिवः । तस्ययाम्यविभागेच तीर्थं वैचपलेश्वरम्

एतौ स्थितौ दुःखहरौ रेवाया उत्तरे तटे ।
तावभ्यर्च्य तथा नत्वा सम्यग्यात्राफलं भवेत् ।
अदृष्टपूजितौ तौ हि नराणां विघ्नकारकौ ॥ १४२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे त्रिपुरविध्वंसने ज्वालेश्वरतीर्थामरेश्वतीर्थमाहात्म्यवर्णनंनामाऽष्टाविंशोऽध्यायः ॥ २८ ॥

———

# एकोनत्रिंशोऽध्यायः

## कावेरीसङ्गममाहात्म्यवर्णनम्

युधिष्ठिर उवाच

कावेरीति च विख्याता त्रिषु लोकेषु सत्तम !।
माहात्म्यं श्रोतुमिच्छामि तस्या मार्कण्ड!तत्त्वतः ॥ १ ॥
कीदृशं दर्शनंतस्याःफलंस्पर्शेऽथवाविभो !। स्नानेजाप्येऽथवादानउपवासेतथामुं
कथयस्व महाभागकावेरीसङ्गमेफलम् । धर्मःश्रुतोऽथदृष्टोवाकथितोवाकृतोऽपिवा
अनुमोदितो वा विप्रेन्द्र पुनातीति श्रुतं मया ।
यथा धर्मप्रसङ्गे तु मुने धर्मोऽपिजायते ॥ ४ ॥
स्वर्गश्च नरकश्चैव इत्येवं वैदिकी श्रुतिः ॥ ५ ॥

श्रीमार्कण्डेय उवाच

साधुसाधुमहाभागयत्पृष्टोऽहंत्वयाऽधुना । शृणुष्वैकमनाभूत्वाकावेरीफलमुत्तमम्
अस्ति यक्षो महासत्त्वः कुबेरोनाम विश्रुतः ।
सोऽपि तीर्थप्रभावेण राजन्यक्षाधिपोऽभवत् ॥ ७ ॥
तच्छृणुष्व विधानेन भक्त्यापरमयानृप !। सिद्धिं प्राप्तोमहाभागकावेरीसङ्गमेन तु
कावेर्या नर्मदायास्तुसङ्गमेलोकविश्रुते । तत्रस्नात्वाशुचिर्भूत्वाकुबेरःसत्यविक्रमः
विधिवन्नियमं कृत्वा शास्त्रयुक्त्या नरोत्तम !।
आराधयन्महादेवमेकचित्तः सनातनम् ॥ १० ॥
एकाहारोवसन्मासंतथाषष्ठाह्नकालिकः । पक्षोपवासीन्यवसत्कश्चित्कालंनृपोत्तम
मूलशाकफलैश्चान्यं कालं नयति बुद्धिमान् ।
किञ्चित्कालं वसंस्तत्र तीर्थे शैवालभोजनः ॥ १२ ॥
पराकेणानयत्कालंकृच्छ्रेणापिचमानद। चान्द्रायणेनचाप्यन्यमन्यस्वाप्यम्बुभोजनः

एवं तत्र नरश्रेष्ठ! कामरागविवर्जितः । स्थितोवर्षशतं साग्रं कर्षयन्स्वं तथा वपुः
ततो वर्षशतस्यान्ते देवदेवो महेश्वरः । तुष्टस्तु परया भक्त्या तमुवाच हसन्निव

भोभो यक्ष! महासत्व वरं वरय सुव्रत !।
परितुष्टोऽस्मि ते भक्त्या तव दास्ये यथेप्सितम् ॥ १६ ॥

यक्ष उवाच

यदि तुष्टोऽसि देवेश उमया सह शङ्कर !। अद्यप्रभृति सर्वेषां यक्षाणामधिपो भवे
अक्षयश्चाव्ययश्चैव तव भक्तिपुरस्सरः । धर्मे मतिं च मे नित्यं ददस्व परमेश्वर !।

ईश्वर उवाच

यत्त्वया प्रार्थितं सर्वं फलं धर्मस्य तत्तथा ।। इत्येवमुक्त्वा तं तत्र जगामादर्शनंहरः

सोऽपि स्नात्वा विधानेन सन्तर्प्य पितृदेवताः ।
आमन्त्रयित्वा तत्तीर्थं कृतार्थश्च गृहं ययौ ॥ २० ॥
पूजितस्तत्र यक्षैस्तु सोऽभिषिक्तो विधानतः ।
चकार विपुलं तत्र राज्यमीप्सितमुत्तमम् ॥ २१ ॥

तत्र चान्ये सुराःसिद्धायक्षगन्धर्वकिन्नराः । गणाश्चाप्सरसांतत्रऋषयश्चतथाऽनघ
कावेरीसङ्गमं तेन सर्वपापहरं विदुः । स्वर्गाणामपि सर्वेषां द्वारमेतद्युधिष्ठिर !।

ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
कावेरीसङ्गमे स्नात्वा यैर्दत्तं हि तिलोदकम् ॥ २४ ॥
दश पूर्वे परे तात! मातृतः पितृतस्तथा ।
पितरः पितामहास्तेन उद्धृतानरकार्णवात् ॥ २५ ॥

तस्मात्सर्वप्रयत्नेन तत्र स्नायीतमानवः । अर्चयेदीश्वरं देवंयदीच्छेच्छाश्वतींगतिम्
कावेरीसङ्गमे राजन्स्नानदानार्चनं नरैः । कृतं भक्त्या नरश्रेष्ठ! अश्वमेधाधिकंफलम्

होमेन चाक्षयः स्वर्गो जपादायुर्विवर्धते ।
ध्यानतो नित्यमायाति पदं शिवकलात्मकम् ॥ २८ ॥

अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नरेश्वर !। अग्निलोकेवसेत्तावद्यावद्भूतसंप्लवम्

अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप !।
तस्य पुण्यफलं यद्वै तच्छृणुष्व नरोत्तम !॥ ३० ॥
गन्धर्वाप्सरसङ्कीर्णे विमाने सूर्यसन्निभे । वीज्यमानो वरस्त्रीभिर्दैवतैः सह मोद
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च । क्रीडते रुद्रलोकस्थस्तदन्ते भुवि चागत
भोगवान्दानशीलश्च जायते पृथिवीपतिः ।
आधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ३३ ॥
एवंगुणगणाकीर्णा कावेरी सा सरिन्नृप । त्रिषु लोकेषुविख्यातानर्मदासंगमेसद्
जितवाक्कायचित्ताश्च ध्येयध्यानरतास्तथा ।
कावेरीसङ्गमे तात! तेऽपि मोक्षमवाप्नुयुः ॥ ३५ ॥
शृणु तेऽन्यत्प्रवक्ष्यामिआश्चर्यंनृपसत्तम । त्रिषुलोकेषुकात्वन्याद्दृश्यतेसरितासम
लब्धं यैर्नर्मदातोयं ये च कुर्युः प्रदक्षिणम् । येपिबन्ति जलंतत्र तेपुण्यानात्रसंशय
न तेषां सन्ततिच्छेदो दश जन्मानि पञ्च च ।
तेषां पापं विलीयेत हिमं सूर्योदये यथा ॥ ३८ ॥
गङ्गायमुनसङ्गे वै यत्फलं लभते नरः । तत्फलं लभते मर्त्यः कावेरीस्नानमाचरन्
भौमे तु भूतजायोगे व्यतीपाते ऽत्रसङ्क्रमे । राहुसोमसमायोगेतदेवाष्टगुणं स्मृतम्
अशीतिश्च यवाः प्रोक्ता गङ्गायामुनसङ्गमे । कावेरीनर्मदायोगेतदेवाष्टगुणं स्मृतम्
गङ्गा षष्टिसहस्रैस्तु क्षेत्रपालैः प्रपूज्यते । तद्वद्वैरन्यतीर्थानि रक्षन्ते नाऽत्र संशय
अमरेश्वरे तु सरितां ये योगाः परिकीर्तिताः ।
ते त्वशीतिसहस्रैस्तु क्षेत्रपालैस्तु रक्षिताः ॥ ४३ ॥
तथामरेश्वरे याम्ये लिङ्गं वैचपलेश्वरम् । द्वितीयंचण्डहस्ताख्यं द्वे लिङ्गे तीर्थरक्षके
शिवेन स्थापिते पूर्वं कावेर्याद्यभिरक्षके ।
लक्षेण रक्षिता देवी नर्मदा बहुकल्पगा ॥ ४५ ॥
धनुषां षष्ट्यभियुतैः पुरुषैरीशयोजितैः । ॐकारशतसाहस्रैः पर्वतश्चाभिरक्षितः।
अन्यदेशकृतं पापमस्मिन्क्षेत्रे विनश्यति ।

अस्मिंस्तीर्थे कृतं पापं वज्रलेपो भविष्यति ॥ ४७ ॥
एषा ते कथिता तात कावेरी सरितां वरा । रुद्रदेहसमुत्पन्ना तेन पुण्यासरिद्वरा
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदामाहात्म्ये कावेरीसङ्गममाहात्म्यवर्णनंनामैको-
नत्रिंशोऽध्यायः ॥ २६ ॥

---

# त्रिंशोऽध्यायः

## दारुतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदोत्तरकूले तु दारुतीर्थमनुत्तमम् । यत्र सिद्धोमहाभाग! तपस्तप्त्वाद्विजोत्तमः

युधिष्ठिर उवाच

कोऽसौ द्विजवरश्रेष्ठः सिद्धस्तत्रमहामुने !। दारुकेति सुतः कस्यएतन्मेवक्तुमर्हसि

श्रीमार्कण्डेय उवाच

भार्गवे विपुले वंशे धीमतोदेवशर्मणः । दारुर्नाममहाभागोवेदवेदाङ्गपारगः ॥ ३ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो विधिक्रमात् ।
यतिधर्मविधानेन चचार विपुलं तपः ॥ ४ ॥
ध्यायन्वै समहादेवंनिराहारोयुधिष्ठिर !। उवासतीर्थेतस्मिन्वैयावत्प्राणपरिक्षयम्
तस्य नाम्ना तु तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र स्नात्वा विधानेन अर्चयेत्पितृदेवताः ॥ ६ ॥
सत्यवादीजितक्रोधः सर्वभूतहिते रतः । सर्वान्कामानवाप्नोति राजन्नत्रैव सर्वथा
यः कुर्यादुपवासंचसत्यशौचपरायणः । सौत्रामणिफलंचास्यसंभवत्यविचारितम्
ऋग्वेदजापी ऋग्वेदी साम वा सामपारगः ।

यजुर्वेदी यजुर्जप्त्वा लभते फलमुत्तमम् ॥ ९ ॥
प्राणांस्त्यजति यो मर्त्यस्तस्मिंस्तीर्थे विधानतः ।
अनिवर्त्तिका गतिस्तस्य इत्येवं शङ्करोऽब्रवीत् ॥ १० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे दारुतीर्थमाहात्म्यवर्णनंनामत्रिंशोऽध्यायः ॥ ३० ॥

---

# एकत्रिंशोऽध्यायः

## ब्रह्मावर्त्ततीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततोगच्छेच्चराजेन्द्रतीर्थंत्रैलोक्यविश्रुतम् । ब्रह्मावर्त्तमितिख्यातंसर्वपापप्रणाशनम्
तत्र सन्निहितो ब्रह्मा नित्यसेवी युधिष्ठिर !।
ऊर्ध्वबाहुर्निरालम्बश्चकार भ्रमणं सदा ॥ २ ॥
एकाहारवशोऽतिष्ठद् द्वादशाब्दं महाव्रती । अत्र तीर्थे विधानेनचिन्तयन्वैमहेश्वरम्
तेन तत्पुण्यमाख्यातं ब्रह्मावर्त्तमति प्रभो !। तत्र स्नात्वाविधानेनतर्पयेत्पितृदेवताः
अर्चयेद्देवमीशानं विष्णुं वा परमेश्वरम् । यत्फलंसर्वयज्ञानांविधिवद्दक्षिणावताम्
तत्फलं समवाप्नोति तत्तीर्थस्य प्रभावतः ।
यस्मिंस्तीर्थे तु यो देवो दानवो वा द्विजोऽथ वा ॥ ६ ॥
सिद्धस्तेनैव तन्नाम्ना ख्यातं लोके महच्च तत् ।
न जलं न स्थलं नाम क्षेत्रं वा ह्यूषराणि च ॥ ७ ॥
पवित्रत्वं लभन्त्येते पौरुषेण विना नृणाम् ।
सामर्थ्यान्निश्चयाद्धैर्यात्सिध्यन्ति पुरुषा नृप ॥ ८ ॥
प्रमादात्तस्य लोभेन पतन्ति नरके ध्रुवम् । सन्निरुध्येन्द्रियग्रामं यत्रयत्र वसेन्मुनिः

तत्रतत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ १० ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां पञ्चमेऽवन्तीखण्डे रेवाखण्डे ब्रह्मावर्त्ततीर्थमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

# द्वात्रिंशोऽध्यायः

## पत्रेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

पत्रेश्वरं ततो गच्छेत्सर्वपापप्रणाशनम् । यत्र सिद्धो महाभागश्चित्रसेनसुतोवली

युधिष्ठिर उवाच

कोऽसौ सिद्धस्तदा ब्रह्मंस्तस्मिंस्तीर्थे महातपाः ।
पुत्रः कस्य तु को हेतुरेतदिच्छामि वेदितुम् ॥ २ ॥

श्रीमार्कण्डेय उवाच

चित्रोनाम महातेजा इन्द्रस्य दयितः पुरा । तस्यपुत्रो नृपश्रेष्ठ! पत्रेश्वर इति श्रुतः
रूपवान्सुभगश्चैव सर्वशत्रुभयङ्करः । इन्द्रस्य दयितोऽत्यर्थं जय इत्येव चाऽपरः ॥
स कदाचित्सभामध्ये सर्वदेवसमागमे । मेनकानृत्यगीतेन मोहितः सुचिरं किल॥

तिष्ठते गतमर्यादो गतप्राण इव क्षणात् ।
तावत्सुरपतिर्देवः शशापाऽथाऽजितेन्द्रियम् ॥ ६ ॥
यस्मात्त्वं स्वर्गसंस्थोऽपि मर्त्त्यधर्ममुपेयिवान् ।
तस्मान्मर्त्त्ये चिरं कालं क्षपयिष्यस्यसंशयम् ॥ ७ ॥

एवमुक्तः सुरेन्द्रेण चित्रसेनसुतोयुवा । वेपमानः सुरश्रेष्ठं कृताञ्जलिरुवाच ह ॥

पत्रेश्वर उवाच

मया पापेन मूढेन अजितेन्द्रियचेतसा । प्राप्तं वै यत्फलं तस्य प्रसादं कर्त्तुमर्हसि

शक्र उवाच

नर्मदातटमाश्रित्य द्वादशाब्दं जितेन्द्रियः ।
आराधय शिवं शान्तं पुनः प्राप्स्यसि सद्गतिम् ॥ १० ॥
सत्यशौचरतानां च धर्मिष्ठानां जितात्मनाम् ।
लोकोऽयं पापिनां नैव इति शास्त्रस्य निश्चयः ॥ ११ ॥

एवमुक्ते महाराज सहस्राक्षेण धीमता । गन्धर्वतनयो धीमान्प्रणम्यागात्तु भूतल
रेवाया विमलेतोये ब्रह्मावर्त्त समीपतः । स्नात्वा जप्त्वा विधानेन अर्चयित्वा च शङ्कर

वाय्वम्बुपियाकफलैश्च पुष्पैः पर्णैश्च मूलाशनयावकेन ।
ततापं पञ्चाग्नितपोभिरुग्रैस्ततश्च तोषं समगात्स देवः ॥ १४ ॥
पिनाकपाणिं वरदं त्रिशूलिनमुमापतिं ह्यन्धकनाशनं च ।
चन्द्रार्धमौलिं गजकृत्तिवाससं दृष्ट्वा पपाताऽग्रगतं समीक्ष्य ॥ १५ ॥

ईश्वर उवाच

वरं वृणीष्व भद्रं ते वरदोऽहं तवाऽनघ !।
यमिच्छसि ददाम्यद्य नाऽत्र कार्या विचारणा ॥ १६ ॥

पत्रेश्वर उवाच

यदि तुष्टोऽसि देवेश! यदि देयो वरो मम । अत्र त्वं सततं तीर्थे ममनाम्ना भव प्र
एतच्छ्रुत्वा महादेवो हर्षगद्गदया गिरा । तथेत्युक्त्वा ययौ हृष्ट उमया सह शङ्क

सोऽपि तत्तीर्थमाप्लुत्य गते देवे दिवम्प्रति ।
स्नात्वा जाप्यविधानेन तर्पयित्वा पितृन्पुनः ॥ १९ ॥
स्थापयामास देवेशं तस्मिंस्तीर्थे विधानतः ।
पत्रेश्वरं तु विख्यातं त्रिषु लोकेषु भारत !॥ २० ॥

इन्द्रलोकं गतः शापान्मुक्तः सोऽपि नरेश्वर !। हृष्टः प्रमुदितो रम्यं जयशब्दादिमङ्गलै
एष ते कथितः प्रश्नः पृष्टो यो वै युधिष्ठिर !। तत्र स्नानेन चैकेन सर्वपापैः प्रमुच्य

यस्त्वर्चयेन्महादेवं तस्मिंस्तीर्थे युधिष्ठिर !।

स्नात्वाऽभ्यर्च्य पितृन्देवान्सोऽश्वमेधफलं लभेत् ॥ २३ ॥
मृतो वर्षशतं सार्धं क्रीडयित्वा च शिवे पुरे ।
राजा वा राजतुल्यो वा पश्चान्मर्त्त्येषु जायते ॥ २४ ॥

वेदवेदाङ्गतत्त्वज्ञ! जीवेच्चशरदःशतम् । व्याधिशोकविनिर्मुक्तः पुनःस्मरति तज्जलम्

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे पत्रेश्वरतीर्थमाहात्म्यवर्णनंनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

# त्रयस्त्रिंशोऽध्यायः

## अग्नितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्त राजेन्द्र अग्नितीर्थमनुत्तमम् । यत्रसंनिहितोह्यग्निर्गतः कामेनमोहितः

युधिष्ठिर उवाच

कथं देवो जगद्धाता कामेन कलुषीकृतः । कथं च नित्यदावासएकस्थानेषुजायते
एतत्त्वाश्चर्यमतुलं सर्वलोकेष्वनुत्तमम् । कथयस्व महाभाग! परंकौतूहलं मम ॥३॥

श्रीमार्कण्डेय उवाच

साधुसाधु महाप्राज्ञ पृष्टः प्रश्नस्त्वयाऽनघ । कथयामि यथापूर्वंश्रुतमेतन्महेश्वरात्
आसीत्कृतयुगेराजानाम्नादुर्योधनोमहान् । हस्त्यश्वरथसम्पूर्णोमेदिनीपरिपालकः
रूपयौवनसम्पन्नं दृष्ट्वा तं पृथिवीपतिम् । दिव्योपभोगसम्पन्नं प्रार्थयामासनर्मदा

स तु तां चकमे कन्यां त्यक्त्वाऽन्यं प्रमदाजनम् ।
मुदा परमया युक्तो माहिष्मत्याः पतिर्नृप !॥ ७ ॥

रमते स तया सार्द्धं काले वै नृपसत्तम !। नर्मदा जनयामास कन्यां पद्मदलेक्षणाम्
अङ्गप्रत्यङ्गसम्पन्नायस्माल्लोकेषुविश्रुता । तस्यांपिताच माताचचक्रतुःप्रेमबन्धनम्

कालेनाऽतिसुदीर्घेण यौवनस्था वराङ्गना ।
प्रार्थ्यमानाऽपि राजन्वै नात्मानं दातुमिच्छति ॥ १० ॥
ततोऽन्यदिवसेवह्निर्द्विजरूपो महातपाः । राजानंप्रार्थयामास रहो गत्वा शनैः
भोभो रघुकुलश्रेष्ठद्विजोऽहं मन्दसन्ततिः । दरिद्रोह्यसहायश्चभार्यार्थंवरयामित
कन्या सुदर्शना नाम रूपेणाऽप्रतिमा भुवि ।
तां ददस्व महाभाग! वर्द्धते तव मन्दिरे ॥ १३ ॥
ब्रह्मचर्येण निर्विण्ण एकाकी कामपीडितः । याचमानस्यमेतात प्रसादं कर्तुमर्हसि

राजोवाच

नाहं द्रव्यविहीनस्य असवर्णस्य कर्हिचित् ।
दास्यामि स्वां सुतां शुभ्रां गम्यतां द्विजपुङ्गव !॥ १५ ॥
एवमुक्तस्तदावह्निःपरांपीडामुपागतः । नकिञ्चिदुक्त्वाराजानं तत्रैवान्तरधीय
गतेचादर्शनं विप्रे राजा मन्त्रिपुरोहितैः । मन्त्रयित्वाऽकालेतुतुष्टोमखमुखेस्थि
यजतश्च मखे भक्त्या ब्राह्मणैः सह भारत !।
ततश्चाऽदर्शनं वह्निः सर्वेषां पश्यतामगात् ॥ १८ ॥
विप्रा दुर्मनसो भूत्वा गता राज्ञो हि मन्दिरम् ।
वह्निनाशं विमनसो राजानमिदमब्रुवन् ॥ १६ ॥

ब्राह्मणा ऊचुः

दुर्योधन! महाराज श्रूयतां महदद्भुतम् । न श्रुतं न च दृष्टं वा कौतुकं नृपपुङ्गव !
अग्निकार्यप्रवृत्तानां सर्वेषां विधिवन्नृप !। केनाऽपि हेतुनावह्निर्दृश्यतेनज्वलत्
तच्छ्रुत्वा विप्रियं घोरं राजा विप्रमुखाच्च्युतम् ।
आसनात्पतितो भूमौ छिन्नमूल इव द्रुमः ॥ २२ ॥
आश्वस्यच मुहूर्त्तेन उन्मत्त इव संस्तदा । निरीक्ष्यच दिशःसर्वा इदं वचनमब्रवी
किमेतदाश्चर्यपरमिति भोभो द्विजोत्तमाः !।
कथ्यतां कारणं सर्वं शास्त्रदृष्ट्या विभाव्य च ॥ २४ ॥

मम वा दुष्कृतं किञ्चिद्धुताहोभवतामिह । येननष्टोऽग्निशालायां हुतभुक्केनहेतुना
मन्त्रच्छिद्रमथान्यद्वा नैवकिञ्चिददक्षिणम् । क्रियाहीनंकृतंवाथ केनवह्निर्न दृश्यते
मन्त्रहीनोदहेद्राष्ट्रं मन्त्रहीनस्तुऋत्विजः । दातारंदक्षिणाहीनोनास्तियज्ञसमोरिपुः

ब्राह्मणा ऊचुः

न मन्त्रहीना हि वयं न च राजन्व्रतैस्तथा ।
द्रव्येण च न हीनस्त्वमन्यत्पापं विचिन्त्यताम् ॥ २८ ॥

राजोवाच

तथापि यूयं सहिता उपायं चिन्तयन्त्विति । येनश्रेयोभवेन्नित्यमिहलोके परत्र च
एवमुक्तास्ततःसर्वेब्राह्मणाःकृतनिश्चयाः। निराहाराःस्थिताःसर्व्वेयत्रनष्टोहुताशनः

ततः स्वप्ने महातेजा हुतभुग्ब्राह्मणांस्तदा ।
उवाच श्रूयतां सर्व्वैर्मम नाशस्य कारणम् ॥ ३१ ॥

प्रार्थितोऽयंमयाराजासुतांदातुंन चेच्छति । तेननष्टोऽग्निशरणादहंभोद्विजसत्तमाः

यदि मे स्वसुतां राजा ददाति परमार्चिताम् ।
तदाऽस्य ज्वलमानोऽहं गृहे तिष्ठामि नान्यथा ॥ ३३ ॥

तच्छ्रुत्वा वचनंविप्रावैश्वानरमुखोद्गतम् । विस्मयोत्फुल्लनयना राजानमिदमब्रुवन्

भवतो मतमाज्ञाय सर्वे गत्वाऽग्निमन्दिरम् ।
निराहाराः स्थिता रात्रौ पश्यामो जातवेदसम् ॥ ३५ ॥
तेनोक्ताः स्वसुतां चेत्तु राजा मे दातुमिच्छति ।
ततोऽस्य भूयोऽपि गृहे ज्वलेऽहं नान्यथा द्विजाः ॥ ३६ ॥
एवं ज्ञात्वा महाराज स्वसुतां दातुमर्हसि ॥ ३७ ॥

राजोवाच

भवतांतस्यवाकार्यंदेवस्य वचनं हृदि । समयं कर्तुमिच्छामि कन्यादानेह्यनुत्तमम्
मम सन्निहितोनित्यंगृहे तिष्ठतुपावकः । ददामिरुचिरापाङ्गीं नान्यथाकरवाणिवै

एवं ते ब्राह्मणाः श्रुत्वा तथाग्निं प्राप्य सत्वरम् ।

कथयित्वा विवाहेन योजयामासुराशु वै ॥ ४० ॥
सुदर्शनायालाभेन परितुष्टोहुताशनः । ज्वलतेसन्निधौनित्यं माहिष्मत्यांयुधिष्ठि
ततः प्रभृति तत्तीर्थमग्नितीर्थंप्रचक्षते । ये तत्र पक्षसन्धौ तु स्नानदानैस्तु भावित
तर्पयन्तिपितृन्देवांस्तेऽश्वमेधफलैर्युताः । सुवर्णंयेप्रयच्छन्तितस्मिंस्तीर्थेनराधि
पृथ्वीदानफलं तत्र जायते नात्र संशयः । अनाशकं तु यःकुर्यात्तस्मिंतीर्थेनराधि
स मृतो ह्यग्निलोके तु क्रीडते सुरपूजितः। एषते ह्यग्नितीर्थस्य सम्भवःकथितोमय
सर्वपापहरः पुण्यः श्रतमात्रोनरोत्तम !। धन्यःपापहरो नित्यमित्येवं शङ्करोऽब्रवी

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेऽग्नितीर्थमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

—:*:—

## चतुस्त्रिंशोऽध्यायः

### रवितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तत्रैवतु भवेदन्यदादित्यस्य महात्मनः । कीर्त्तयामि;नरश्रेष्ठ! यदि ते श्रवणे म

युधिष्ठिर उवाच

एतदाश्चर्यमतुलंश्रुत्वातवमुखोद्गतम् । विस्मयाद्धृष्टरोमाऽहंजातोऽस्मिमुनिसत्त
सहस्रकिरणोदेवो हर्ता कर्ता निरञ्जनः । अवतारेण लोकानामुद्धर्ता नर्मदातटे
पुरुषाकारो भगवानुताऽहो तपसःफलात् । कस्यगोत्रेसमुत्पन्नःकस्यदेवोऽभवद्

श्रीमार्कण्डेय उवाच

कुलिकान्वयसम्भूतो ब्राह्मणोभक्तिमाञ्छुचिः ।
ईक्ष्यामीति रविं तत्र तीर्थे यात्राकृतोद्यमः ॥ ५ ॥

योजनानांशतंसाग्रंनिराहारोगतोदकः । प्रस्थितोदेवदेवेनस्वप्नान्ते;वारितः वि

भोभोमुनेमहासत्त्वअलंतेव्रतमीदृशम् । सर्वंव्याप्यस्थितंपश्य स्थावरंजङ्गमंचमाम्
तपाम्यहं ततो वर्षं निगृह्णाम्युत्सृजामि च ।
न मृतं चैव मृत्युश्च यः पश्यति स पश्यति ॥ ८ ॥
वरं वरय भद्रं त्वमात्मनो यस्तवेप्सितम् ॥ ६ ॥

ब्राह्मण उवाच

यदि तुष्टोऽसि मे देव देयो यदिवरो मम । उत्तरे नर्मदाकूले सदा सन्निहितो भव
ये भक्त्या परया देव! योजनानां शते स्थिताः ।
स्मरिष्यन्ति जितात्मानस्तेषां त्वं वरदो भव ॥ ११ ॥
कुब्जान्धबधिरामूकाये केचिद्विकलेन्द्रियाः । तवपादौनमस्यन्तितेषांत्वंवरदोभव
शीर्णघ्राणागतिधियो ह्यस्थिचर्मावशेषिताः । तेषांत्वंकरुणादेव अचिरेणकुरुष्वह
येऽपित्वांनर्मदातोये स्नात्वातत्र दिनेदिने । अर्चयन्ति जगन्नाथ तेषां त्वं वरदोभव
प्रभाते येस्तविष्यन्तिस्तवैर्वैदिकलौकिकैः । अभिप्रेतंवरंदेवं तेषां त्वं ददभोऽच्युत
तवाग्रे वपनं देव कारयन्ति नरा भुवि । स्वामिस्तेषां वरो देय एषमे परमो वर ॥
एवमस्त्विति तं चोक्त्वा मुनिं करुणया पुनः ।
शतभागेन राजेन्द्र! स्थित्वा चाऽदर्शनंगतः ॥ १७ ॥
तत्र तीर्थे नरो भक्त्या गत्वा स्नानं समाचरेत् ।
तर्पयेत् पितृदेवांश्च सोऽग्निष्टोमफलं लभेत् ॥ १८ ॥
अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप !।
द्योतयन्वै दिशः सर्वा अग्निलोकं स गच्छति ॥ १६ ॥
यस्तत्तीर्थंसमासाद्यत्यजतीहकलेवरम् । स गतो वारुणंलोकमित्येवंशङ्करोऽब्रवीत्
तत्रतीर्थे तु यः कश्चित्संन्यासेन तनुं त्यजेत् । षष्टिवर्षसहस्राणिस्वर्गलोकेमहीयते
अप्सरोगणसङ्कीर्णे दिव्यशब्दानुनादिते । उषित्वाऽऽयातिमर्त्त्येवैवेदवेदाङ्गविद्भवेत्
व्याधिशोकविनिर्मुक्तो धनकोटिपतिर्भवेत् । पुत्रदारसमोपेतोजीवेच्च शरदः शतम्
प्रातरुत्थाय यस्तत्र स्मरते भास्करं तदा ।

आजन्मजनितात्पापान्मुच्यते नाऽत्र संशयः ॥ २४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे रवितीर्थवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः

### मेघनादतीर्थमाहात्म्यवर्णनम्

युधिष्ठिर उवाच

जलमध्ये महादेवः केनतिष्ठति हेतुना । उत्तरं दक्षिणं कूलं वर्जयित्वा द्विजोत्तम

श्रीमार्कण्डेय उवाच

एतदाख्यानमतुलंपुण्यं श्रुतिसुखावहम् । पुराणे यच्छ्रुतं तात तत्ते वक्ष्याम्यशेषतः

त्रेतायुगे महाभाग रावणो देवकण्टकः । त्रैलोक्यविजयी रौद्रः सुरासुरभयङ्करः

देवदानवगन्धर्वैर्ऋषिभिश्च तपोधनैः । अवध्योऽथ विमानेन यावत्पर्यटतेमहीम् ।

तावद्विन्ध्यगिरेर्मध्येदानवोबलदर्पितः । मयोनामेतिविख्यातोगुहावासी तपश्चरन्

तस्य पार्श्वगतो रक्षो विनयादवनिंगतः । पूजितो दानसन्मानैरिदं वचनमब्रवीत्

कस्येयं पद्मपत्राक्षी पूर्णचन्द्रनिभानना । किंनामधेया तपति तप उग्रं कथं विभो

मय उवाच

दानवानां पतिः श्रेष्ठो मयोऽहं नाम नामतः ।
भार्या तेजोवती नाम तस्यास्तु तनया शुभा ॥ ८ ॥

मन्दोदरीतिविख्यातातपते भर्तृकारणात् । आराधयन्तीभर्त्तारमुमयादयितंशुभम्

तच्छ्रुत्वा वचनं तस्य रावणोमदमोहितः । प्रस्तृतःप्रणतो भूत्वा मयस्वचनमब्रवीत्

पौलस्त्यान्वयसञ्जातो देवदानवदर्पहा । प्रार्थयामिमहाभागसुतां त्वं दातुमर्हसि

ज्ञात्वापैतामहंवृत्तंमयेनाऽपि महात्मना । रावणायसुतादत्ता पूजयित्वाविधानतः

गृहीत्वा तां तदा रक्षोऽभ्यर्च्यमानो निशाचरैः ।
देवोद्याने विमानैश्च क्रीडते स तया सह ॥ १३ ॥

केनचित्त्वथ कालेन रावणो लोकरावणः । पुत्रं पुत्रवतां श्रेष्ठो जनयामास भारत
तेनैवजातमात्रेणरावो मुक्तोमहात्मना । सम्वर्त्तकस्यमेघस्य तेन लोकाजडीकृताः
श्रुत्वातन्नर्दितंघोरं ब्रह्मालोकपितामहः । नाम चक्रे तदा तस्य मेघनादोभविष्यति
एवंनामा कृतसोऽपि परमं व्रतमास्थितः । तोषयामास देवेशमुमया सह शङ्करम्
व्रतैर्न्नियमदानैश्च होमजाप्यविधानतः । कृच्छ्रचान्द्रायणैर्नित्यं कृशंकुर्वन्कलेवरम्
एवमन्यद्दिने तात! कैलासं धरणीधरम् । गत्वालिङ्गद्वयंगृह्यप्रस्थितोदक्षिणामुखः

नर्मदातटमाश्रित्य स्नातुकामो महाबलः ।
निक्षिप्य पूजयन्देवं कृतजाप्यो नरेश्वर !॥ २० ॥

तत्रायतनवासेन स्नातो हुतहुताशनः । कृतकृत्यमिवात्मानं मानयित्वा निशाचरः
गन्तुकामः परंमार्गं लङ्कायां नृपसत्तम !। एकमुद्धरतो लिङ्गं प्रणतः सव्यपाणिना

द्वितीयं तु द्वितीयेन भक्त्या पौलस्त्यनन्दनः ।
तावदेव महालिङ्गं पतितं नर्मदाऽम्भसि ॥ २३ ॥
याहियाहीति चेत्युक्त्वा जलमध्ये प्रतिष्ठितः ।
नमित्वा रावणिस्तस्य देवस्य परमेष्ठिनः ॥ २४ ॥

जगामाकाशमाविश्य पूज्यमानोनिशाचरैः । तदाप्रभृतितत्तीर्थंमेघनादेतिविश्रुतम्

पूर्वं तु गर्जनं नाम सर्वपापक्षयङ्करम् ।
तस्मिंस्तीर्थे तु राजेन्द्र!यस्तु स्नानं समाचरेत्॥ २६ ॥

अहोरात्रोषितोभूत्वाअश्वमेधफलंलभेत् । पिण्डदानंतुयःकुर्यात्तस्मिंस्तीर्थेनराधिप
यत्फलं सत्रयज्ञेन तद्भवेन्नाऽत्र संशयः । तेन द्वादशवर्षाणि पितरः सम्प्रतर्पिताः ॥
यस्तु भोजयते विप्रं षड्रसाऽन्नेनभारत !। अक्षयं पुण्यमाप्नोति तत्र तीर्थे नरोत्तम

प्राणत्यागं तु यः कुर्याद्भावितो भावितात्मना ।
स वसेच्छाङ्करे लोके यावदाभूतसम्प्लवम् ॥ ३० ॥

एषा ते नरशार्दूल! गर्जनोत्पत्तिरुत्तमा । कथिता स्नेहबन्धेन सर्वपापक्षयङ्करी ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे मेघनादतीर्थमाहात्म्यवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

# षट्त्रिंशोऽध्यायः

## दारुकतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेच्च राजेन्द्र! दारुतीर्थमनुत्तमम् । दारुको यत्र संसिद्ध इन्द्रस्य दयितः पुरा

युधिष्ठिर उवाच

दारुकेण कथं तात! तपश्चीर्णं पुराऽनघ !।
विधानं श्रोतुमिच्छामि त्वत्सकाशाद् द्विजोत्तम !॥ २ ॥

श्रीमार्कण्डेय उवाच

हन्त ते कथयिष्यामि विचित्रं यत्पुरातनम् ।
वृत्तं स्वर्गसभामध्ये ऋषीणां भावितात्मनाम् ॥ ३ ॥

सूतो वज्रधरस्येष्टोमातलिर्नामनामतः । सपुत्रं शप्तवान्पूर्वं कस्मिंश्चित्कारणान्तरे

शापाहतो वेपमान इन्द्रस्य चरणौ शुभौ ।
प्रपीड्य मूर्ध्ना देवेशं विज्ञापयति भारत !॥ ५ ॥

तमुवाचाभिशप्तंचाप्यनाथंचसुरेश्वरः । कर्मणाकेनशापस्यघोरस्याऽन्तोभविष्यति
नर्मनातटमाश्रित्य तोषयन्वैमहेश्वरम् । तिष्ठ यावद्युगस्यान्तं पुनर्जन्मह्यवाप्स्यसि
पुनर्भूत्वा तु पूतस्त्वं दारुकोनाम विश्रुतः । संसेव्य परमं देवं शङ्खचक्रगदाधरम्

मानुषं भावमापन्नस्ततः सिद्धिमवाप्स्यसि ।
एवमुक्तस्तु देवेन सहस्राक्षेण धीमता ॥ ६ ॥

प्रणम्य शिरसाभूमिमागतोऽसौ ह्यचेतनः । नर्मदातटमाश्रित्य कर्षयन्निजविग्रहम्
व्रतोपवाससंखिन्नो जपहोमरतः सदा । महादेवं महात्मानं वरदं शूलपाणिनम् ॥

भक्त्या तु परया राजन्यावदाभूतसम्प्लवम् ।
अंशावतरणाद्विष्णोः सूतो भूत्वा महामतिः ॥ १२ ॥
तोषयन्वै जगन्नाथं ततो यातो हि सद्गतिम् ॥ १३ ॥

एषतत्संभवस्तात दारुतीर्थस्यसुव्रत ।। कथितोऽयं मया पूर्वंयथामेशङ्करोऽब्रवीत्
ततो युधिष्ठिरःश्रुत्वा विस्मयंपरमंगतः । भ्रातृन्विलोकयामास हृष्टरोमा मुहुर्मुहुः

श्रीमार्कण्डेय उवाच

तस्मिंस्तीर्थेनरः स्नात्वा विधिपूर्वंनरेश्वर । उपास्यसन्ध्यांदेवेशमर्चयेद्यश्च शङ्करम्

वेदाऽभ्यासं तु तत्रैव यः करोति समाहितः ।
सोऽश्वमेधफलं राजँल्लभते नाऽत्र संशयः ॥ १७ ॥
तस्मिंस्तीर्थे तु यो भक्त्या भोजयेद् ब्राह्मणाञ्छुचिः ।
स तु विप्रसहस्रस्य लभते फलमुत्तमम् ॥ १८ ॥

स्नानंदानं जपोहोमः स्वाध्यायोदेवतार्चनम् । यत्कृतंशुद्धभावेन तत्सर्वंसफलंभवेत्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे दारुकतीर्थमाहात्म्यवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

# सप्तत्रिंशोऽध्यायः

## देवतीर्थवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत राजेन्द्रदेवतीर्थमनुत्तमम् । येन देवास्त्रयस्त्रिंशत्स्नात्वासिद्धिंपरांगताः

युधिष्ठिर उवाच

कथंतातसुराःसर्वे दानवैर्बलवत्तरैः । निर्जितास्तत्र तीर्थेचस्नात्वासिद्धिंपरांगताः

मार्कण्डेय उवाच

पुरादैत्यगणैरुग्रैर्युद्धेऽतिबलवत्तरैः । इन्द्रो देवगणैःसार्द्धं स्वराज्याच्च्यावितोनृप

हस्त्यश्वरथयानौघैर्मर्द्दयित्वा वरूथिनीम् ।
विध्वस्ता भेजिरे मार्गं प्रहारैर्जर्जरीकृताः ॥ ४ ॥

जम्भशुम्भनिशुम्भैश्चकूष्माण्डकुहकादिभिः । वेपमानार्द्दिताःसर्वेब्रह्माणमुपतस्थिरे
प्रणम्य शिरसा देवंब्रह्माणं परमेष्ठिनम् । तदा विज्ञापयामासुर्देवा वह्निपुरोगमाः
पश्यपश्य महाभाग दानवैःशकलीकृताः । वियोजिताःपुत्रदारैस्त्वामेवशरणंगताः
परित्रायस्व देवेश सर्वलोकपितामह । नाऽन्यागतिःसुरेशान!त्वांमुक्त्वापरमेश्वर

ब्रह्मोवाच

दानवानां विघातार्थं नर्मदातटमास्थिताः ।
तपः कुरुध्वं स्वस्थाः स्थ तपो हि परमं बलम् ॥ ६ ॥

नाऽन्योपायोनवैमन्त्रोविद्यतेनच मेक्रिया । विनारेवाजलं पुण्यं सर्वपापक्षयङ्करम्
दारिद्र्यव्याधिमरणबन्धनव्यसनानिच । एतानि चैवपापस्य फलानीति मतिर्मम
एवं ज्ञात्वातत श्चैवतपः कुरुतदुष्करम् । तथा चैव सुराः सर्वेदेवा ह्यग्निपुरोगमाः
तच्छ्रुत्वा वचनंतथ्यंब्रह्मणः परमेष्ठिनः । नर्मदामागताः सर्वे देवा ह्यग्निपुरोगमाः ॥
चेरुव तत्र विपुलं तपः सिद्धिमवाप्नुवन् । तदाप्रभृति तत्तीर्थं देवतीर्थमनुत्तमम् ॥

गीयते त्रिषुलोकेषु सर्वपापक्षयंकरम् । तत्र गत्वाचयो मर्त्यो विधिनासंयतेन्द्रियः
स्नानं समाचरेद्भक्त्या स लभेन्मौक्तिकं फलम् ।
यस्तु भोजयते विप्रांस्तस्मिंस्तीर्थे नराधिप! ॥ १६ ॥
सलभेन्मुख्यविप्राणां फलं साहस्त्रिकंनृप । तत्रदेवशिला रम्या महापुण्यविवर्द्धिनी
सन्यासेनमृतायेतुतेषांस्यादक्षयागतिः । अग्निप्रवेशंयः कुर्यात्तस्मिंस्तीर्थेनराधिप
रुद्रलोके वसेत्तावद्यावदाभूतसंप्लवम् । एवं स्नानंजपोहोमःस्वाध्यायोदेवतार्चनम्
सुकृतं दुष्कृतं वाऽपितत्रतीर्थेऽक्षयंभवेत् । एषतेविधिरुद्दिष्ट उत्पत्तिश्चैव भारत !॥
देवतीर्थस्य निखिलायथावै शङ्कराच्छ्रुता । पठन्तिये पापहरंसर्वदुःखविमोचनम्
देवतीर्थस्य चरितं देवलोकं व्रजन्ति ते ॥ २२ ॥
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे देवतीर्थमाहात्म्यवर्णनंनाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

# अष्टत्रिंशोऽध्यायः

## नर्मदेश्वरमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततो गच्छेत राजेन्द्र! गुहावासीति चोत्तमम् ।
यत्र सिद्धो महादेवो गुहावासी समार्वुदम् ॥ १ ॥

### युधिष्ठिर उवाच

केन कार्येण भोतात महादेवो जगद्गुरुः । गुहायामनयत्कालं सुदीर्घं द्विजसत्तम!
एतद्विस्तरतः सर्वं कथयस्वममानघ! । श्रोतुमिच्छाम्यहंसर्वं परंकौतूहलंहि मे ॥

### मार्कण्डेय उवाच

साधुप्रश्नोमहाराजपृष्टोयोवैत्वयोत्तमः । पुराणेविस्तरो ह्यस्यनशक्योहिमयाऽधुना

कथितुं वृद्धभावत्वादतीतोबहुकालिकः । सङ्क्षेपात्तेनतेतात कथयामिनिबोध
पुरा कृतयुगेराजन्नासीद्दारुवनं महत् । नामाद्रुमलताकीर्णं नानावल्ल्युपशोभित
सिंहव्याघ्रवराहैश्च गजैः खड्गैर्निषेवितम् । बहुपक्षियुतं दिव्यंयथा चैत्ररथं वन

तत्र केचिन्महाप्राज्ञा वसन्ति संशितव्रताः ।
वसन्ति परया भक्त्या चतुराश्रमभाविताः ॥ ८ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा । स्वधर्मनिरताःसर्वेवाञ्छन्तःपरमंपद
तावद्वसन्तसमयेकस्मिंश्चित्कारणान्तरे । विमानस्थोमहादेवोगच्छन्वैह्य मयास
ददर्शतोय आवासमृक्सामयजुर्नादितम् । अलक्ष्यागतनिर्गम्यं सर्वपापक्षयङ्कर
तं दृष्ट्वा मुदिता देवी हर्षगद्गदया गिरा । पप्रच्छ देवदेवेशं शशाङ्ककृतभूषणम्।

देव्युवाच

कस्यायमाश्रमो:देव,वेदध्वनिनिनादितः । यंदृष्ट्वा क्षुत्पिपासाद्यैःश्रमैश्च परिहीयते

महेश्वर उवाच

किं त्वया नश्रुतंदेवि! महादारुवनं महत् । बहुविप्रजनो यत्र गृहधर्मेण वर्त्तते।
अत्र यः स्त्रीजनः कश्चिद्भर्तृशुश्रूषणेरतः । नान्यो देवो नवै धर्मो ज्ञायते शैलनन्दि
एतच्छ्रुत्वा परं वाक्यं देवदेवेन भाषितम् । कौतूहलसमाविष्टा शङ्करंपुनरब्रवीत्
यस्त्वयोक्तं महादेव पतिधर्मरताःस्त्रियः । तासांत्वं मदनोभूत्वा चारित्रंक्षोभयप्रभो

ईश्वर उवाच

यस्त्वायोक्तं च वचनं नहिमेरोचतेप्रिये । ब्राह्मणा हि महद्भूतं न चैषांविप्रियंचरे
मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः । चक्रात्क्रूरतरोमन्युस्तस्माद्विप्रं न कोपये

न ते देवा न ते लोका न ते नागा न चासुराः ।
दृश्यन्ते त्रिषु लोकेषु ये तैर्दृष्टैर्न नाशिताः ॥ २० ॥
तेषां मोक्षस्तथा स्वर्गो भूमिर्मर्त्ये फलानि च ।
येषां तुष्टा महाभागा ब्राह्मणाः क्षितिदेवताः ॥ २१ ॥

एवं ज्ञात्वामहाभागेअसद्ग्राहं परित्यज । तत्रलोके विरुद्धं वै कुप्यन्तेयेन वैद्विजा

देव्युवाच

नाहं ते दयितादेव नाऽहं तेवशवर्त्तिनी । अकृत्वाऽधश्च वैतासांमानंसुरसुपूजितम्
लोकालोके महादेव अशक्यंनास्ति ते प्रभो ! । क्रियतांममचैवैकमेतत्कार्यंसुरोत्तम
एवमुक्तोमहादेवोदेव्या वाक्यहिते रतः । कृत्वा कापालिकं रूपं ययौदारुवनंप्रति
महाहितजटाजूटं नियम्य शशिभूषणम् । कण्ठत्राणं परं कृत्वा धारयन्कर्णकुण्डले
व्याघ्रचर्मपरीधानो मेखलाहारभूषितः । नूपुरध्वनिनिर्घोषैः कम्पयन्वै वसुन्धराम्

महानूर्ध्वजटामाली कृत्तिभस्मानुलेपनः ।
कृत्वा हस्ते कपालं तु ब्रह्मणश्चःमहात्मनः ॥ २८ ॥

महाडमरुघोषेण कम्पयन्वै वसुन्धराम् । प्रभातसमये प्राप्तो महादारुवनं प्रति ॥
तावत्पुण्यजनः सर्वपुष्पपत्रफलार्थिकः । निर्गतो बहुभिः सार्द्धं पवमानः समन्ततः
तद्दृष्ट्वा महदाश्चर्यं रूपं देवस्यभारत । युवतीनां मनस्तासां कामेन कलुषीकृतम्
शोभनं पुरुषं दृष्ट्वा सर्वा अपि वराङ्गनाः । क्लेदभावं ततो जग्मुर्मुदा दारुवनस्त्रियः
विकारा बहवस्तासांदेवं दृष्ट्वा महाद्भुतम् । सञ्जाता विप्रपत्नीनांतदातासुनरोत्तम

परिधानं न जानन्ति काश्चिद्दृष्ट्वा वराङ्गनाः ।
उत्तरीयं तथा चान्या महामोहसमन्विताः ॥ ३४ ॥

केशभारपरिभ्रष्टा काचिदेवासनोत्थिता । दातुकामातदाभैक्ष्यंचेष्टितुंनैवचाशकत्

काचिद्दृष्ट्वा महादेवं रूपयौवनगर्विता ।
उत्संगे संस्थितं बालं विस्मृता पायितुं स्तनम् ॥ ३६ ॥
कामबाणहता चाऽन्या बाहुभ्यां पीड्य सुस्तनौ ।
निःश्वसन्ती तदा चोष्णं न किञ्चित्प्रतिजल्पति ॥ ३७ ॥

एवं संक्षोभ्य तं सर्वं स्त्रीजनंपरमेश्वरः । जगाम तत्र वै तासांक्षोभंकृत्वामहाद्भुतम्

तावत्ते ब्राह्मणाः सर्वे भ्रमित्वा काननं महत् ।
आगताः स्वगृहे दारान्ददृशुश्च हतौजसः ॥ ३९ ॥
यासां पूर्वतरा भक्तिः पातिव्रत्ये पतीन्प्रति ।

चलितास्ता विदित्वाशु निर्जग्मुर्द्विजसत्तमाः ॥ ४० ॥
सम्विदं परमांकृत्वाज्ञात्वादेवंमहेश्वरम् । क्षोभयित्वामनस्तासांततश्चादर्शनंगतम्
क्रोधाविष्टो द्विजः कश्चिद्दण्डमुद्यम्य धावति ।
कल्माषयष्टिमन्ये च तथान्ये दर्भमुष्टिकाम् ॥ ४२ ॥
इतश्चेतश्च ते सर्वेभ्रमित्वाकाननं नृप । एकीभूत्वामहात्मानो व्याजह्रुश्चरुषागिरम्
यदिदं च हुतं किञ्चिद्गुरवस्तोषिता यदि । तेनसत्येन देवस्यलिङ्गंपततुचोत्तमम्
आश्रमादाश्रमं सर्वे न त्यजामो विधिक्रमात् ।
तेन सत्येन देवस्य लिङ्गं पततु भूतले ॥ ४५ ॥
एवं सत्यप्रभावेण त्रिरुक्तेनद्विजन्मनाम् । शिवस्य पश्यतोलिङ्गंपतितंधरणीतले
हाहाकारो महानासील्लोकालोकेऽपि भारत !।
देवस्य पतिते लिङ्गे जगतश्च महाक्षये ॥ ४७ ॥
पतमानस्य लिङ्गस्य:शब्दोऽभूच्च सुदारुणः ।
उल्कापाता दिशां हाहा भूमिकम्पाश्च दारुणाः ॥ ४८ ॥
पतन्ति पर्वताग्राणि शोषं यान्ति च सागराः ।
देवस्य पतिते लिंगे देवा विमनसोऽभवन् ॥ ४६ ॥
समेत्य सहिताः सर्वे ब्रह्माणं परमेष्ठिनम् ।
कृताञ्जलिपुटाः सर्वे स्तुवन्ति विविधैः स्तवैः ॥ ५० ॥
ततस्तुष्टो जगन्नाथश्चतुर्वदनपङ्कजः । आर्त्तान्प्राह सुरान्सर्वान्मा विषादं गमिष्यथ
ब्रह्मशापाभिभूतोऽसौदेवदेवस्त्रिलोचनः । तुष्टैस्तैस्तपसा युक्तैः पुनर्मोक्षंगमिष्यति
एतच्छ्रुत्वा ययुर्देवा यथागतमरिन्दम । भावयित्वा ततः सर्वे मुनयश्चैव भारत॥
विश्वामित्रवसिष्ठाद्या जाबालिरथ कश्यपः ।
समेत्य सहिताः सर्वे तमूचुस्त्रिपुरान्तकम् ॥ ५४ ॥
ब्रह्मतेजोहि बलवद्द्विजानांहिसुरेश्वर। क्षान्तियुक्तस्तपस्तप्त्वाभविष्यसिगतक्लमः
यतः क्षोभादृषीणांच तदेवंलिङ्गमुत्तमम् । पतितं ते महादेव न तत्पूज्यं भविष्यति

न तच्छ्रेयोऽग्निहोत्रेणनाग्निष्टोमेनलभ्यते । प्राप्नुवन्ति चयच्छ्रेयोमानवालिङ्गपूजने
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । वचनेनतु विप्राणामेतत्पूज्यं भविष्यति ॥
ब्रह्मविष्णिवन्द्रचन्द्राणामेतत्पूज्यं भविष्यति । यत्फलं तवलिङ्गस्यइह लोके परत्रच
एवमुक्तोजगन्नाथः प्रणिपत्य द्विजोत्तमान् । मुदा परमया युक्तः कृताञ्जलिरभाषत

ब्राह्मणा जङ्गमं तीर्थं निर्जलं सार्वकामिकम् ।
येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनो जनाः ॥ ६१ ॥

न तत्क्षेत्रं न तत्तीर्थमूषरंपुष्कराणि च । ब्राह्मणेमन्युमुत्पाद्ययत्र गत्वा सशुद्ध्यति

न तच्छास्त्रं यन्न विप्रप्रणीतं न तद्दानं यन्न विप्रप्रदेयम् ।
न तत्सौख्यं यन्नविप्रप्रसादान्न तद्दुःखं यन्न विप्रप्रकोपात् ॥ ६३ ॥
पृथिव्यां यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।
एकस्य विप्रवाक्यस्य कलां नार्हन्ति षोडशीम् ॥ ६४ ॥

अभिनन्द्य द्विजान्सर्वाननुज्ञातो महर्षिभिः । ततोऽगमत्तदादेवो नर्मदातटमुत्तमम् ॥
परमं व्रतमास्थाय गुहावासी समार्बुदम् । तपश्चचार भगवाञ्जपध्यानरतः सदा
समाप्ते नियमेतात स्थापयित्वामहेश्वरम् । वन्द्यमानःसुरैःसार्द्धंकैलासमगमत्प्रभुः
नर्मदायास्तटेतेन स्थापितःपरमेश्वरः । तेनैव कारणेनासौनर्मदेश्वर उच्यते ॥ ६८ ॥

योऽर्चयेन्नर्मदेशानं यतिर्वै सञ्जितेन्द्रियः ।
स्नात्वा चैव महादेवमश्वमेधफलं लभेत् ॥ ६९ ॥
ददाति यः पितृभ्यस्तु तिलपुष्पकुशोदकम् ।
त्रिः सप्तपूर्वजास्तस्य स्वर्गे मोदन्ति पाण्डव !॥ ७० ॥
यस्तु भोजयते विप्रांस्तस्मिंस्तीर्थे नराधिप !।
पायसं घृतमिश्रं तु सलभेत्कोटिजं फलम् ॥ ७१ ॥

सुवर्णंरजतंवापिब्राह्मणेभ्योयुधिष्ठिरः । ददातितोयमध्यस्थःसोऽग्निष्टोमफलंलभेत्
अष्टम्यांवा चतुर्दश्यांनिराहारोवसेत्तुयः । नर्मदेश्वरमासाद्य प्राप्नुयाज्जन्मनःफलम्
अग्निप्रवेशं यःकुर्यात्तस्मिंस्तीर्थेनराधिप । तस्यव्याधिभयंनस्यात्सप्तजन्मसुभारत

अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप !।
अनिवर्त्तिका गतिस्तस्य रुद्रलोके भविष्यति ॥ ७५ ॥
एष ते विधिरुद्दिष्टस्तस्योत्पत्तिर्नरोत्तम !।
पुराणे विहिता तात! सञ्ज्ञा तस्य तु विस्तरात् ॥ ७६ ॥
एतंकीर्त्तयतेयस्तुनर्मदेश्वरसम्भवम् । भक्त्याशृणोति च नरःसोऽपिस्नानफलंलभे

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये नर्मदेश्वरतीर्थमाहात्म्यवर्णनंनामा-ऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

# एकोनचत्वारिंशोऽध्यायः

## कपिलातीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेच्च राजेन्द्र! कपिलातीर्थमुत्तमम् ।
स्नानमात्रान्नरो भक्त्या मुच्यते सर्वकिल्बिषैः ॥ १ ॥

युधिष्ठिर उवाच

आश्चर्यभूतं लोकेषु कथितं द्विजसत्तम । नर्मदेश्वरमाहात्म्यं कापिलं कथयस्व मे
यस्मिन्कालेऽथ सम्बन्धे उत्पन्नं तीर्थमुत्तमम् ।
सर्वपापहरं पुण्यं तीर्थं जातं कथं प्रभो !॥ ३ ॥

मार्कण्डेय उवाच

शृणु वक्ष्येऽद्यतेराजन्कपिलातीर्थमुत्तमम् । येनतेविस्मयःसर्वःश्रुत्वागच्छतिभा
पुरा कृतयुगस्यादौ ब्रह्मा लोकपितामहः । उत्पादयित्वासकलंभूतग्रामंचतुर्वि
जपहोमपरो भक्त्या क्षणं ध्यात्वा च तिष्ठति ।

ज्वलमानात्तु कपिला तावत्कुण्डात्समुत्थिता ॥ ६ ॥
अग्निज्वालोज्ज्वलैः शृङ्गैस्त्रिनेत्रा सुपयस्विनी ।
अग्निपूर्णा ह्यग्निमुखा अग्निघ्राणाग्निलोचना ॥ ७ ॥
अग्निखुराह्यग्निपृष्ठाअग्निसर्वाङ्गसंस्थितिः । सर्वलक्षणसंपूर्णाघण्टाललितनिःस्वना
दृष्ट्वा तु तां महाभागां कपिलां कुण्डमध्यगाम् ।
ब्रह्मा लोकगुरुस्तात प्रणम्येदमुवाच ह ॥ ९ ॥
नमस्ते कपिले पुण्ये सर्वलोकनमस्कृते । मङ्गल्ये मङ्गले देवि त्रिषु लोकेष्वनूपमे ॥
त्वं लक्ष्मीस्त्वं स्मृतिर्मेधा त्वं धृतिस्त्वं वरानने !।
उमादेवीति विख्याता त्वं सती नात्र संशयः ॥ ११ ॥
वैष्णवी त्वं महादेवीब्रह्माणी त्वं वरानने । कुमारीत्वंमहाभागेभक्तिःश्रद्धातथैवच
कालरात्रिस्तु भूतानां कुमारी परमेश्वरी । त्वं लवस्त्वं त्रुटिश्चैव मुहूर्त्तं लक्षमेवच
संवत्सरस्त्वं मासस्त्वं कालस्त्वं च क्षणस्तथा ।
नास्ति किञ्चित्त्वया हीनं त्रैलोक्ये सचराचरे ॥ १४ ॥
एवं स्तुता तु मानेन कपिला परमेष्ठिना । तमुवाच महाभागं प्रहृष्यपद्मसम्भवम्
प्रसन्ना तव वाक्येन देवदेव जगद्गुरो । किं करोमि प्रियं तेऽद्य ब्रूहि सर्वपितामह

ब्रह्मोवाच

जगद्धिताय जनिता मया त्वं परमेश्वरि !।
स्वर्गान्मर्त्यं ततो याहि लोकानां हितकाम्यया ॥ १७ ॥
सर्वदेवमयी त्वं तुसर्वलोकमयी तथा । विधिना येप्रदास्यन्तितेषांवासस्त्रिविष्टपे
एवमुक्त्वा ततो देवी ब्रह्माणं परमेश्वरी । वन्द्यमानासुरैः सिद्धैराजगामधरातलम्

युधिष्ठिर उवाच

यदा यातेह सा तात! ब्राह्मणोवचनाच्छुभा ।
तदा देवाश्च लोकाश्च कथमङ्गेषु संस्थिताः ॥ २० ॥
कथं वासंस्थितागत्य कपिलासा द्विजोत्तम । तीर्थे वाद्य परेक्षेत्रएतन्मेकथयद्विज

मार्कण्डेय उवाच

सा तदा ब्रह्मणा चोक्ता धात्रा लोकस्य भारत !।
ब्रह्मलोकाद्गता पुण्यां नर्मदां लोकपावनीम् ॥ २२ ॥
तपः कृत्वा सुविपुलं नर्मदातटमाश्रिता । चचार पृथिवींसर्वां सशैलवनकानना
तदाप्रभृति राजेन्द्र कपिलातीर्थमुत्तमम् । सर्वपापहरं ख्यातमृषिसङ्घैर्निषेवित
तत्तीर्थे विधिवत्स्नात्वा कपिलां यः प्रयच्छति ।
पृथ्वी तेन भवेद्दत्ता सशैलवनकानना ॥ २५ ॥
तां तु पश्यति योभक्त्यादीयमानांद्विजोत्तमे । तस्य वर्षशतंपापंनश्यतेनात्रसंश
भूर्भुवः स्वर्महश्चैवजनःसत्यंतपस्तथा । तेतत्पृष्ठंसमाश्रित्यस्थिता लोकानृपोत्त
मुखे ह्यग्निः स्थितो देवो दन्तेषु च भुजङ्गमाः ।
धाताविधाता ह्योष्ठौ च जिह्वायां तु सरस्वती ॥ २८ ॥
सहस्रकिरणौ देवौ चन्द्रादित्यौ सुलोचनौ । नासिकामध्यगश्चैवमारुतोनृपसत्त
ललाटे तु महादेवो ह्यश्विनौकर्णसंस्थितौ । नरनारायणौश्टृङ्गे श्टृङ्गमध्येपितामह
कम्बलोधिगतस्तात पाशधृग्वरुणस्तथा । यमश्च भगवान्देव आश्रित्यचोदरंश्रि
खुरेषु पन्नगाश्चैवं पुच्छाग्रेसूर्यरश्मयः । एवंभूतांहिकपिलांसर्वदेवमयीं नृप ॥ ३२
ये धारयन्तिचगृहेधन्यास्तेनात्रसंशयः । प्रातरुत्थाययस्तस्याःकुरुतेतुप्रदक्षिणा
प्रदक्षिणा कृता तेन सशैलवनकानना । कपिलापञ्चगव्येन यः स्नापयति शङ्करम्
उपवासपरो यस्तुतस्मिंस्तीर्थेनराधिप !। स्नात्वाह्य क्तविधानेनतर्पयेत्पितृदेवत
तस्य ते वंशजाःसर्वेदशपूर्वेदशापरे । तृप्तारोहन्तिवै स्वर्गंध्यायन्तोऽस्यमनोरथ
एष ते विधिरुद्दिष्टःसम्भवोनृपसत्तम । तीर्थस्य च फलं पुण्यंकिमन्यत्परिपृच्छ
धन्यं यशस्यमायुष्यं सर्वदुःखघ्नमुत्तमम् । यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंश

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे श्रीनर्मदामाहात्म्ये कपिलातीर्थमाहात्म्यवर्णनंनामैकोन-
चत्वारिंशोऽध्यायः ॥ ३६ ॥

# चत्वारिंशोऽध्यायः

## करञ्जेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र! करञ्जेश्वरमुत्तमम् । यत्रसिद्धोमहाभागोदैत्योलोकेषुविश्रुतः

युधिष्ठिर उवाच

योऽसौ सिद्धो महाभाग! तत्र तीर्थे महातपाः ।
कस्य पुत्रः कथं सिद्धः कस्मिन्काले वद द्विज !॥ २ ॥

मार्कण्डेय उवाच

पुरत कृतयुगे राजन्मानसो ब्रह्मणः सुतः । वेदवेदाङ्गतत्त्वज्ञो मरीचिर्नाम नामतः ॥
तस्यापितपसोराशेः कालेनमहतानघ !। पुत्रोऽथमानसोजातःसाक्षाद्ब्रह्मेवचापरः
क्षमा दमोदयादानंसत्यंशौचमथार्जवम् । मरीचेश्चगुणाह्येते सन्ति तस्यचभारत
एवंगुणगणाकीर्णंकश्यपं द्विजसत्तमम् । ज्ञात्वाप्रजापतिर्दक्षोभार्यार्थेस्वसुतांददौ

अदितिर्दितिर्दनुश्चैव तथाऽप्येवं दशापराः ।
यासां पुत्राश्च सञ्जाताः पौत्राश्च भरतर्षभ !॥ ७ ॥

अदितिर्जनयामासपुत्रानिन्द्रपुरोगमान् ।जातास्तस्यमहाबाहोकश्यपस्यप्रजापतेः
यैस्तु लोकत्रयंव्याप्तंस्थावरं जङ्गमंमहत् । तथान्यस्यमहाभागोदनोःपुत्रोव्यजायत
सर्वलक्षणसम्पन्नः करञ्जो नाम नामतः । बाल एव महाभाग चचार स महत्तपः ॥
नर्मदातटमाश्रित्य चातिघोरमनुत्तमम् । दिव्यं वर्षसहस्रं च कृच्छ्रचान्द्रायणं नृप!
शाकमूलफलाहारः स्नानहोमपरायणः । ततस्तुष्टो महादेव उमया सहितः किल॥

वरेण च्छन्दयामास त्रिपुरान्तकरः प्रभुः ।
भोः करञ्ज! महासत्त्व! परितुष्टोऽस्मि तेऽनघ !॥ १३ ॥
वरं वृणीष्व ते दद्मि ह्यमरत्वमृते मम॥ १४ ॥

करञ्ज उवाच

यदि तुष्टो महादेव यदि देयो वरो मम। तर्हिपुत्राश्च पौत्राश्चसन्तु मे धर्मवत्सल।

तथेत्युक्त्वा महादेव उमया सहितस्तदा।
वृषारूढो गणैः सार्द्धं तत्रैवान्तरधीयत ॥ १८ ॥

गतेचादर्शनंदेवेसोऽपिदैत्योमुदान्वितः। स्वनाम्नात्रमहादेवंस्थापयित्वाययौगृहं

तदाप्रभृति तत्तीर्थं सर्वतीर्थेष्वनुत्तमम्। स्नानमात्रान्नरस्तत्र मुच्यते सर्वपातकैः।

तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः।
सोऽग्निष्टोमस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ १९ ॥
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप !।
अनिवर्त्या गतिस्तस्य रुद्रलोकं स गच्छति ॥ २० ॥

अथवाग्निजले प्राणान्यस्त्यजेद्धर्मनन्दन !। अयुतद्वितयं वसते वर्षाणां शिवमन्दिरे

ततश्चैवक्षये जातेजायते विमलेकुले। वेदवेदाङ्गतत्त्वज्ञःसर्वशास्त्रविशारदः॥ २२

राजा वा राजतुल्यो वा जीवेच्च शरदः शतम्।
पुत्रपौत्रसमोपेतः सर्वव्याधिविवर्जितः ॥ २३ ॥

एवं ते सर्वमाख्यातं पृष्टं यद्यत्त्वयाऽद्य। तीर्थस्य तु फलं तस्य स्नानदानेषु भारत

एतत्पुण्यं पापहरंधन्यंदुःस्वप्ननाशनम्। पठतां शृण्वतां चैवतीर्थमाहात्म्यमुत्तमम्

यस्तु श्रावयते श्राद्धे पठेत्पितृपरायणः। अक्षयं जायते पुण्यमित्येवंशङ्करोऽब्रवीत्

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदामाहात्म्ये करंजेश्वरतीर्थमाहात्म्यवर्णनंनाम -
चत्वारिंशोऽध्यायः ॥ ४० ॥

———

# एकचत्वारिंशोऽध्यायः

## कुण्डलेश्वरतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततो गच्छेच्च राजेन्द्र!कुण्डलेश्वरमुत्तमम् । यत्रसिद्धो महायक्षःकुण्डधारोनृपोत्तम
तपः कृत्वा सुविपुलं सुरासुरभयङ्करम् । पौलस्त्यमन्दिरे चैव चिक्रीड नृपसत्तम!

### युधिष्ठिर उवाच

कस्मिन्युगेसमुत्पन्नःकस्यपुत्रोमहामतिः । तपस्तप्त्वासुविपुलं तोषितोयेनशङ्करः
एतद्विस्तरतस्तात कथयस्व ममाऽनघ । शृण्वतश्च न तृप्तिर्मे कथामृतमनुत्तमम् ॥

### श्रीमार्कण्डेय उवाच

त्रेतायुगे ब्रह्मसमः पौलस्त्योनाम विश्रवाः । तपः कृत्वासुविपुलंभरद्वाजसुतोद्भवः
पुत्रं पौत्रगणैर्युक्तं पत्न्याभक्त्या सुतोषितः । धनदंजनयामाससर्वलक्षणलक्षितम्
जातमात्रंतु तं ज्ञात्वाब्रह्मालोकपितामहः । चकार नाम सुप्रीतऋषिदेवसमन्वितः
यस्माद्विश्रवसो जातो ममपौत्रत्वमागतः । तस्माद्वैश्रवणो नामतव दत्तंमयाऽनघ
तथा त्वंसर्वदेवानांधनगोप्ताभविष्यसि । चतुर्थोलोकपालानामक्षयश्चाव्ययोभुवि

तस्य भार्या महाराज! ईश्वरीति च विश्रुता ।
यक्षो यक्षाधिपः श्रेष्ठस्तस्य कुण्डोऽभवत्सुतः ॥ १० ॥

स च रूपं परं प्राप्य मातापित्रोरनुज्ञया । तपश्चचार विपुलं नर्मदातटमाश्रितः ॥

ग्रीष्मे पञ्चाग्निसन्तप्तो वर्षासु स्थण्डिलेशयः ।
हेमन्ते जलमध्यस्थो वायुभक्षः शतं समाः ॥ १२ ॥

एवं वर्षशते पूर्णे एकाङ्गुष्ठेऽभवन्नृप !। अस्थिभूतः परं तात! ऊर्ध्वबाहुस्ततः परम्
अतपच्च धृतश्वासः कुण्डलो भरतर्षभ । चतुर्थे वर्षशतके तुतोष वृषवाहनः ॥ १४ ॥
वरं वृणीष्व भो वत्सयत्तेमनसिरोचते । ददामि ते न सन्देहस्तपसातोषितोह्यहम्

कुण्डल उवाच

यक्षाधिपप्रसादेन तस्यैवानुचरः सुरे। विचरामि यथाकाममवध्यः सर्वशत्रुषु॥

तथेत्युक्त्वा महादेवः सर्वलोकनमस्कृतः।
जगामाकाशमाविश्य कैलासं धरणीधरम्॥ १७ ॥

गते चादर्शनं देवेसोऽपियक्षोमुदान्वितः। स्थापयामास देवेशंकुण्डलेश्वरमुत्तमम्
अलंकृत्वा जगन्नाथं पुष्पधूपानुलेपनैः। विमानैश्चामरैश्छत्रैस्तथा वै लिङ्गपूरणैः॥

तर्पयित्वा द्विजान्सम्यगन्नपानादिभूषणैः।
प्रीणयित्वा महादेवं ततः स्वभवनं ययौ॥ २० ॥

तदाप्रभृति तत्तीर्थं त्रिषुलोकेषु विश्रुतम्। उत्तमं परमं पुण्यं कुण्डलेश्वरनामतः॥
तत्र तीर्थे तु यः कश्चिदुपवासपरायणः। अर्चयेद्देवमीशानं सर्वपापैः प्रमुच्यते॥
सुवर्णं रजतंवापिमणिमौक्तिकमेव च। दद्याद्भोज्यं ब्राह्मणेभ्यःस सुखीमोदतेदिवि

तत्र तीर्थे तु यः स्नात्वा ऋग्यजुः सामगोऽपि वा।
ऋचमेकां जपित्वा तु सकलं फलमश्नुते॥ २४ ॥
गां प्रयच्छति विप्रेभ्यस्तत्फलं शृणु पाण्डव !।
यावन्ति तस्या रोमाणि तत्प्रसूतिकुलेषु च॥ २५ ॥

तावद्वर्षसहस्राणि स्वर्गलोके महीयते। स्वर्गे वासो भवेत्तस्यपुत्रपौत्रैःसमन्वितः

तावन्ति वर्षाणि महानुभावः स्वर्गे वसेत्पुत्रपौत्रैश्च सार्द्धम्।
तत्रान्नदो याति महेशलोकमसङ्ख्यवर्षाणि न संशयोऽत्र॥ २७ ॥
स वै सुखी मोदते स्वर्गलोके गन्धर्वसिद्धाप्सरःसम्प्रगीते।
एवं तु ते धर्मसुत! प्रभावस्तीर्थस्य सर्वः कथितश्च पार्थ !॥ २८ ॥
श्रुत्वा स्तुवन्मुच्यते सर्वपापैः पुनस्त्रिलोकीमिह तत्प्रभावात्॥ २९ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये कुण्डलेश्वरतीर्थमाहात्म्यवर्णनंनामैक-;चत्वारिंशोऽध्यायः॥ ४१ ॥

# द्विचत्वारिंशोऽध्यायः

## पिप्पलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तुराजेन्द्र पिप्पलेश्वरमुत्तमम् । यत्रसिद्धोमहायोगी पिप्पलादोमहातपाः

युधिष्ठिर उवाच

पिप्पलादस्य चरितं श्रोतुमिच्छाम्यहं विभो !।
माहात्म्यं तस्य तीर्थस्य यत्र सिद्धो महातपाः ॥ २ ॥

कस्य पुत्रो महाभाग! किमर्थं कृतवांस्तपः । एतद्विस्तरतः सर्वंकथयस्व ममानघ

मार्कण्डेय उवाच

मिथिलास्थो महाभागो वेदवेदाङ्गपारगः । याज्ञवल्क्यः पुरातातचचारविपुलंतपः

तापसी तस्यभगिनी याज्ञवल्क्यस्य धीमतः ।
सा सप्तमेऽपि वर्षे च वैधव्यं प्राप दैवतः ॥ ५ ॥
पूर्वकर्मविपाकेन हीनाऽभूत्पितृमातृतः
नाभूत्तत्पतिपक्षेऽपि कोऽपीत्येकाकिनी स्थिता ॥ ६ ॥
भूमौ भ्रमन्ती भ्रातुः सा समीपमगमच्छनैः ।
चचार च तपः सोऽपि परलोकसुखेप्सया ॥ ७ ॥
चचार सापि तत्रस्था शुश्रूषन्ती महत्तपः ।
कस्मिंश्चित्समये साऽथ स्नाताऽहनि रजस्वला ॥ ८ ॥

अन्तर्वासो धृतवती दृष्ट्वा कर्पटकं रहः । याज्ञवल्क्योपि तद्रात्रौ सुप्तो यत्र सुसंवृतः

स्वप्नं दृष्ट्वाऽत्यजच्छुक्रं कौपीने रक्तबिन्दुवत् ।
विराजितेन तपसा सिद्धं तदनलप्रभम् ॥ १० ॥
यावत्प्रबुद्धो विप्रोऽसौ वीक्ष्योच्छिष्टं तदंशुकम् ।

चिक्षेप दूरतोऽस्पृश्यं शौचं कृत्वा विधानतः ॥ ११ ॥
निषिद्धं तु निशि स्नानमिति सुष्वाप स द्विजः ।
निशीथे साऽपि तद्वस्त्रं भगस्यावरणं व्यधात् ॥ १२ ॥
प्रातरन्वेषयामास मुनिर्वस्त्रमितस्ततः । ततः सा ब्राह्मणी प्राह किमन्वेषयसे प्र
केन कार्यं तव तथा वदस्व मम तत्त्वतः ॥ १३ ॥

याज्ञवल्क्य उवाच

अपवित्रो मयाभद्रे स्वप्नोद्दृष्टोऽद्य वैनिशि । सक्लेदं तत्र मे वस्त्रंनिक्षिप्तं तन्नदृश्
तच्छ्रुत्वा ब्राह्मणी वाक्यं भीतभीताऽवदन्नृप !।
तद्वस्त्रं तु मया विप्र स्नात्वा ह्यन्तः कृतं महत् ॥ १५ ॥
तस्यास्तद्वचनंश्रुत्वाहाहेत्युक्त्वामहामुनिः । निपपाततदाभूमौच्छिन्नमूलइवद्रु
किमेतदिति सेत्युक्त्वा ह्याकाशमिव निर्मला ।
आश्वासयन्ती तं विप्रं प्रोवाच वचनं तदा ॥ १७ ॥
वदस्व कारणं तात!गुह्याद्गुह्यतरं यदि । प्रतीकारोऽस्ययेनैवविमृश्यक्रियतेत्व
ततः स सुचिरं ध्यात्वा लब्धवाग्वै ततःक्षणम् ।
प्रोवाच साध्वसमना यत्तच्छृणु नरेश्वर !॥ १६ ॥
नाऽत्र दोषोऽस्ति ते कश्चिन्मम चैवशुभव्रते !। तवोदरेतु गर्भोयस्तत्रदैवंपराय
तस्य तत्त्वेनरक्षाचत्वयाकार्या सदैवहि । विनाशीनैवकर्त्तव्योयावत्कालस्यपर्य
तथेति व्रीडिता साध्वी दूयमानेनचेतसा । अपालयच्च तं गर्भं यावत्पुत्रोह्यजा
जातमात्रं च तं गर्भं गृहीत्वा ब्राह्मणी च सा ।
अश्वत्थच्छायामाश्रित्य तमुत्सृज्य वचोऽब्रवीत् ॥ २३ ॥
यानि सत्त्वानि लोकेषु स्थावराणि चराणि च ।
तानि सर्वाणि रक्षन्तु त्यक्तं वै बालकं मया ॥ २४ ॥
एवमुक्त्वा गता सा तु ब्राह्मणी नृपसत्तम !।
तथागतः स तु शिशुस्तत्र स्थित्वा मुहूर्त्तकम् ॥ २५ ॥

पाणिपादौ विनिक्षिप्य निकुञ्च्य नयने शुभे । आस्यं तु विवृतं कृत्वा रुरोद विकृतैः स्वरैः
तेन शब्देन वित्रस्ताः स्थावरा जङ्गमाश्चये । आकम्पिता महोत्पातैः सशैलवनकानना
ततो ज्ञात्वा महद्भूतं क्षुधाविष्टं द्विजर्षभम् । न जहाति नगश्छायां पानार्थाय ततः परम्
अपिबच्च स्रुतं तस्मादमृतं चैव भारत ! ॥ २८ ॥
एवं स वर्द्धितस्तत्र कुमारो निजचेतसि । चिन्तयामास विश्रब्धः किमम ग्रहगोचरम्
ततः क्रूरसमाचारः क्रूरं दृष्ट्वा निरीक्षितः । पपात सहसा भूमौ शनैश्चारी शनैश्चरः
उवाच च भयत्रस्तः कृताञ्जलिपुटस्तदा । किं मयाऽपकृतं विप्र पिप्पलाद महामुने
चरन्वै गगनाद्येन पातितो धरणीतले । सौरिणा ह्येवमुक्तस्तु पिपलादो महामुनिः
क्रोधरूपोऽब्रवीद्वाक्यं तच्छृणुष्व नराधिप ! । पितृमातृविहीनस्य मम बालस्य दुर्मते!
पीडां करोषि कस्मात्त्वं सौरे! ब्रूहि ह्यशेषतः ॥ ३३ ॥

शनैश्चर उवाच

क्रूरस्वभावः सहजो मम दृष्टिस्तथेदृशी । मुञ्चस्व मां तथाकर्त्ता यद्ब्रवीषि नसंशयः

पिप्पलाद उवाच

अद्यप्रभृति बालानां वर्षादाषोडशाद्ग्रह ! । पीडा त्वया न कर्त्तव्या एष ते समयः कृतः
एवमस्त्विति चोक्त्वा स जगाम पुनरागतः ।
देवमार्गं शनैश्चारी प्रणम्य ऋषिसत्तमम् ॥ ३६ ॥
गते चादर्शनं तत्र सोऽपि बालो महाग्रहः । विचिन्तयन्वै पितरं क्रोधेन कलुषीकृतः
आग्नेयीं धारणां ध्यात्वा जनयामास पावकम् ।
कृत्यामन्त्रैर्जुहावाऽग्नौ कृत्या वै सम्भवत्विति ॥ ३८ ॥
तावज्झटिति सा कन्या ज्वालामालाविभूषिता ।
हुतभुक्सदृशाकारा किं करोमीति चाब्रवीत् ॥ ३९ ॥
शोषयामि समुद्रान्किं चूर्णयामि च पर्वतान् ।
अवनिं वेष्टयामीति पातये किं नभस्तलम् ॥ ४० ॥
कस्य मूर्ध्नि पतिष्यामि घातयामि च कं द्विज ! ।

शीघ्रमादिश्यतां कार्यं मा मे कालात्ययो भवेत् ॥ ४१ ॥

तस्यास्तद्वचनं श्रुत्वा पिप्पलादो महातपाः ।:क्रोधसंरक्तनयन इदं वचनमब्रवीत्
महताक्रोधवेगेनमयात्वंचिन्तिताशुभे । पितामेयाज्ञवल्क्यश्च तस्यत्वंपतमाचिर

एवमुक्त्वाऽगमच्छीघ्रं स्फोटयन्ती नभस्तलम् ।
मिथिलास्थो महाप्राज्ञस्तपस्तेपे महामनाः ॥ ४४ ॥

यावत्पश्यतिदिग्भागंज्वलनार्कसमप्रभम् । याज्ञवल्क्योमहातेजामहद्भूतमुपस्थित
तद्दृष्ट्वा सहसायान्तं भीतभीतमहामुनिः । अनुयुक्तोऽथ भूतेन जनकं नृपतिं य
शरण्यं मामनुप्राप्तं विद्धि त्वं नृपसत्तम !। महद्भूतभयाद्रक्ष यदि शक्नोषिपार्थि
ब्रह्मतेजोभवं भूतमनिवार्यं दुरासदम् । न च शक्नोम्यहं त्रातुं राजा वचनमब्रवी
ततश्चान्यं नृपश्रेष्ठं शरणार्थी महातपाः । जगामतेनमुक्तोऽसौचेन्द्रस्यसदनंभया
देवराज नमस्तेऽस्तुमहाभूतभयान्नृप । कम्पमानोऽब्रवीद्विप्रो रक्षस्वेति पुनःपु
तस्य तद्वचनं श्रुत्वा देवराजोऽब्रवीदिदम् । नशक्नोमिपरित्रातुं ब्रह्मकोपादहं मु
ततः स ब्रह्मभवनं ब्राह्मणो ब्रह्मवित्तमः । जगामविष्णुलोकं च तेनापीत्युक्तएव

ततः स मुनिरुद्विग्नो निराशो जीविते नृप !।
अनुगम्यमानो भूतेन अगच्छच्छङ्करालयम् ॥ ५३ ॥

तस्य योगबलोपेतोमहादेवस्य पाण्डव !। नखमांसान्तरे गुप्तो यथादेवोन पश्य
तदन्ते चागमद्भूतं ज्वलनार्कसमप्रभम् । मुञ्चमुञ्चेति पुरुषं देवदेवं महेश्वरम्
एवमुक्तो महादेवस्तेन भूतेन भारत । योगीन्द्रं दर्शयामास नखमांसान्तरे तदा
संस्थाप्यभूतंभूतेशः परमापद्गतं मुनिम् । उवाचमाभैस्त्वंविप्र निर्गच्छस्वमहामु
ततः सुसूक्ष्मदेहस्थं भूतंद्रष्ट्वाऽब्रवीदिदम् । किमस्यत्वं महाभूत करिष्यसिवदस्व

कृत्योवाच

क्रोधाविष्टेन देवेश ! पिप्पलादेन चिन्तिता ।
अस्य देहं हनिष्यामि हिंसार्थं विद्धि मां प्रभो !॥ ५६ ॥
एतच्छ्रुत्वा महादेवो भूतस्य वदनाच्च्युतम् ।

कटिस्थं याज्ञवल्क्यं च मन्त्रयामास मन्त्रवित् ॥ ६० ॥
योगीश्वरेतिविप्रस्यकृत्वानामयुधिष्ठिर !। विसर्ज्जयित्वा देवेशस्तत्रैवान्तरधीयत
प्रेषयित्वा तु तं भूतं पिप्पलादोपि दुर्मनाः । पितृमातृसमुद्विग्नो नर्मदातटमाश्रितः
एकाङ्गुष्ठो निराहारो वर्षादाषोडशान्नृप । तोषयामास देवेशमुमया सह शङ्करम् ॥
ततस्तत्तपसा तुष्टः शङ्करो वाक्यमब्रवीत् ॥ ६४ ॥

ईश्वर उवाच

परितुष्टोऽस्मि ते विप्र तपसानेन सुव्रत । वरंवृणीष्वते दद्मिमनसा चेप्सितंशुभम्

पिप्पलाद उवाच

यदि मे भगवांस्तुष्टो यदि देयो वरो मम । अत्र सन्निहितो देव तीर्थे भव महेश्वर
एवमुक्तस्तथेत्युक्त्वापिप्पलादं महामुनिम् । जगामादर्शनं देवो भूतसङ्घसमन्वितः
पिप्पलादेगतेदेवेस्नात्वातत्रमहाम्भसि । स्थापयित्वा महादेवंजगामोत्तरपर्वतम्
तत्र तीर्थेनरो भक्त्या स्नात्वा मन्त्रयुतं नृप ! ।
तर्पयित्वा पितॄन्देवान् पूजयेच्च महेश्वरम् ॥ ६६ ॥
अश्वमेधस्य यज्ञस्यफलंप्राप्नोत्यनुत्तमम् । मृतोरुद्रपुरं याति नात्रकार्या विचारणा
अथयोभोजयेद्विप्रान्पितॄनुद्दिश्यभारत । तस्यते द्वादशाब्दानिमोदन्तेदिवितर्पिताः
संन्यासेन तु यः कश्चित्तत्र तीर्थे तनुं त्यजेत् ।
अनिवर्त्तिका गतिस्तस्य रुद्रलोकात्कदाचन ॥ ७२ ॥
एतत्सर्वं समाख्यातं यत्पृष्टं हि त्वयाऽनघ !।
माहात्म्यं पिप्पलादस्य तीर्थस्योत्पत्तिरेव च ॥ ७३ ॥
एतत्पुण्यं पापहरं धन्यं दुःस्वप्ननाशनम् ।
पठतां शृण्वतां चैव सर्वपापक्षयो भवेत् ॥ ७४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदामाहात्म्ये पिप्पलादतीर्थमाहात्म्यवर्णनंनाम
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

# त्रिचत्वारिंशोऽध्यायः

## विमलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तुराजेन्द्र विमलेश्वरमुत्तमम्। तत्र देवशिलारम्या स्वयं देवैर्विनिर्मित

तत्र स्नात्वा तु यो भक्त्या ब्राह्मणान्पूजयेन्नृप !।
स्वल्पेनापि हि दानेन तस्य चान्तो न विद्यते ॥ २ ॥

युधिष्ठिर उवाच

कानि दानानि विप्रेन्द्र ! शस्तानि धरणीतले।
यानि दत्त्वो नरो भक्त्या मुच्यते सर्वपातकैः ॥ ३ ॥

श्रीमार्कण्डेय उवाच

सुवर्णं रजतं ताम्रं मणिमौक्तिकमेव च। भूमि दानञ्च गोदानं मोचयत्यशुभान्नर
तत्रतीर्थे तु यः कश्चित्कुरुतेप्राणसंक्षयम् । रुद्रलोकेवसेत्तावद्यावदाभूतसम्प्लव
ततःपुष्करिणीं गच्छेत्सर्वपापभयङ्करीम्। तत्र स्नात्वार्च्चयेद्देवंतेजोराशिंदिवाकर
ऋचमेकां जपेत्साम्नः सामवेदफलंलभेत्। यजुर्वेदस्य जपनादृग्वेदस्य तथैव च।

अक्षरं वा जपेन्मन्त्रं ध्यायमानो दिवाकरम्।
आदित्यहृदयं जप्त्वा मुच्यते सर्वकिल्बिषैः ॥ ८ ॥
तत्र तीर्थे तु यः स्नात्वा विधिना पूजयेद् द्विजान्।
तस्य कोटिगुणं पुण्यं जायते नात्र संशयः ॥ ९ ॥
अनाशकेनाग्निगत्या जले वा देहपातनात्।
तस्मिंस्तीर्थे मृतो यस्तु स याति परमां गतिम् ॥ १० ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो मा नृपसत्तम !।
विहितं कर्म कुर्वाणः स गच्छेत्परमां गतिम् ॥ ११ ॥

युधिष्ठिर उवाच

व्याधिं सत्त्वक्षयं मोहं ज्ञात्वा वर्णा द्विजोत्तम! ।
पापेभ्यो विप्र ! मुच्यन्ते केन तत्साधनम्वद ॥ १२ ॥

श्रीमार्कण्डेय उवाच

तिलोदकी तिलस्नायी कामक्रोधविवर्जितः ।
ब्राह्मणोऽनशनैः प्राणांस्त्यजँल्लभति सद्गतिम् ॥ १३ ॥
सङ्ग्रामेसद्गतिंतात क्षत्रियोनिधनेलभेत् । तदभावान्महाप्राज्ञ सेवमानोलभेदिति
व्याधिग्रहगृहीतो वा वृद्धो वा विकलेन्द्रियः ।
आत्मानं दाहयित्वाग्नौ विधिना सद्गतिं लभेत् ॥ १५ ॥
वैश्योऽपि हि त्यजन्प्राणानेवं वै शुभभाग्भवेत् ।
जले वा शुद्धभावेन त्यक्त्वा प्राणाञ्छिवो भवेत् ॥ १६ ॥
शूद्रोऽपि द्विजशुश्रूषुस्तोषयित्वा महेश्वरम् । विमुच्यनान्यथापापःपततेनरकेध्रुवम्
अथवाप्रणवाशक्तो द्विजेभ्योगुरवेतथा ।पश्चाग्नौ शोषयेद्देहमापृच्छ्यद्विजसत्तमान्
शान्तदान्तजितक्रोधाञ्छास्त्रयुक्तान् विचक्षणान् ।
तेषां चैवोपदेशेन करीषाग्निं प्रसादयेत् ॥ १६ ॥
एवं वर्णा यथात्वेन मूढाहङ्कारमोहिताः । पतन्ति नरके घोरे यथान्धो गिरिगह्वरे
ये शास्त्रविधिमुत्सृज्यवर्त्तते कामचारतः । कृमियोनिंप्रपद्यन्तेतेषांपिण्डोनचक्रिया
श्रुतिस्मृत्युदितं धर्मं ( ? ) त्यक्त्वा यथेच्छाचारसेविनः ।
अष्टाविंशतिर्वै कोट्यो नरकाणां युधिष्ठिर !॥ २२ ॥
प्रत्येकं वा पतन्त्येते मग्नानरकसागरे । दुर्ल्लभं मानुषं जन्म बहुधर्मार्जितं नृप !
तल्लब्ध्वा मदमात्सर्यं यो वै त्यजति मानवः ।
संनियम्य सदात्मानं ज्ञानचक्षुर्नरो हि सः ॥ २४ ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ॥ २५ ॥
यस्य नोन्मीलितं चक्षुर्ज्ञेयो जात्यन्ध एव सः । एतत्तेकथितं सर्व्वं यत्पृष्टंनृपसत्तम

तथानिष्ठतराणां हि रुद्रस्य वचनं यथा। नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृ
तारयेत्सर्वभूतानि स्थावराणि चराणि च।
सर्वदेवाधिदेवेन ईश्वरेण महात्मना ॥ २८ ॥
लोकानां च हितार्थाय महापुण्यावतारिता।
मानसं वाचिकं पापं स्नानान्नश्यति कर्मजम् ॥ २९ ॥
रुद्रदेहाद्विनिष्क्रान्तातेनपुण्यतमाहिसा। प्रातरुत्थाययोनित्यंभूमिमाक्रम्यभक्ति
एतन्मन्त्रं जपेत्तात स्नानस्य लभते फलम्। नमः पुण्यजलेदेवि नमःसागरगामि
नमोस्तु पापनिर्मोचे नमो देवि शरानने ! ॥ ३२ ॥
नमोस्तु ते ऋषिवरसङ्घसेविते ! नमोऽस्तु ते त्रिनयनदेहनिःसृते !।
नमोऽस्तु ते सुकृतवतां सदा वरे! नमोऽस्तु ते सततपवित्रपावनि !॥ ३
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे विमलेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशोऽध्यायः

### शूलभेदप्रशंसावर्णनम्

श्रीमार्कण्डेय उवाच

तीर्थानां परमंतीर्थं तच्छृणुष्वनराधिप !। रेवाया दक्षिणेकूले निर्मितंशूलपाणिन
मोक्षार्थं मानवेन्द्राणां निर्मितं नृपसत्तम !।

युधिष्ठिरःउवाच

श्रुत्वा मे विविधा धर्मास्तीर्थानि विविधानि च।
दानधर्माः समस्ताश्च त्वत्प्रसादाद्द्विजोत्तम !॥ २ ॥
अन्यच्च श्रोतुमिच्छामिसंसारश्छिद्यतेयथा। पुनरागमनंनास्तिमोक्षप्राप्तिर्भवेद्यथ

एतदाख्याहि मे सर्वं प्रसादाद् द्विजसत्तम !॥ ४ ॥

मार्कण्डेय उवाच

शृणुष्वैकमना भूत्वा तीर्थात्तीर्थान्तरं महत् ।
श्रुते यस्य प्रभावे तु मुच्यते चाब्दिकादघात् ॥ ५ ॥
वाचिकैर्मानसैर्वापि शारीरैश्च विशेषतः ।
कीर्त्तनात्तस्य तीर्थस्य मुच्यते सर्वपातकैः ॥ ६ ॥

पञ्चक्रोशप्रमाणं तु तच्च तीर्थंमहीपते !। भुक्तिमुक्तिप्रदंदिव्यंप्राणिनांपापकर्मिणाम्
रेवाया दक्षिणेकूलेपर्वतोभृगुसञ्ज्ञितः । तस्यमूर्ध्नि च तत्तीर्थंस्थापितंचैवशम्भुना
शूलभेदेति विख्यातंत्रिषुलोकेषुभूपते । तत्रस्थिताश्चये वृक्षास्तीर्थाच्चैवचतुर्द्दिशम्
पतितानिलयंयान्ति रुद्रस्यनात्रसंशयः । मृतास्तत्रैवयेकेचिज्जन्तवो भुवि पक्षिणः
ते यान्तिपरमंलोकंतत्रतीर्थेनसंशयः । पातालान्निःसृता गङ्गाभोगवतीतिसञ्ज्ञिता

निष्क्रान्ता शूलभेदाच्च सर्वपापक्षयङ्करी ।
या सा गीर्वाणनाम्न्यन्या वहेत्पुण्या महानदी ॥ १२ ॥
पतिता कुण्डमध्ये तु यत्र भिन्नं त्रिशूलिना ।
शम्भुना च पुरा तात ! उत्पाद्य च सरस्वती ॥ १३ ॥
सा तत्र पतिता राजन्प्राचीनाघविमोचिनी ।
भास्वत्या:त्रितयं यत्र शिला गीर्वाणसञ्ज्ञिता ॥ १४ ॥

तत्र तीर्थे च तत्तीर्थं न भूतं न भविष्यति । केदारश्च प्रयागश्च कुरुक्षेत्रं गया तथा

अन्यानि च सुतीर्थानि कलां नार्हन्ति षोडशीम् ।
पञ्च स्थानानि तीर्थानि पृथग्भूतानि यानि च ॥ १६ ॥
वक्ष्यामि च समासेन एकैकं च पृथक्पृथक् ।
गया नाभ्यां यथा पुण्या चक्रतीर्थं च तत्समम् ॥ १७ ॥

धर्मारण्ये यथा कूपं शूलभेदं च तत्समम् । ब्रह्मयूपं यथा पुण्यं देवनद्यास्तथैव च

यथा गयाशिरः पुण्यं सुराणां च यथा शिला ।

यथा च पुष्करं स्थानं मार्कण्डह्रद एव च ॥ १६ ॥
दत्त्वापिण्डोदकंतत्रपितृणां च तथाक्षयम् । यस्तत्रकुरुतेश्राद्धंतोयंपिबतिनित्यशः
मुच्यतेसर्वपापैस्तु उरगःकञ्चुकैरिव । अनिन्द्यान्पूजयेद्विप्रान्दम्भक्रोधविवर्जितान्
त्रयोदशदिनं दानं त्रयोदशगुणम्भवेत् । अभ्यर्चितं सुरं दृष्ट्वा गणनाथं गजाननम्
सर्वे विघ्नाविनश्यन्ति दृष्ट्वा कम्बलक्षेत्रपम् । पूजयेत्परयाभक्त्याशूलपाणिंमहेश्वरम्
देवस्य पूर्वभागे तु उमा पूज्या प्रयत्नतः ।
मार्कण्डेशं ततो भक्त्या पूजयेद् गुहवासिनम् ॥ २४ ॥
मुच्यन्तेपातकैः सर्व्वैरज्ञानज्ञानसञ्चितैः । गुहामध्ये प्रविष्टस्तु जपेत्सूक्तंतुत्र्यक्षरम्
नीलपर्वतजं पुण्यं षष्ठांशेन लभेत सः । त्रिनरास्तत्र तिष्ठन्ति सादित्यमरुतैः सह
सर्वदेवमयंस्थानंकोटिलिङ्गमनुत्तमम् । यथानदीनदाःसर्वे सागरे यान्तिसङ्क्षयम्
तथा पापानि नश्यन्ति शूलभेदस्य दर्शनात् ।
प्रत्यक्षो दृश्यतेऽद्यापि प्रत्ययो ह्यवनीपते !॥ २८ ॥
विस्फुलिङ्गालिङ्गमध्येस्पन्दन्तेस्नानयोगतः । द्वितीयःप्रत्ययस्तत्रतैलबिन्दुर्नसर्पति
एवं हि प्रत्ययस्तत्र शूलभेदप्रभावजः । यः स्मरेच्छूलभेदं तु त्रिकालं नित्यमेव च
सपूतश्चभवेत्साक्षात्सबाह्याभ्यन्तरोनृप !। नकस्यचिन्मयाख्यातंपृष्टोऽहंत्रिदशैरपि
गुह्याद्गुह्यतरं तीर्थं सदा गोप्यं कृतं मया । सर्वपापहरं पुण्यं सर्वदोषघ्नमुत्तमम्
सर्वतीर्थमयं तीर्थं शूलभेदं जनेश्वर !। श्रुते यस्य प्रभावेतुमुच्यतेसर्वपातकैः ॥ ३३ ॥
शूलभेदं मयाताततसंक्षेपात्कथितं तव । यःश्रृणोतिनरोभक्त्या मुच्यते सर्वपातकैः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शूलभेद प्रशंसावर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

———

# पञ्चचत्वारिंशोऽध्यायः

## शूलभेदनामकथनेऽन्धकप्रशंसनवर्णनम्

श्रीमार्कण्डेयं उवाच

एष एव पुरा प्रश्नः परिपृष्टो महेश्वरम् । राज्ञाचोत्तानपादेनऋषिदेवसमागमे ॥ १ ॥

उतानपाद उवाच

इदं तीर्थं महापुण्यं सर्वदेवमयं परम् । गुह्याद्गुह्यतरं स्थानं न दृष्टं न श्रुतं हर !॥
शूलभेदं कथं जातंकेनैवोत्पादितंपुरा । माहात्म्यंतस्यतीर्थस्यविस्तराच्छंसमेप्रभो

ईश्वर उवाच

आसीत्पुरा महावीर्योदानवो बलदर्पितः । मर्त्यैं न तादृशःकश्चिद्विक्रमेण बलेन वा
सूनुर्ब्रह्मसुतस्याऽयमन्धकोनामदुर्मदः । निजस्थानेवसन्पापःकुर्वन्राज्यमकण्टकम्
हृष्टपुष्टो वसन्मर्त्ये स सुरैर्नाभिभूयते । भवनंतस्यपापस्य वह्नेरुपवनं यथा ॥ ६ ॥
एतस्मिन्नन्धकः काले चिन्तयामासभारत । तोषयामि महादेवंयेनसानुग्रहो भवेत्
प्रार्थयामि वरंदिव्यं योमेमनसिवर्त्तते । परंसनिश्चयं कृत्वासोऽन्धकोनिर्गतोगृहात्

रेवातटं समासाद्य दानवस्तपसि स्थितः ।
उग्रं तपश्चचाराऽसौ दारुणं लोमहर्षणम् ॥ ६ ॥

दिव्यं वर्षसहस्रं स निराहारोऽभवत्ततः । द्वितीयं तु सहस्रं स न्यवसद्वारिभोजनः
तृतीयं तु सहस्रं स धूमपानरतोऽभवत् । चतुर्थं वर्षसाहस्रंयोगाभ्यासेन संस्थितः
कोऽपीह नेदृशं चक्रेतपःपरमदारुणम् । अस्थिचर्माऽवशेषोऽसौ यावत्तिष्ठतिभारत

तस्य मूर्ध्नि ततो राजन्धूमवर्त्तिर्विनिःसृता ।
देवलोकमतीत्याऽसौ कैलासं व्याप्य संस्थिता ॥ १३ ॥

तावद्देवसमीपस्था उमावचनमब्रवीत् । कोऽस्त्ययं मानुषेलोकेतपसोग्रेणसंस्थितः
चतुर्वर्षसहस्राणि व्यतीयुः परमेश्वर !। न केनाऽपीदृशं तप्तं तपो दृष्टं श्रुतं तथा ॥

अवज्ञांकुरुषे देव किमत्रनियमाऽन्विते ।।सर्वस्य दत्से शीघ्रं त्वमल्पेन तपसाविभो
नाक्षक्रीडां करिष्येऽद्यत्वया सहमहेश्वर !। यावन्नोत्थाप्यतेह्येषदानवोभक्तवत्सल
ईश्वर उवाच
साधुसाधु महादेवि! सर्वलक्षणलक्षिते । अहं तंनविजानामिक्लिश्यन्तं दानवेश्वरम्
योगाभ्यासे स्थितो भद्रे! ध्यायंस्तत्परमं पदम् ।
तत्रागच्छ मया सार्द्धं यत्र तप्यत्यसौ तपः ॥ १६ ॥
उमया सहितो देवो गतस्तत्र महेश्वरः । अस्थिचर्मावशेषस्तु दृष्टो देवेन शम्भुना
प्रत्युवाच प्रसन्नोऽसौ देवदेवो महेश्वरः । भोभोः कष्टं कृतं भीमं दारुणंलोमहर्षणम्
ईदृशंच तपो घोरंकस्माद्वत्स त्वया कृतम् । वरंदास्याम्यहंवत्स यस्तेमनसिवर्त्तते
अन्धक उवाच
यदि तुष्टोऽसिमे देववरदोयदि शङ्कर । सुरान्सर्वान्विजेष्यामित्वत्प्रसादान्महेश्वर
ईश्वर उवाच
स्वप्नेऽपि त्रिदशाः सर्वे न योद्धव्याः कदाचन ।
असम्भाव्यं न वक्तव्यंमनसो यन्न रोचते ॥ २४ ॥
अन्यं किमपि याचस्व यस्ते मनसि वर्त्तते ।
स्वर्गे वा यदि वा मर्त्त्ये पातालेषु च संस्थितान् ॥ २५ ॥
मर्त्त्येषु विविधान्भोगान्भोक्ष्यसि त्वं यथेप्सितान् ।
कुरु निष्कण्टकं राज्यं स्वर्गे देवपतिर्यथा ॥ २६ ॥
देवस्य वचनं श्रुत्वा सोऽन्धको विमनाः स्थितः ।
वृथा क्लेशश्च मे जातो न किञ्चित्साधितं मया ॥ २७ ॥
निःश्वासं परमं मुक्त्वा निपपात धरातले ।
मूलच्छिन्नोयथावृक्षोनिरुच्छ्वासस्तदाभवत् ॥ २८ ॥
मूर्च्छापन्नं ततो दृष्ट्वा देवी वचनमब्रवीत् । यं कामंकामयत्येष तमस्मै देहि शङ्कर
भक्तानुपेक्षमाणस्य तवाऽकीर्त्तिर्भविष्यति ॥ ३० ॥

ईश्वर उवाच

यदि दास्ये वरं देविइच्छाभूतंकदाचन । ततो न मंस्यतेविष्णुं नब्रह्माणंनमामपि
उच्चत्वमाप्तो देवेशि! अन्यानपि सुरासुरान् ॥ ३२ ॥

देव्युवाच

कमप्युपायमाश्रित्य उत्थापय महेश्वर !। विष्णुवर्जं सुरान्सर्वाञ्जयस्वेति वरं वद॥

ईश्वर उवाच

उपायः शोभनो देवि! यो मे मनसि वर्त्तते ।
तमेवास्मै प्रदास्यामि यस्त्वया कथितो वरः ॥ ३४ ॥
ततोऽमृतेन संसिक्तः स्वस्थोऽभूत्तत्क्षणादयम् ।
तथा पुनर्नवो जातः सर्वाऽवयवशोभितः ॥ ३५ ॥

शृणुष्वैकमनाभूत्वागृहाण वरमुत्तमम् । विष्णुवर्जंप्रदास्यामियत्तवाभिमतंप्रियम्
सर्वं च सफलं तुभ्यं मा धर्मस्तेऽन्यथा भवेत् ।
ददामीति वरं तुभ्यं मन्यसे यदि चाऽसुर !॥ ३७ ॥
विष्णुवर्जं सुरान्सर्वाञ्जेष्यसि त्वं च मां विना ॥ ३८ ॥

अन्धक उवाच

भवत्वेवमिति प्राह बलमास्थायकेवलम् । विष्णुवर्जं विजेष्येऽहंस्वबलेन महेश्वर!
कृतार्थोऽहं हि सञ्जात इत्युक्त्वा प्रणतिं गतः ।
गच्छ देवो मया सार्द्धं कैलासशिखरं वरम् ॥ ४० ॥

वृषपुङ्गवमारुह्य देवोऽसावुमया सह । वरंदत्त्वा स तस्यैवंतत्रैवान्तरधीयत ॥ ४१

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे अन्धकवरप्रदानवर्णनंनाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

———

# षट्चत्वारिंशोऽध्यायः

## शचीहरणवर्णनम्

### श्रीमार्कण्डेय उवाच

स दानवोवरं लब्ध्वाजगामस्वपुरं प्रति । ददर्श स्वपुरंराजच्छोभितंचित्रचत्व
उद्यानैश्चैव विविधैः कदलीखण्डमण्डितैः । पनसैर्बकुलैश्चैवाम्रातैराम्रैश्च चम्प
अशोकैर्नालिकेरैश्चमातुलिङ्गैःसदाडिमैः । नानावृक्षैश्चशोभाढ्यंतडागैरुपशोभित
देवतायतनैर्दिव्यैर्ध्वजमालासुशोभितैः । वेदाध्ययननिर्घोषैर्मङ्गलाद्यैर्विनादितम्

प्राविशद्भवने दिव्ये काञ्चने रुक्ममालिनि ।
अपश्यत्स सुतान्भार्याममात्यान्दासभृत्यकान् ॥ ५ ॥

ततो जयप्रदान्सर्वान्नितश्चेतश्च धावतः । हृच्छोभां च प्रकुर्वाणान्वैजयन्तीभिरुच्च

केचित्तोरणमाबद्ध्य केचित्पुष्पाण्यवाकिरन् ।
मातुलिङ्गकराश्चान्ये धावन्ति ह्यन्धकं प्रति ॥ ७ ॥

पुरे जनाश्च दृश्यन्ते भाजनैरन्नपूरितैः । पूर्णहस्ताः प्रदृश्यन्ते तत्रैव बहवो जन
साक्षतैर्भाजनैस्तत्रशतसाहस्रयोषितः । मन्त्रान्पठन्ति विप्राश्चमङ्गलान्यपियोषि

अमात्याश्चैव भृत्याश्च गजांश्चाढौकयन्ति च ।
वर्धापयन्ति ते सर्वे ये केचित्पुरवासिनः ॥ १० ॥

हृष्टस्तुष्टोऽवसत्तत्र सचिवैःसह सोऽन्धकः । ददर्श सजगत्सर्वंतुरङ्गांश्चपदातिका

तथैव विविधान्कोशांस्तत्र काञ्चनपूरितान् ।
महिषीर्गा वृषांश्चैवापश्यच्छत्राण्यनेकधा ॥ १२ ॥

स एवमन्धकस्तत्र कियन्तंकालमावसत् । हृष्टस्तुष्टोऽवसन्मर्त्ये स सुरैर्नाभ्यभूय

वरं लब्धं तु तं ज्ञात्वा शङ्किताः स्वर्गवासिनः ।
एकीभूताश्च ते सर्वे वासवं शरणं गताः ॥ १४ ॥

शक्र उवाच

कथमागमनंवोऽत्र सर्वेषामपिनाकिनाम् ।
कस्माद्वो भयमुत्पन्नमागताःशरणं कथम ।
ततस्ते ह्यमराः सर्वे शक्रमेतद्वचोऽब्रुवन् ॥ १६ ॥

देवा ऊचुः

सुरनाथान्धकोनाम दैत्यः शम्भुवरोर्जितः । अजेयःसर्वदेवानांकिं नुकार्यमतः परम्
तत्त्वं चिन्तय देवेश! क उपायो विधीयताम् ।
इत्थं वदन्ति ते देवाः शक्राग्रे मन्त्रणोद्यताः ॥ १८ ॥
मन्त्रयन्ति च यावद्दैतावच्चारमुखेरितम् । ज्ञात्वातत्र स देवौघंदानवोनिर्गतोगृहात्
एकाकी स्यन्दनाऽऽरूढ आयुधैर्बहुभिर्वृतः । दुर्गमं मेरुपृष्ठं स लीलयैव गतो नृप
स्वर्णप्राकारसंयुक्तं शोभितं विविधाश्रमैः ।
दुर्गमं शत्रुवर्गस्य तदा पार्थिवसत्तम !॥ २१ ॥
प्रविवेशाऽऽसुरस्तत्र लीलया स्वगृहे यथा । वृत्रहाभयमापन्नःस्वकीयं चासनंददौ
उपविष्टोऽन्धकस्तत्र शक्रस्यैवाऽऽसने शुभे ।
आस्थानं कलयामास सर्वतस्त्रिदशावृतम् ॥ २३ ॥

शक्र उवाच

किं तवाऽऽगमनं चाऽत्र किं कार्यं कथयस्व मे ।
यदस्मदीयं वित्तं हि तत्ते दास्यामि दानव ! ॥ २४ ॥

अन्धक उवाच

नाऽहं वै कामयेकोशंनगजांश्चसुरेश्वर !। स्वकीयंदर्शयस्वाऽद्यस्वर्गश्रृङ्गारभूषितम्
ऐरावतं महानागं तं चैवोच्चैः श्रवोहयम् । उर्वश्यादीनि रत्नानि मम दर्शय गोपते
पारिजातकपुष्पाणि-वृक्षजातीननेकशः ।
वादित्राणि च सर्वाणि दर्शयस्व शचीपते !॥ २७ ॥
तस्य तद्वचनं श्रुत्वा शक्रश्चिन्तितवानिदम् ।

योऽमुं निहन्ति पाप्मानं न पश्यामि कर्हिचित् ॥ २८ ॥
नास्ति रक्षाप्रदः कश्चित्स्वर्गलोकस्य दुःखिनः ।
भयत्रस्तो ददावन्यद्वादित्राद्यप्सरोगणैः ॥ २९ ॥

रङ्गभूमावुपाविश्य कारयामास ताण्डवम् । उपविष्टाःसुराःसर्वे यममारुतकिन्नराः
उर्वश्याद्या अप्सरसो गीतवादित्रयोगतः । ननृतुः पुरतस्तस्य सर्वाएकैकशो नृप
न व्यश्राम्यत तच्चित्तं दृष्ट्वाचाप्सरसस्तदा । शचीं प्रतिमनस्तस्य सकाममभवन्नृप

गृहीत्वा शक्रभार्यां स प्रस्थितः स्वपुरं प्रति ।
ततः प्रववृते युद्धमन्धकस्य सुरैः सह ॥ ३३ ॥
तेन देवगणाः सर्वे ध्वस्ताः पार्थिवसत्तम !।
सङ्ग्रामे विविधैः शस्त्रैश्चक्रवज्रादिभिर्घनैः ॥ ३४ ॥

सन्तापिताः सुराःसर्वेक्षयंनीताह्यनेकशः । सर्वेऽपि सहसा तेन भग्नाःसङ्ग्राममूर्द्धनि
यथासिंहोगजान्सर्वान्विजित्य विचरेद्वनम् । तद्वदेकेनदेवा जिताःसर्वेपराङ्मुखाः

बालोऽधिपो यथाग्रामे स्वेच्छया पीडयेज्जनान् ।
स्वैरमाक्रम्य गृह्णाति कोशवासांसि चाऽसकृत् ॥ ३७ ॥

गतं न पश्यत्यात्मानं प्रजासन्तापनेन च । गृहीत्वाशक्रभार्यां सगतोवैदानवोत्तमः

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
शूलभेदमाहात्म्ये शचीहरणवर्णनंनाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

———

# सप्तचत्वारिंशोऽध्यायः

## सब्रह्मदेवैर्विष्णोरुपस्थानमनुष्यलोकगमनवर्णनम्

मार्कण्डेय उवाच

गीर्वाणाश्च ततः सर्वे ब्रह्माणं शरणं गताः । गजैर्गिरिवराकारैर्हयैश्चैव गजोपमैः ॥
स्यन्दनैर्नगराकारैः सिंहशार्दूलयोजितैः । कच्छपैर्महिषैश्चान्यैर्मकरैश्च तथाऽपरे
ब्रह्मलोकमनुप्राप्ता देवाःशक्रपुरोगमाः । दृष्ट्वापद्मोद्भवं देवं साष्टाङ्गं प्रणताः सुराः

देवा ऊचुः

जयदेव जगद्वन्द्य जय संसृतिकारक !। पद्मयोने सुरश्रेष्ठ त्वामेव शरणं गताः ॥ ४॥
सोद्वेगं भाषितं श्रुत्वा देवानां भावितात्मनाम् । मेघगंभीरयावाचादेवराजमुवाचह
किमत्राऽऽगमनं देवाः सर्वेषां वैवर्णता । केनापमानिताःसर्वेशीघ्रंमेकथ्यतांस्वयम्

देवा ऊचुः

अन्धकाख्यो महादैत्यो बलवान्पद्मसम्भव ।
तेन देवगणाः सर्वे धनरत्नैर्वियोजिताः ॥ ७ ॥
हत्वा देवगणांस्तावदसिचक्रपरश्वधैः ।
गृहीत्वा शक्रभार्यां स दानवोऽपि गतो बलात् ॥ ८ ॥
देवानां वचनं श्रुत्वा ब्रह्मालोकपितामहः । चिन्तयामासराजेन्द्रवधार्थंदानवस्यह
अवध्यो दानवः पापः सर्वेषां वो दिवौकसाम् ।
स त्राता सर्वजगतां नान्यो विद्येत कुत्रचित् ॥ १० ॥
एवमुक्ताः सुराः सर्वे ब्रह्मणा तदनन्तरम् । ब्रह्माणं ते पुरस्कृत्य गतायत्र स केशवः
तुष्टुवुर्विविधैः स्तोत्रैर्ब्रह्माद्याश्चक्रपाणिनम् ॥ ११ ॥

देवा ऊचुः

जय त्वं देवदेवेश लक्ष्म्या वक्षस्थलाऽऽश्रितः । असुरक्षय देवेश वयं ते शरणं गताः

स्तूयमानः सुरैः सर्वैर्ब्रह्माद्यैश्च जनार्दनः । संप्रहृष्टमना भूत्वा सुरसङ्घमुवाच ह ॥

श्रीवासुदेव उवाच

स्वागतं देवविप्राणां सुप्रभाताऽद्य शर्वरी ।
किं कार्यं प्रोच्यतां क्षिप्रं कस्य रुष्टा दिवौकसः ॥ १४ ॥
किं दुःखं कश्च सन्तापः कुतो वा भयमागतम् ।
कथयन्तु महाभागाः! कारणं यन्मनोगतम् ॥ १५ ॥

पराभवः कृतो येनसोऽप्ययातुयमालयम् । एवमुक्तास्तु कृष्णेन कथयामासुरप्यत

दर्शयन्तः स्वकान्देहाँल्लज्जमाना ह्यधोमुखाः ।
हृतराज्या ह्यन्धकेन कृता निस्तेजसः प्रभो !॥ १७ ॥
पितेव पुत्रं परिरक्ष देव जहीन्द्रशत्रुं सह पुत्रपौत्रैः ।
तथेति चोक्तः कमलासनेन सुरासुरैर्वन्दितपादपद्मः ॥ १८ ॥

शङ्खं चक्रं गदां चापं संगृह्य परमेश्वरः । उत्थितो भोगपर्यङ्काद्देवानां पुरतस्तद

श्रीवासुदेव उवाच

पाताले यदिवामर्त्येनाकेवायदितिष्ठति । तंहनिष्याम्यहंपापंयेनसन्तापिताःसुरा

स्वं स्थानं यान्तु गीर्वाणाः सन्तुष्टा भावितौजसः ।
विष्णोस्तद्वचनं श्रुत्वा ब्रह्माद्यास्ते सवासवाः ॥ २१ ॥
स्वयानैस्तु हरिं नत्वा हृदि तुष्टा दिवं ययुः ॥ २२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे विष्णुप्रार्थनमनुगीर्वाणस्वर्गमनवर्णनंनाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

———

# अष्टचत्वारिंशोऽध्यायः

## अन्धकवधतद्वरप्रदानवर्णनम्

उत्तानपाद उवाच

कस्मिन्स्थानेऽवसद् देव! सोऽन्धको दैत्यपुङ्गवः।
सर्वान्देवांश्च निर्जित्य कस्मिन्स्थाने समास्थितः ॥ १ ॥

श्रीमहेश उवाच

प्रविष्टो दानवोयत्रकथयामिनराधिप !। पाताललोकमाश्रित्यकन्याविध्वंसतेतुसः

तत्र स्थितं तं विज्ञाय चापमादाय केशवः।
व्यसृजद् बाणमाग्नेयं दह्यतामिति चिन्तयन् ॥ ३ ॥

दह्यमानोऽग्निनासोऽपिवारुणास्त्रंससन्दधे । वारुणास्त्रेण महताआग्नेयंशमितंतदा

ततोऽसौ चिन्तयामास केन बाणो विसर्जितः।
कस्यैषा पौरुषी शक्तिः को यास्यति यमालयम् ॥ ५ ॥

ततोऽन्धको मृधेक्रुद्धोबाणमार्गेणनिर्गतः । सद्दृष्ट्वाबाणमार्गेणचापहस्तंजनार्द्दनम्

अन्धक उवाच

न शर्म लप्स्यसे ह्यद्य मया दृष्ट्याऽभिवीक्षितः।
न शक्नोषि तथा गन्तुं नागः शार्दूलदर्शनात् ॥ ७ ॥
आगच्छति यथा भक्ष्यं मार्जारस्य च मूषिकः।
न शक्नोषि तथा यातुं संस्थितस्त्वं ममाऽग्रतः ॥ ८ ॥

अहं त्वांप्रेषयिष्यामियममार्गेसुदारुणे । अहमन्वेषयिष्यामिकिलयास्यामितेगृहम्
उपनीतोऽसि कालेन संग्राममेमम केशव । येत्वयानिर्ज्जिताः पूर्वं दानवाअप्यनेकशः
न भवन्ति पुमांसस्तेस्त्रियस्ताश्चैव केशव । परं न शस्त्रसंग्रामंकरिष्यामित्वयासह
वदतो दानवेन्द्रस्य न चुकोप स केशवः । अयुध्यमानं तं दृष्ट्वाचिन्तयामास दानवः

द्वन्द्वयुद्धं करिष्यामि निश्चित्य युयुधे नृप । सकृष्णेन पदाक्षिप्तःपतितःपृथिवीतले
मुहूर्त्तात्ससमाश्वस्यउत्थायेदंव्यचिन्तयन् । अशक्तोद्वन्द्वयुद्धायततःसामप्रयुक्तवान्
पाणिभ्यां सम्पुटं कृत्वा साष्टाङ्गं प्रणतः शुचिः ॥ १४ ॥

अन्धक उवाच

जय कृष्णाय हरये विष्णवे जिष्णवे नमः । हृषीकेश जगद्धात्रे अच्युताय महात्मने
नमः पङ्कजनाभाय नमः पङ्कजमालिने । जनार्द्दनाय श्रीशाय श्रीपते पीतवाससे
गोविन्दाय नमो नित्यंनमोजलधिशायिने । नमःकरालवक्त्राय नरसिंहायनादिने
शार्ङ्गिणे सितवर्णायशङ्खचक्रगदाभृते । नमोवामनरूपाययज्ञरूपाय ते नमः ॥ १८ ॥
नमो वराहरूपाय क्रान्तलोकत्रयाय च । व्याप्ताशेषदिगन्ताय केशवाय नमोनमः ॥
वासुदेव नमस्तुभ्यं नमः कैटभनाशिने । लक्ष्म्यालय सुरश्रेष्ठ नमस्ते सुरनायक ॥
विष्णोर्द्देवाधिदेवस्य प्रमाणं येऽपिकुर्वते । प्रजापतेर्जगद्धातुस्तेषामपि नमाम्यहम्
समस्तभूतदेवस्य वासुदेवस्य धीमतः । प्रणामं ये प्रकुर्वन्ति तेषामपि नमाम्यहम्
तस्य यज्ञवराहस्य विष्णोरमिततेजसः । प्रणामं ये प्रकुर्वन्ति तेषामपिनमाम्यहम्
गुणानां हि निधानाय नमस्तेऽस्तु पुनः पुनः ।
कारुण्याम्बुनिधे ! देव ! सर्वभक्तिप्रियाय च ॥ २४ ॥

श्रीभगवानुवाच

तुष्टस्ते दानवेन्द्राहं वरं वृणु यथेप्सितम् । ददामि ते वरं नूनमपि त्रैलोक्यदुर्लभम्

अन्धक उवाच

यदि तुष्टोऽसि मे देव !वरं दास्यसि चेप्सितम् ।
तदा ददस्व मे देव !युद्धं परमशोभनम् ।
त्वद्धस्तपूतो येनाहं लोकान् गन्ताऽस्मि शोभनान् ॥ २६ ॥

श्रीभगवानुवाच

कथंददामितेयुद्धंतोषितोऽहंत्वयापुनः । न त्वांतुप्रभवेत्कोपः कथंयुध्यामितेऽन्धक
यदि ते वर्त्तते बुद्धिर्युद्धं प्रति न संशयः । ततो गच्छस्वयुद्धाय देवं प्रतिमहेश्वरम्

अन्धक उवाच

न तत्र सिद्धयते कार्यं देवं प्रति महेश्वरम् ॥ २९ ॥

श्रीभगवानुवाच

पुत्र त्वं शिखरं गत्वा धूनयस्व बलेन च ॥ ३० ॥

विधूते तत्र देवेशः कोपं कर्त्ता सुदारुणम् । कोपितःशङ्करोरौद्रं युद्धंदास्यतिदानव

विष्णुवाक्यादसौ पापो गतो यत्र महेश्वरः ।

कैलासशिखरं प्राप्य धुनोति स्म मुहुर्मुहुः ॥ ३२ ॥

धूनिते तत्र शिखरे कम्पितंभुवनत्रयम । निपेतुः शिखराग्राणिकम्पमानान्यनेकशः

चत्वारः सागराः क्षिप्रमेकीभूता महीपते । निपेतुरुल्कापाताश्चपादपा अप्यनेकशः

उमया सहितो देवो विस्मयंपरमंगतः । गाढमालिङ्ग्य गिरिजा देवं वचनमब्रवीत्

किमर्थं कम्पते शैलः किमर्थं कम्पतेधरा । किमर्थंकम्पते नागो मर्त्यःपातालमेवच

किं वा युगक्षयो देव तन्ममाख्यातुमर्हसि ॥ ३६ ॥

ईश्वर उवाच

कस्यैषा दुर्मतिर्जाता क्षिप्तः सर्पमुखे करः ।

ललाटे च कृतं वर्म्म स यास्यति यमालयम् ॥ ३७ ॥

कैलासमाश्रितो येन सुप्तोऽहंयेनबोधितः । तं वधिष्येन सन्देहसम्मुखोवाभवेद्यदि

चिन्तयामास देवेशो ह्यन्धकोऽयं न संशयः ।

उपायं चिन्तयामास येनाऽसौ वध्यते क्षणात् ॥ ३९ ॥

आगताश्च सुराःसर्वे ब्रह्माद्याः वसुभिः सह । रथं देवमयं कृत्वा सर्वलक्षणसंयुतम्

केचिद्देवाः स्थिताश्चक्रे केचित्तुण्डाग्रपार्श्वयोः ।

केचिन्नाभ्यां स्थिता देवाः केचिद्धुर्येषु संस्थिताः ॥ ४१ ॥

धुरीषु निश्चलाः केचित्केचिद्यूपेषु संस्थिताः ।

केचित्स्यन्दनसंस्तम्भाः केचित्स्यन्दनवेष्टकाः ॥ ४२ ॥

आमलसारकेऽन्येऽपि अन्येऽपि कलशे स्थिताः ।

रिपोर्भयङ्करं दिव्यं ध्वजमालादिशोभितम् ॥ ४३ ॥

रथंदेवमयं कृत्वा तमारूढो जगद्गुरुः । निर्ययौ दानवो यत्र कोपाविष्टो महेश्व
तिष्ठतिष्ठेत्युवाचाऽथ क्व प्रयास्यसि दुर्मते !। शरासनंकरे गृह्य शरांश्चिक्षेप दान

दानवेऽधिष्ठिते युद्धे शरैश्चिच्छेद सायकान् ।

शरासारेण तत्रैव अन्धकश्छादितस्तदा ॥ ४६ ॥

न तत्रदृश्यतेसूर्यो नाकाशंन च चन्द्रमाः । आग्नेयमस्त्रं व्यसृजद्दानवोऽपिशिवम्प्र
दह्यमानाः शराङ्गारैस्तत्रसुः सर्वदेवताः । रक्षरक्ष महादेव दह्यमानांस्तु दानवा

ततो देवाधिदेवोऽसौ वारुणास्त्रमयोऽजयत् ।

वारुणाऽस्त्रेण निमिषादाग्नेयं नाशितं तदा ॥ ४९ ॥

दानवेन तदामुक्तं वायव्यास्त्रं रणाजिरे । वारुणंचगतंतात वायव्यास्त्रविनाशित
देवो व्यसर्जयत्सार्पं क्रोधाविष्टेनचेतसा । मारुतं नाशितंबाणैःसर्प्पैस्तत्रनसंशय
दानवेन ततोमुक्तं गरुडास्त्रंच लीलया । गारुडास्त्रं च तद्दृष्ट्वा सार्प्पंनैव व्यदृश्यत
ततो देवाधिदेवेशनारसिंहं विसर्जितम् । नारसिंहास्त्रबाणेनगारुडास्त्रं प्रशामितम्
अस्त्रमस्त्रेण शाम्येत न बाध्येत परस्परम् । महद्युद्धमभूत्तात! सुरासुरभयङ्करम्।
चक्रनालीकनाराचैस्तोमरैःखड्गमुद्गरैः । वत्सदन्तैस्तथाभल्लैःकर्णिकारैश्चशोभनै

एवं न शक्यते हन्तुं दानवो विविधायुधैः ।

तदा ज्वालाकरालाश्च खड्गनाराचतोमराः ॥ ५६ ॥

वृषाङ्केन विमुक्तास्तुसमरे दानवम्प्रति । न संस्पृशन्तिशस्त्राणिगात्रंगौडवधूरिवा

आयुधानि ततस्त्यक्त्वा बाहुयुद्धमुपस्थितौ ।

करं करेण संगृह्य प्रहरन्तौ स्वमुष्टिभिः ॥

रणप्रयोगैर्युध्यन्तौ युयुधाते शिवान्धकौ ॥ ५८ ॥

श्रीमार्कण्डेय उवाच

अन्धकं प्रति देवेशश्चिन्तयामास निग्रहम् ।

हनिष्यामि न सन्देहो दुष्टात्मानं न संशयः ॥ ५९ ॥

स शिवेन यदा क्षिप्तः पतितः पृथिवीतले । ऊर्ध्ववाहुरधोवक्त्रो दानवोनृपसत्तम
क्रोधाविष्टेनदेवेशःसंग्रामेदेवशत्रुणा । कक्षयोःकुहरेक्षिप्त्वाबन्धेनाऽऽक्रम्यपीडितः

निस्पन्दश्चाऽभवद्देवो मूर्च्छायुक्तो महेश्वरः ।

मूर्च्छापन्नं तु तं ज्ञात्वा चिन्तयामास दानवः ॥ ६२ ॥

हाहाकष्टं कृतं मेऽद्यदुष्कृतंपापकर्मणा । किंकरोमिकथंकर्मकस्मिन्स्थानेतुमोचये
गृहीत्वादेवमुत्सङ्गेगतः कैलासपर्वतम् । शय्यायांशङ्करंन्यस्यनिर्ययौदैत्यराट्ततः
शय्यायां पतितोदेवं प्रपेदे वेदनांततः । तावद्ददर्श चात्मानं स्वकीयभवनस्थितम्
पराभवः कृतोमह्यं कथं तेन दुरात्मना । क्रोधावेगसमाविष्टो निर्ययौ दानवम्प्रति

आयसीं लगुडीं गृह्य प्रभुर्भारसहस्रजाम् ।

दानवं च ततो दृष्ट्वा प्राक्षिपत्तस्य मूर्द्धनि ॥ ६७ ॥

खड्गेनताडयामास दानवः प्रहसन्रणे । देवेनाथस्मृतं चाऽस्त्रंकौच्छेराख्यंमहाहवे
दीप्यमानंसमुत्सृज्यहृदयेताडितःक्षणात् । ततः स ताडिस्तेन रुधिरोद्गारमुद्वमन्
पतितोऽधोमुखोभूत्वा ततः शूलेन भेदितः । पुनश्च देवदेवेन शूलेन द्विदलीकृतः ॥

शूलाग्रेऽसौ स्थितः पापो भ्रान्तवांश्चक्रवत्तदा ।

ये ये भूम्यां पतन्ति स्म तत्कायाद्रक्तबिन्दवः ॥ ७१ ॥

ते ते सर्वे समुत्तस्थुर्दानवाःशस्त्रपाणयः । व्याकुलस्तुततोदेवो दानवेन तरस्विना

देवेनाऽथ स्मृता दुर्गा चामुण्डा भीषणानना ।

आयाता भीषणाकारा नानायुधविराजिता ॥ ७३ ॥

महादंष्ट्रा महाकाया पिङ्गाक्षी लम्बकर्णिका ।

आदेशो दीयतां देव! को यास्यति यमालयम् ॥ ७४ ॥

ईश्वर उवाच

पिबास्य रुधिरं भद्रे यथेष्टं दानवस्य च । निपतद्रुधिरंभूमौदुर्गेगृह्णीष्व मा चिरम्
निहन्मि दानवंयावत्साहाय्यंकुरुसुन्दरि । एवमुक्ता तु सा दुर्गा पपौचरुधिरंततः
निहतादानवाःसर्वे देवेशेन सहस्रशः । अन्धकोऽपिचतान्दृष्ट्वा दानवानवनिंगतान्

ततो वाग्भिः प्रतुष्टाव देवदेवं महेश्वरम् ॥ ७७ ॥

अन्धक उवाच

जयस्व देवदेवेश उमार्द्धार्द्धशरीरधृक् । नमस्ते देवदेवेश! सर्वाय त्रिगुणात्मने ॥
वृषभासनमारूढ शशाङ्ककृतशेखर !। जयखट्वाङ्गहस्ताय गङ्गाधर नमोऽस्तुते ॥७६
नमो डमरुहस्ताय नमः कपालमालिने । स्मरदेहविनाशाय महेशाय नमोऽस्तु ते
पूष्णोदन्तनिपाताय गणनाथाय ते नमः । जयस्वरूपदेहाय अरूपबहुरूपिणे ॥८१॥
उत्तमाङ्गविनाशाय विरिञ्चेरपिशङ्कर !। श्मशानवासिने नित्यं नित्यंभैरवरूपिणे

त्वं सर्वगोऽसि त्वं कर्त्ता त्वं हर्त्ता नान्य एव च ।
त्वं भूमिस्त्वं दिशश्चैव त्वं गुरुर्भार्गवस्तथा ॥ ८३ ॥

सौरिस्त्वं देवदेवेश भूमिपुत्रस्तथैव च । ऋक्षग्रहादिकं सर्वं यद्दृश्यं तत्त्वमेवच

एवं स्तुतिं तदा कृत्वा देवं प्रति स दानवः ।
संहताभ्यां तु पाणिभ्यां प्रणनाम महेश्वरम् ॥ ८५ ॥

ईश्वर उवाच

साधुसाधुसहासत्त्ववरंयाचस्वदानव । दाताऽहंयाचकस्त्वंहिददामीहयथेप्सितम्

अन्धक उवाच

यदि तुष्टोऽसि देवेश यदिदेयोवरो मम । तदात्मसदृशोऽहं ते कर्त्तव्यो नाऽपरोवरः
भस्मीजटीत्रिनेत्री च त्रिशूलीच चतुर्भुजः । व्याघ्रचर्मोत्तरीयश्च नागयज्ञोपवीतकः

एतदिच्छाम्यहं सर्वं यदि तुष्टो महेश्वर !॥ ८६ ॥

ईश्वर उवाच

ददामितेवरंह्यद्यस्त्वयायाचितोऽनघ । गणेषुमे स्थितःपुत्रभृङ्गीशस्त्वंभविष्यसि

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेऽन्धकवधतद्वरप्रदानवर्णनंनामाष्टचत्वारिंशोऽध्यायः ॥४८॥

---

# एकोनपञ्चाशत्तमोऽध्यायः

## शूलभेदोत्पत्तिमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

अन्धकं तु निहत्याथ देवदेवो महेश्वरः । उमया सहितो रुद्रः कैलासमगमन्नगम् ॥
आगताश्चततोदेवा ब्रह्माद्याश्चसवासवाः । हृष्टास्तुष्टाश्चतेसर्वेप्रणेमुःपार्वतीपतिम्

ईश्वर उवाच

उपाविशन्तु ते सर्वे ये केचन समागताः । निहतो दानवोह्येष गीर्वाणार्थेपितामह
रक्तेन तस्य मे शूलं निर्म्मलं नैव जायते । शुभव्रततपोजप्यरतो ब्रह्मन्मया हतः ॥

कर्तुमिच्छाम्यहं सम्यक्तीर्थयात्रां चतुर्मुख !।
आगच्छन्तु मया सार्द्धं ये यूयमिह सङ्गताः ॥ ५ ॥

इत्युक्त्वादेवदेवेशःप्रभासंप्रतिनिर्ययौ । प्रभासाद्यानितीर्थानि गङ्गासागरमध्यतः
अवगाह्यापिसर्वाणि नैर्मल्यंनाभवन्नृप !। नर्मदायांततो गत्वा देवोदेवैः समन्वितः
उत्तरं दक्षिणं कूलमवागाहत्प्रियव्रतः । गतस्तु दक्षिणे कूले पर्वते भृगुसञ्ज्ञितम् ॥

तत्र स्थित्वा महादेवो देवैः सह महीपते !।
भ्रान्त्वा भ्रान्त्वा चिरं श्रान्तो निर्विण्णो निषसाद ह ॥ ६ ॥
मनोहारि यतः स्थानं सर्वेषां वै दिवौकसाम् ।
तीर्थं विशिष्टं तन्मत्वा स्थितो देवो महेश्वरः ॥ १० ॥
गिरिं विव्याध शूलेन भिन्नं तेन रसातलम् ।
निर्मलं चाऽभवच्छूलं न लेपो दृश्यते क्वचित् ॥ ११ ॥

देवैराह्वानितातत्र महापुण्याच भारती । पर्वतान्निःसृता तत्र महापुण्यासरस्वती
द्वितीयःसङ्गमस्तत्र यथा वेण्यांसितासितः । तत्रब्रह्मास्वयंदेवोब्रह्मेशंलिङ्गमुत्तमम्
संस्थापयामासपुण्यं सर्वदुःखघ्नमुत्तमम् । तस्ययाम्येदिशोभागेस्वयंदेवोजनार्द्दनः

तिष्ठतेचसदातत्र विष्णुपादाग्रसंस्थिता ।अम्भसोनभवेन्मार्गःकुण्डमध्यस्थितस्य
शूलाग्रेण कृता रेखा ततस्तोयं वहेन्नृप !। तत्तोयं च गतं तत्र यत्र रेवा महानदी
जललिङ्गं महापुण्यं चक्रतीर्थं नृपोत्तम !।
शूलभेदे च देवेशः स्नानं कुर्याद्यथाविधि ॥ १७ ॥
आत्मानंमन्यतेशुद्धं न किञ्चित्कल्मषंकृतम् । तस्यैवोत्तरकाष्ठायांदेवदेवोजगद्गुरुः
आत्मना देवदेवेशः शूलपाणिः प्रतिष्ठितः ।
सर्वतीर्थेषु तत्तीर्थं सर्वदेवमयं परम् ॥ १९ ॥
सर्वपापहरं पुण्यं सर्वदुःखघ्नमुत्तमम् । तत्र तीर्थे प्रतिष्ठाप्य देवदेवं जगद्गुरुः॥
रक्षापालांस्ततो मुक्त्वा शतं चाष्टविनायकान् ।
क्षेत्रपालाः शतं साष्टं तद्रक्षन्ति प्रयत्नतः ॥ २१ ॥
विघ्नास्तस्योपजायन्ते यस्तत्र स्थातुमिच्छति ।
केचित्कुटुम्बचिन्तासु व्यग्राः केचित्कृषीषु च ॥ २२ ॥
केचित्सभांप्रकुर्वन्तिकेचिद्द्रव्यार्जनेरताः। परोक्षवादंकुर्वन्तिकेऽपिहिंसारताःसदा
परदारताः केचित्केचिद्वृत्तिविहिंसकाः । अन्ये केचिद्वदन्त्येवं कथंतीर्थेषु गम्यते
क्षुधया पीड्यते भार्या पुत्रभृत्यादयस्तदा । मोहजालेषुयोज्यन्ते एवं देवगणैर्नराः
पापाचाराश्चयेमर्त्त्या स्नानं तेषां न जायते। संरक्षन्तिचतत्तीर्थंदेवभृत्यगणाःसदा
धन्याःपुण्याश्चयेमर्त्त्यास्तेषांस्नानंप्रजायते । सरस्वत्याभोगवत्यादेवनद्याविशेषतः
अयं तु सङ्गमः पुण्यो यथा वेण्यां सितासितः ।
दृष्ट्वा तीर्थं तु ते सर्वे गीर्वाणा हृष्टचेतसः॥ २८ ॥
देवस्य सन्निधौभूत्वा वर्णयामासुरुत्तमम् । इदं तीर्थं तु देवेश गयातीर्थेनते समम्
गुह्याद्गुह्यतमंतीर्थं न भूतं न भविष्यति । शूलपाणिःसमभ्यर्च्यइन्द्राद्यैरप्सरोगणैः
यक्षकिन्नरगन्धर्वैर्दिक्पालैर्लोकपैरपि । नृत्यगीतैस्तथा स्तोत्रैःसर्वैश्चापि सुरासुरैः
पूज्यमानो गणैः सर्वैः सिद्धैर्नागैर्महेश्वरः । देवेन भेदितं तत्र शूलाग्रेण नराधिप!॥
त्रिधा यत्रेक्ष्यतेऽद्यापि ह्यावर्त्तः सुरपूरितः ।

कुण्डत्रयं नरव्याघ्र! महत्कलकलान्वितम् ॥ ३३ ॥
सर्वपापक्षयकरं सर्वदुःखघ्नमुत्तमम् । तत्र तीर्थे तु यः स्नाति उपवासपरायणः ॥
दीक्षामन्त्रविहीनोऽपि मुच्यते चाब्दिकादघात् ।
ये पुनर्विधिवत्स्नान्ति मन्त्रैः पञ्चभिरेव च ॥ ३५ ॥
वेदोक्तैः पञ्चभिर्मन्त्रैः सहिरण्यघटैः शुभैः । अक्षरैर्दशभिश्चैव षड्भिर्वात्रिभिरेव वा
पृथग्भूतैर्द्विजातीनां तीर्थे कार्यं नराधिप !।
ब्रह्मक्षत्त्रविशां वाऽपि स्त्रीशूद्राणां तथैव च ॥ ३७ ॥
पुरुषाणां त्रयीं ध्यात्वा स्नानं कुर्याद्यथाविधि ।
दशाक्षरेण मन्त्रेण ये पिबन्ति जलं नराः ॥ ३८ ॥
ते गच्छन्ति परंलोकं यत्र देवोमहेश्वरः । केदारे च यथा पीतं रुद्रकुण्डे तथैव च ॥
पञ्चरेफसमायुक्तं क्षकारं सुरपूजितम् । ॐकारेण समायुक्तमेतद्धेयं प्रकीर्तितम् ॥
यस्तत्र कुरुते स्नानं विधियुक्तो जितेन्द्रियः । तिलमिश्रेणतोयेन तर्पयेत्पितृदेवताः
कुलानां तारयेद्विंशं दशपूर्वान्दशापरान् । गयादिपञ्चस्थानेषु यः श्राद्धं कुरुते नरः
स तत्र फलमाप्नोति शूलभेदे न संशयः ।
यस्तत्र विधिना युक्तो दद्याद्दानानि भक्तितः ॥ ४३ ॥
तदक्षयं फलंतत्र सुकृतं दुष्कृतं तथा । गयाशिरो यथा पुण्यं पितृकार्येषु सर्वदा
शूलभेदं तथा पुण्यं स्नानादानादितर्पणैः ।
भक्त्या ददाति यस्तत्र काञ्चनं गां महीं तिलान् ॥ ४५ ॥
आसनोपानहौ शय्यां वराश्वान्क्षत्रियस्तथा ।
वस्त्रयुग्मं च धान्यं च गृहं पूर्णं प्रयत्नतः ॥ ४६ ॥
स योक्त्रं लाङ्गलं दद्यात्कृष्टां चैव वसुन्धराम् ॥
दानान्येतानि यो दद्याद् ब्राह्मणे वेदपारगे ॥ ४७ ॥
श्रोत्रिये कुलसम्पन्ने शुचिष्मति जितेन्द्रिये ।
श्रुताध्ययनसम्पन्ने दम्भहीने क्रियान्विते ।

त्रयोदशाहःस्वेकैकं त्रयोदशगुणं भवेत् ॥ ४८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शूलभेदोत्पत्तिमाहात्म्यवर्णनंनामै-कोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

## पञ्चाशत्तमोऽध्यायः

### पात्रापात्रपरीक्षादानादिनियमवर्णनम्

उत्तानपाद उवाच

द्विजाश्च कीदृशाः पूज्या अपूज्याः कीदृशाः स्मृताः ।
श्राद्धे वैवाहिके कार्ये दाने चैव विशेषतः ॥ १ ॥
यदि श्रद्धा भवेद्दैवयोगाच्छ्राद्धादिके विधौ ।
एतदाख्याहि मे देव! कस्य दानं न दीयते ॥ २ ॥

ईश्वर उवाच

यथाकाष्ठमयोहस्ती यथाचर्ममयोमृगः । ब्राह्मणश्चानधीयानस्त्रयस्तेनामधारकाः
यथा षण्ढोऽफलः स्त्रिषु यथा गौर्गवि चाफला ।
यथाचाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥ ४ ॥
यथाऽनृणेबीजमुप्त्वावमानलभते फलम् । तथाऽनृचेहविर्दत्त्वानदातालभते फलम्
रोगी हीनाऽतिरिक्ताङ्गः काणःपौनर्भवस्तथा ।
अवकीर्णी श्यावदन्तः सर्वाशी वृषलीपतिः ॥ ६ ॥
मित्रध्रुक्पिशुनःसोमविक्रयीपरनिन्दकः । पितृमातृगुरुत्यागीनित्यंब्राह्मणनिन्दकः
शूद्रान्नं मन्त्रसंयुक्तं यो विप्रो भक्षयेन्नृप !।
सोऽस्पृश्यः कर्मचाण्डालः स्पृष्ट्वा स्नानं समाचरेत् ॥ ८ ॥

कुनखीवृषली स्तेयी वार्द्धुष्यःकुण्डगोलकौ। महादानरतोयश्च यश्चात्महननेरतः
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः।
एते विप्राः सदा त्याज्याः परिभाव्य प्रयत्नतः॥ १० ॥
प्रतिग्रहं गृहीत्वा तु वाणिज्यं यस्तु कारयेत्।
तस्य दानं न दातव्यं वृथा भवति तस्य तत्॥ ११ ॥
श्रुताऽध्ययनसम्पन्ना ये द्विजावृत्ततत्पराः। तेषां यद्दीयते दानं सर्वमक्षयताम्व्रजेत्
दरिद्रान्भरभूपालमासमृद्धान्कदाचन। व्याधितस्यौषधंपथ्यं नीरुजस्यकिमोषधैः

उत्तानपाद उवाच

कीदृशोऽथ विधिस्तत्र तीर्थश्राद्धस्य का क्रिया।
दानं च दीयते यद्वत्तन्ममाख्याहि शङ्कर!॥ १४ ॥

ईश्वर उवाच

श्राद्धं कृत्वा गृहे भक्त्या शुचिश्चाऽपि जितेन्द्रियः।
गुरुं प्रदक्षिणीकृत्य भोज्य सीमान्तके ततः॥ १५ ॥
वाग्यतः प्रव्रजेतावद्यावत्सीमांनलङ्घयेत्। शूलभेदंततोगत्वास्नानं कुर्याद्यथाविधि
पञ्चस्थानेषु च श्राद्धं हव्यकव्यादिभिः क्रमात्।
पिण्डदानञ्च यः कुर्यात्पायसैर्मधुसर्पिषा॥ १७ ॥
पितरस्तस्य तृप्यन्ति द्वादशाब्दानिपञ्च च। अक्षतैर्बदरैबिल्वैरिङ्गुदैर्मधुसर्पिषा॥
सोऽपि तत्फलमाप्नोति तीर्थेऽस्मिन्नाऽत्र संशयः।
उपानहौ च यो दद्याद्ब्राह्मणेभ्यः प्रयत्नतः॥ १६ ॥
सोऽपि स्वर्गमवाप्नोति हयारूढो न संशयः।
शय्यामश्वं च यो दद्याच्छत्रिकां वा विशेषतः॥ २० ॥
गच्छेद्विमानमारूढः सोऽप्सरोवृन्दवेष्टितः। उत्तमंयोगृहंदद्यात्सप्तधान्यसमन्वितम्
स्वेच्छयामेवसेल्लोकेकाञ्चनेभवनेहिसः। तिलधेनुञ्चयो दद्यात्सवत्सांवस्त्रसंप्लुताम्
नाकपृष्ठेवसेत्तावद्यावदाभूतसम्प्लवम्। गृहे वा यदि वाऽरण्येतीर्थवर्त्मनिवानृप

तोयमन्नं च यो दद्याद्यमलोकं स नेक्षते। सर्वदानानि दीयन्ते तेषां फलमवाप्यते
उदकं चान्नदानं च दद्यादभयमेव च। अन्नदानात्परं दानं न भूतं न भविष्यति॥

कन्यादानं तु यः कुर्याद् वृषं वा यः समुत्सृजेत्।
तस्य वासो भवेत्तत्र यत्राऽहमिति नान्यथा॥ २६॥

उत्तानपाद उवाच

कन्यादानं कथं स्वामिन्कर्त्तव्यं धार्मिकैः सदा।
परिग्रहो यथा पोष्यः कन्योद्वाहस्तथैव च॥ २७॥
अन्यत्पृच्छामि देवेश! कस्य कन्या न दीयते।
दातव्यं कुत्र तद्देव! कस्मै दत्तमथाऽक्षयम्॥ २८॥
उत्तम मध्यमं वाऽपि कनीयः स्यात्कथं विभो!।
राजसं तामसं वाऽपि निःश्रेयसमथाऽपि वा॥ २९॥

ईश्वर उवाच

सर्वेषामेव दानानां कन्यादानं विशिष्यते।
यो दद्यात्परया भक्त्याऽभिगम्य तनयां निजाम्॥ ३०॥
कुलीनायसुरूपाय गुणज्ञायमनीषिणे। सुलग्ने सुमुहूर्ते च दद्यात्कन्यामलङ्कृताम्
अश्वान्नागांश्च वासांसि योऽत्र दद्यात्स्वशक्तितः।
तस्य वासो भवेत्तत्र पदं यत्र निरामयम्॥ ३२॥
येनाऽत्रदुहितादत्ता प्राणेभ्योऽपि गरीयसी। तेनसर्वमिदंदत्तंत्रैलोक्यंसचराचरम्
यः कन्यार्थं ततो लब्ध्वा भिक्षते चैव तद्धनम्।
सभवेत्कर्मचण्डालः काष्ठकीलो भवेन्मृतः॥ ३४॥
गृहेऽपि तस्य योऽश्नीयाज्जिह्वालौल्यात्कथञ्चन।
चान्द्रायणेन शुद्ध्येत तप्तकृच्छ्रेण वा पुनः॥ ३५॥

उत्तानपाद उवाच

वित्तं न विद्यते यस्यकन्यैवास्तिच यद्गृहे। कथंचोद्वाहनंतस्यतनयायाःकुरुतेयदि

ईश्वर उवाच

अवित्तेनैव कर्त्तव्यं कन्योद्वहनकं नृप !। कन्यानाम समुच्चार्य न दोषाय कदाचन॥

अभिगम्योत्तमं दानं यच्च दानमयाचितम् ।
भविष्यति युगस्यान्तस्तस्यान्तो नैव विद्यते ॥ ३८ ॥
अभिगम्योत्तमं दानं स्मृतमाहूय मध्यमम् ।
याच्यमानं कनीयः स्याद्देहिदेहीति चाधमम् ॥ ३६ ॥
यथैवाऽश्माऽश्मना बद्धो निक्षिप्तो वारिमध्यतः ।
द्वावेतौ निधनं यातस्तद्वदन्नमपात्रके ॥ ४० ॥

असमर्थे ततो दानं न प्रदेयं कदाचन । दातारं नयतेऽधस्तादात्मानञ्च विशेषतः ॥

समर्थस्तारयेद् द्वौ तु काष्ठं शुष्कं यथा जले ।
यथा नौश्च तथा विद्वान्प्रापयेदपरं तटम् ॥ ४२ ॥
आहिताग्निश्च गृह्णाति यः शूद्राणां प्रतिग्रहम् ।
इह जन्मनि शूद्रोऽसौ मृतः श्वा चोपजायते ॥ ४३ ॥

वृथा क्लेशश्चजायेत ब्राह्मणे ह्यग्निहोत्रिणि । असत्प्रतिग्रहंकुर्वन्गुप्तंनीचस्यगर्हितम्

अभोज्यः स भवेन्मर्त्यो दह्यते कारिषाऽग्निना ।
कटकारो भवेत्पश्चात्सप्तजन्म न संशयः ४५
लज्जादाक्षिण्यलोभाच्च यद्दानं चोपरोधजम् ।
भृत्येभ्यश्च तु यद्दानं तद्वृथा निष्फलं भवेत् ॥ ४६ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शूलभेदमाहात्म्ये पात्रापात्रपरीक्षादानादिनिर्णयवर्णनं
नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

# एकपञ्चाशत्तमोऽध्यायः

## दानधर्मप्रशंसनवर्णनम्

उत्तानपाद उवाच

काले तत्क्रियतेकस्मिञ्छ्राद्धं दानं तथेश्वर !।
यात्रा तत्र प्रकर्त्तव्या तिथौ यस्यां वदाऽऽशु तत् ॥ १ ॥

ईश्वर उवाच

पितृतीर्थंयथापुण्यं सर्वकामिकमुत्तमम् । इदं तीर्थंतथापुण्यं स्नानदानादितर्प
विशेषेण तु कुर्वीत श्राद्धं सर्वयुगादिषु । मन्वन्तराद्योवत्स श्रूयन्तां च चतु
अश्वयुक्छुक्लनवमी द्वादशीकार्त्तिकस्यच । तृतीया चैत्रमासस्यतथाभाद्रपदस्य

आषाढस्यैव दशमी माघस्यैव तु सप्तमी ।
श्रावणस्याऽष्टमी कृष्णा तथाऽऽषाढस्य पूर्णिमा ॥ ५ ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ॥ ६ ॥

मन्वन्तरादयश्चैते अनन्तफलदाः स्मृताः । अयनेचोत्तरे राजन्दक्षिणे श्राद्धमाघ

कार्त्तिकी च तथा माघी वैशाखस्य तृतीयिका ।
पौर्णमासी च चैत्रस्य ज्येष्ठस्य च विशेषतः ॥ ८ ॥

अष्टकासुचसंक्रान्तौ व्यतीपाते तथैव च । श्राद्धकाला इमेसर्वेदत्तमेष्वक्षयंस्मृत
मधुमासे सितेपक्ष एकादश्यामुपोषितः । निशि जागरणं कुर्याद्विष्णुपादसमी

धूपदीपादिनैवेद्यैः स्रङ्मालागुरुचन्दनैः ।
अर्चां कुर्वन्ति ये विष्णुः पठेयुःप्राक्तनीं कथाम् ॥ ११ ॥
ऋग्यजुः साममन्त्रोक्तं सूक्तं जपति यो द्विजः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १२ ॥

प्रातः श्राद्धं प्रकुर्वीत द्विजान्सम्पूज्य यत्नतः ।
दानं दद्याद्यथाशक्ति गोहिरण्याम्बरादिकम् ॥ १३ ॥
पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् । श्राद्धदस्तुव्रजेत्तत्रयत्रदेवो जनार्द्दनः
त्रयोदश्यां ततो गच्छेद् गुहावासिनि लिङ्गके ।
दृष्ट्वा मार्कण्डमीशानं मुच्यते सर्वपातकैः ॥ १५ ॥

उत्तानपाद उवाच

गुहामध्ये महादेव लिङ्गं परमशोभितम् । येन प्रतिष्ठितं देव! तन्ममाख्यातुमर्हसि

ईश्वर उवाच

त्रिषु लोकेषु विख्यातो मार्कण्डेयो मुनीश्वरः ।
दिव्यं वर्ष सहस्रं स तपस्तेपे सुदारुणम् ॥ १७ ॥
गुहामध्यं प्रविष्टोऽसौ योगाभ्यासमुपाश्रितः ।
लिङ्गं तु स्थापितं तेन मार्कण्डेश्वरसञ्ज्ञितम् ॥ १८ ॥
तत्र स्नात्वा च यो भक्त्या सोपवासो जितेन्द्रियः ।
तत्र जागरणं कुर्वन्दद्याद्दीपं प्रयत्नतः ॥ १९ ॥
देवस्यस्नपनंकुर्यादमृतैःपञ्चभिस्तथा । यथाशक्त्यासमालभ्य पूजांकुर्याद्यथाविधि
स्वशाखोत्पन्नमन्त्रैश्च जपंकुर्युर्द्विजातयः । सावित्र्यष्टसहस्रन्तुशताष्टकमथापि वा
एतत्कृत्वा नृपश्रेष्ठ! जन्मनः फलमाप्नुयात् ।
चतुर्दश्यां तु वै स्नात्वा पूजां कृत्वा यथाविधि ॥ २२ ॥
पात्रं परीक्ष्य दातव्यमात्मनः श्रेयइच्छता ।
पितरस्तस्यतृप्यन्ति द्वादशाब्दान्यसंशयम् ॥ २३ ॥
दाता स गच्छते तत्र यत्र भोगाः सनातनाः ।
गुहामध्ये प्रविष्टस्तु लोटयेच्चैव शक्तितः ॥ २४ ॥
नीले गिरौ हि यत्पुण्यं तत्समस्तं लभन्ति ते ।
शूलभेदे तु यः कुर्याच्छ्राद्धं पर्वणि पर्वणि ॥ २५ ॥

विशेषाच्चैत्रमासान्ते तस्य पुण्यफलं शृणु । केदारेचैवयत्पुण्यं गङ्गासागरस

सितासिते तु यत्पुण्यमन्यतीर्थे विशेषतः । अर्बुदे विद्यते पुण्यं पुण्यं चामरक

गयादिसर्वतीर्थानां फलमाप्नोति मानवः । विधिमन्त्रसमायुक्तस्तर्पयेत्पितृदेव

कुलानां तारयेद्विंशं दशपूर्वान्दशापरान् ।

दक्षिणस्यां ततो मूर्त्तौ शुचिर्भूत्वा समाहितः ॥ २९ ॥

न्यासं कृत्वा तु पूर्वोक्तं प्रदद्यादष्टपुष्पिकाम् ।

शास्त्रोक्तैरष्टभिः पुष्पैर्मानसैः शृणु तद्यथा ॥ ३० ॥

वारिजं सौम्यमाग्नेयं वायव्यं पार्थिवं पुनः ।

वानस्पत्यं भवेत्षष्ठं प्राजापत्यं तु सप्तमम् ॥ ३१ ॥

अष्टमंशिवपुष्पं स्यादेषां शृणु विनिर्णयम् । वारिजंसलिलं ज्ञेयं सौम्यंमधुघृतप

आग्नेयं धूपदीपाद्यं वायव्यं चन्दनादिकम् ।

पार्थिवं कन्दमूलाद्यं वानस्पत्यं फलात्मकम् ॥ ३३ ॥

प्राजापत्यं तु पाठाद्यं शिवपुष्पं तु वासना । अहिंसाप्रथमंपुष्पंपुष्पमिन्द्रियनिग्र

तृतीयं तु दयापुष्पं क्षमापुष्पं चतुर्थकम् । ध्यानपुष्पंतपःपुष्पं ज्ञानपुष्पंतुसप्त

सत्यञ्चैवाष्टमं पुष्पमेभिस्तुष्यन्ति देवताः ।

भक्त्या तपस्विनः पूज्या ज्ञानिनश्च नराधिप !॥ ३६ ॥

छत्रमावरणं दद्यादुपानद्युगलं तथा । तेन पूजितमात्रेण पूजिताः पुरुषास्त्र

स्वर्गलोकेवसेत्तावद्यावदाभूतसंप्लवम् । शूलपाणेस्तुभक्त्यावैजाप्यंकुर्वन्तियेन

पञ्चामृतैः पञ्चगव्यैर्यक्षकर्दमकुङ्कुमैः । समालभेत देवेशं श्रीखण्डागुरुचन्दनैः ॥

नानाविधैश्च ये पुष्पैरर्चां कुर्वन्ति शूलिनः । निशिजागरणं कुर्युर्दीपदानंप्रयत्न

धूपनैवेद्यकं दद्यात्पठेत्पौराणिकीं कथाम् ।

तत्र स्थाने स्थिता भक्त्या जपं कुर्वन्ति ये नराः ॥ ४१ ॥

श्रीसूक्तंपौरुषं सूक्तंपावमानंवृषाकपिम् । वेदोक्तैश्चैवमन्त्रैश्च रौद्रींवाबहुरूपिण

ब्राह्मणान्पूजयेद्भक्त्यापूजयित्वाप्रणम्य च । नानाविधैर्महाभोगैःशिवलोकेमहीय

अग्निमीत्यादिजाप्यानि ऋग्वेदी जपते तु यः ।
रुद्रान्पुरुषसूक्तञ्च श्लोकाध्यायं च शुक्रियम् ॥ ४४ ॥
इषेत्वादिकमन्त्रौघं ज्योतिर्ब्राह्मणमेव च ।
गायत्र्यं वै मधु चैव मण्डलब्राह्मणानि च ॥ ४५ ॥
एताञ्जप्यांस्तु यो भक्त्या यजुर्वेदीजपेद्यदि । देवव्रतं वामदेव्यं पुरुषर्भमेव च ॥
बृहद्रथन्तरञ्चैव यो जपेद्भक्तितत्परः । स प्रयाति नरः स्थानं यत्र देवो महेश्वरः ॥
पादशौचं तथाऽभ्यङ्गं कुरुते योऽत्र भक्तितः ।
गोदाने चैव यत्पुण्यं लभते नाऽत्र संशयः ॥ ४८ ॥
ब्राह्मणान्भोजयेत्तत्रमधुनापायसेनच । एकस्मिन्भोजितेविप्रेकोटिर्भवतिभोजिता
सुवर्णं रजतं वस्त्रं दद्याद्भक्त्या द्विजोत्तमे ।
तर्पितास्तेन देवाः स्युर्मनुष्याः पितरस्तथा ॥ ५० ॥
चन्द्रसूर्यग्रहे भक्त्या स्नानं कुर्वन्ति ये नराः । देवार्चनञ्चयेकुर्युर्जपंहोमं विशेषतः
दद्याद्दानं यथाशक्ति ब्राह्मणे वेदपारगे ॥ ५१ ॥
अश्वं रथं गजं यानं तुलापुरुषमेव च । शकटं यः प्रदद्याद्वा सप्तधान्यप्रपूरितम् ॥५२
सयोक्त्रं लाङ्गलं दद्याद्युवानौ तु धुरन्धरौ ।
गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ॥ ५३ ॥
अपात्रे विदुषा किञ्चिन्न देयं भूतिमिच्छता ।
यतोऽसौ सर्वभूतानि दधाति धरणी किल ॥ ५४ ॥
ततो विप्राय सा देया सर्वसस्यौघमालिनी ।
अथाऽन्यच्छृणु राजेन्द्र! गोदानस्य तु यत्फलम् ॥ ५५ ॥
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां प्रदृश्यते ।
तावद्गौ पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ ५६ ॥
येन केनाप्युपायेन ब्राह्मणे तां समर्पयेत् । पृथ्वी दत्ता भवेत्तेन सशैलवनकानना ॥
तारयेन्नियतं दत्त्वा कुलानामेकविंशतिम् ।

रौप्यखुरीं कांस्यदोहां सवस्त्रां च पयस्विनीम् ॥ ५८ ॥
ये प्रयच्छन्ति कृतिनो ग्रस्ते सूर्ये निशाकरे ।
तेषां सङ्ख्यां न जानामि पुण्यस्याब्दशतैरपि ॥ ५९ ॥
सर्वस्याऽपि हि दानस्य सङ्ख्याऽस्तीह नराधिप !।
चन्द्रसूर्योपरागे च दानसङ्ख्या न विद्यते ॥ ६० ॥
यत्रगौर्दृश्यतेराजन्त्सर्वतीर्थानितत्रहि । तत्रपर्वविजानीयान्नाऽत्रकार्याविचार
पुनः स्मृत्वा तु तत्तीर्थं यः कुर्याद्गमनं नरः ।
अथवा म्रियते योऽत्र रुद्रस्याऽनुचरो भवेत् ॥ ६२ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शूलभेदे दानधर्मप्रशंसावर्णनंनामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

———

## द्विपञ्चाशत्तमोऽध्यायः

### ऋक्षशृङ्गचरित्रेदीर्घतपोमुन्याख्यानवर्णनम्

ईश्वर उवाच

अन्यदाख्यानकं वक्ष्ये पुरावृत्तं नराधिप! । सकुटुम्बोगतःस्वर्गं मुनिर्यत्रमहात

उत्तानपाद उवाच

कथं नाकं गतो विप्रः सकुटुम्बो महानृषिः । कौतुकं परमं देव कथयस्वमम प्र

ईश्वर उवाच

चित्रसेनइति ख्यातः काशीराजः पुराऽभवत् ।
शूरो दाता सुधर्मात्मा सर्वकामसमृद्धिमान् ॥ ३ ॥
सा पुरी जनसङ्कीर्णा नानारत्नोपशोभिता ।
वाराणसीति विख्याता गङ्गातीरमुपाश्रिता ॥ ४ ॥

शरच्चन्द्रप्रतीकाशा विद्वज्जनविभूषिता । इन्द्रयष्टिसमाकीर्णा गोपगोकुलसम्वृता
बहुध्वजसमाकीर्णा वेदध्वनिनिनादिता । वणिग्जनैर्बहुविधैः क्रयविक्रयशालिनी

यन्त्राऽऽदानैः प्रतोलीभिरुच्चैश्चान्यैः सुशोभिता ।

देवतायतनैर्दिव्यैराश्रमैर्गहनैर्युता ॥ ७ ॥

नानापुष्पफलै रम्या कदलीखण्डमण्डिता । पनसैर्बकुलैस्तालैरशोकैराम्रकैस्तथा
राजवृक्षकपित्थैश्च दाडिमैरुपशोभिता । वेदाध्ययननिर्घोषैः पवित्रीकृतमङ्गला ॥
तस्याउत्तरदिग्भागेआश्रमोऽभूत्सुशोभनः । तन्मन्दारवनंनाम त्रिषुलोकेषुविश्रुतम्
बहुमन्दारसंयुक्तं तेन मन्दारकं विदुः । विप्रो दीर्घतपानाम सर्वदा तत्र तिष्ठति ॥

तपस्तपति सोऽत्यर्थं तेन दीर्घतपाः स्मृतः ।

स तिष्ठति सपत्नीकः ससुतः सस्नुषः तथा ॥ १२ ॥

शुश्रूषन्ति सदातस्यपुत्राः पञ्च प्रयत्नतः । तस्यपुत्रःकनीयांस्तुऋक्षशृङ्गोमहातपाः

वेदाऽध्ययनसम्पन्नो ब्रह्मचारी गुणान्वितः ।

योगाभ्यासरतो नित्यं कन्दमूलफलाशनः ॥ १४ ॥

तिष्ठतेमृगरूपेण मृगयूथचरस्तदा । दिनान्ते च दिनान्ते च मातापित्रोः समीपगः
अभिवादयते नित्यं भक्तिमान्मुनिपुत्रकः । पुनर्गच्छति तत्रैव कानने गिरिगह्वरे ॥
क्रीडन्बालमृगैः सार्द्धं प्रत्यहं स मुनेः सुतः । कदाचिद्दैवयोगेनऋक्षशृङ्गो ममारसः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शूलभेदमाहात्म्ये ऋक्षशृङ्गचरित्रे दीर्घतपोमुन्याख्यानवर्णनं
नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

# त्रिपञ्चाशत्तमोऽध्यायः

## ऋक्षशृङ्गस्वर्गगमनवर्णनम्

उत्तानपाद उवाच

आश्रमेवसतस्तस्य स दीर्घतपसो मुनेः । कनीयांस्तनयो देव कथं मृत्युमुपागत

ईश्वर उवाच

शृणुष्वैकमनाभूत्वाकथां दिव्यांमहीपते ! । श्रवणादेवयस्यास्तुमुच्यतेसर्वकिल्बि

काशीराजोमहावीर्यो महाबलपराक्रमः । चित्रसेन इतिख्यातो धरण्यांसनराधि

तस्य राज्ये सदा धर्मो नाऽधर्मो विद्यते क्वचित् ।
वेदधर्म्मरतो नित्यं प्रजा धर्मेण पालयन् ॥ ४ ॥

स्वधर्मनिरतश्चैवयुद्धातिथ्यप्रियःसदा । क्षत्रधर्मंसमाश्रित्यभोगान्भुङ्क्तेसकामत

कोशस्यान्तो न विद्येत हस्त्यश्वरथपत्तिमान् ।
इतिहासपुराणज्ञैः पण्डितैः सह सङ्कथाम् ॥ ६ ॥

कथयन्राजते राजा कैलास इव शङ्करः । एवं सपालयन्राज्यं राजामन्त्रिणमब्रवीत्

मृगयायां गमिष्यामि तिष्ठध्वं राज्यपालने ।
गम्यतां सचिवैः प्रोक्ते गतोऽसौ वसुधाधिपः ॥ ८ ॥
अश्वारूढाश्च धावन्तो राजानो मण्डलाधिपाः ।
छत्रैश्छत्राणि घृष्यन्तोऽनुजग्मुः काननम्प्रति ॥ ९ ॥
रजस्तत्रोत्थितं भौमं गजवाजिपदाहयम् ।
तेनैतच्छादितं सर्व्वं सदिङ्मार्त्तण्डमण्डलम् ॥ १० ॥
न तत्र दृश्यते सूर्यो न काष्ठा न च चन्द्रमाः ।
पादपाश्च न दृश्यन्ते गिरिशृङ्गाणि सर्वतः ॥ ११ ॥

परस्परं न पश्यन्ति निशार्द्धेवार्षिके यथा । तत्राऽसौसुमहद्यूथं मृगाणांसमलक्ष्यत

अथावत्सहितःसर्वैःसराजाराजपुत्रकैः । वृन्दास्फोटोऽभवत्तेषांशीघ्रंजग्मुर्दिशोदश
एकमार्गगतो राजा चित्रसेनोमहीपतिः । एकाकीसगतस्तत्रयत्रयत्र च ते मृगाः

प्रविष्टोऽसौ ततो दुर्गं काननं गिरिगह्वरम् ।
वल्लीगुल्मसमाकीर्णं स्थितो यत्र न लक्ष्यते ॥ १५ ॥
अदृश्यांस्तु मृगान्मत्वा दिशो राजा व्यलोकयत् ।
कां दिशं नु गमिष्यामि क मे सैन्यसमागमः ॥ १६ ॥

एवंकष्टं गतो राजाचित्रसेनोनराधिपः । वृक्षच्छायांसमाश्रित्य विश्राममकरोन्नृपः
क्षुत्तृषार्त्तोभ्रमन्दुर्गेकाननेगिरिगह्वरे । ततोऽपश्यत्सरो दिव्यंपद्मिनीखण्डमण्डितम्

हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
ततो दृष्ट्वा स राजेन्द्रः सम्प्रहृष्टतनूरुहः ॥ १९ ॥

कमलानिगृहीत्वातुततःस्नानंसमाचरत् ।तर्पयित्वापितृन्देवान्मनुष्यांश्चयथाविधि
आच्छाद्यशतपत्रैश्च पूजयामासशङ्करम् । ययौ पानीयममलं यथावत्स समाहितः
उत्तीर्य सलिलात्तीरे दृष्ट्वा वृक्षं समीपगम् । उत्तरीयमधः कृत्वोपविष्टो धरणीतले

चिन्तयन्नुपविष्टोऽसौ किमद्य प्रकरोम्यहम् ।
तत्राऽऽसीनो ददर्शाऽथ वनोद्देशे मृगान्बहून् ॥ २३ ॥
केचित्पूर्वमुखास्तत्र चाऽपरे दक्षिणामुखाः ।
वारुण्यभिमुखाः केचित्केचित्कौबेरदिङ्मुखाः ॥ २४ ॥
केचिन्निद्रापराः केचिदूर्ध्वकर्णाः स्थिताः परे ।
मृगमध्ये स्थितो योगी ऋक्षशृङ्गो महातपाः ॥ २५ ॥

मृगान्दृष्ट्वा ततोराजाआहारार्थमचिन्तयत् । हत्वातेषुमृगंकञ्चिद्भक्षयामियदृच्छया

स्वस्थावस्थो भविष्यामि मृगमांसस्य भक्षणात् ।
काशीं प्रति गमिष्यामि मार्गमन्विष्य यत्नतः ॥ २७ ॥

विचिन्त्यैवं ततो राजा वृक्षमूलमुपाश्रितः । चापंगृह्यकराग्रेण स शरं सन्दधे ततः
विचिक्षेप शरं तत्र यत्र ते बहवो मृगाः । तेषांमध्येस वैविद्ध ऋक्षशृङ्गोमहातपाः

जग्मुस्त्रस्तास्तु ते सर्वे शब्दं कृत्वा वनौकसः ।
स ऋषिः पतितस्तत्र कृष्णकृष्णेति चाब्रवीत् ॥ ३० ॥
हाहा कष्टं कृतं तेन येनाहंघातितोऽधुना । कस्यैषा दुर्मतिर्जाता पापबुद्धेर्ममोपरि
मृगमध्ये स्थितश्चाऽहं न कञ्चिदुपरोधये ।
तां वाचं मानुषीं श्रुत्वा स राजा विस्मयान्वितः ॥ ३२ ॥
शीघ्रं गत्वा ततोऽपश्यद्ब्राह्मणं ब्रह्मतेजसा ।
हाहा कष्टं कृतं मेऽद्य येनाऽसौ घातितो द्विजः ॥ ३३ ॥

चित्रसेन उवाच

अकामाद्घातितस्त्वं तु मृगभ्रान्त्या मयाऽनघ !।
गृहीत्वा बहुदारूणि स्वतनुं दाहयाम्यहम् ॥ ३४ ॥
दृष्टादृष्टन्तु यत्किञ्चिन्न समंब्रह्महत्यया । अन्यथा ब्रह्महत्यायाः शुद्धिर्मेनभविष्यति

ऋक्षशृङ्ग उवाच

न ते सिद्धिर्भवेत्काचिन्मयि पञ्चत्वमागते ।
बह्वयो हत्या भविष्यन्ति विनाशे मम साम्प्रतम् ॥ ३६ ॥
जननी मे पिता वृद्धो भ्रातरश्चतपस्विनः । भ्रातृजायामरिष्यन्तिमयिपञ्चत्वमागते
एताहत्या भविष्यन्ति कथंशुद्धिर्भवेत्तव । उपायं कथयिष्यामि तं कर्तुंयदिमन्यसे

चित्रसेन उवाच

उपायः कथ्यतांमेऽद्य यस्ते मनसि वर्त्तते । करिष्ये तमहंसर्वं यत्नेनापि महामुने!

ऋक्षशृङ्ग उवाच

पृच्छामि त्वां कथं को वा कुतस्त्वमिह चाऽऽगतः ।
ब्रह्मक्षत्रविशां मध्ये को भवानुत शूद्रजः ॥ ४० ॥

चित्रसेन उवाच

नाहं शूद्रोऽस्मि भोस्तात! न वैश्यो ब्राह्मणो न वा ।
न चान्त्यजोऽस्मि विप्रेन्द्र! क्षत्रियोऽस्मि महामुने !॥ ४१ ॥

धर्मज्ञश्च कृतज्ञश्च सर्वसत्त्वहिते रतः । अकामात्पातकंजातं कथंशुद्धिर्भविष्यति ॥

ऋक्षशृङ्ग उवाच

मांगृहीत्वाऽऽश्रमंगच्छयत्रतौपितरौमम । आवेदयस्वचात्मानंपुत्रघातिनमातुरम्

तेदृष्ट्वामांकरिष्यन्तिकारुण्यंचतवोपरि । उपायंकथयिष्यन्तियेनशान्तिर्भविष्यति

तस्य तद्वचनं श्रुत्वा चित्रसेनो नृपोत्तम !।

स्कन्धे कृत्वा तु तं विप्रं जगामाऽऽश्रमसन्निधौ ॥ ४५ ॥

न शक्नोति यदा वोढुं विश्राम्यति पुनः पुनः ।

तावत्पश्यति तं विप्रं मूर्च्छितं विकलेन्द्रियम् ॥ ४६ ॥

मुमोच चित्रसेनस्तं छायायां वटभूरुहः । वस्त्रंचतुर्गुणं कृत्वा चक्रे वातं मुहुर्मुहुः

पश्यतस्तस्यराजेन्द्रऋक्षशृङ्गोमहातपाः । पञ्चत्वमगमच्छीघ्रं ध्यानयोगेनयोगवित्

दाहयामास तं विप्रं विधिदृष्टेन कर्मणा । स्नानंकृत्वासशोकार्त्तो विललापमुहुर्मुहुः

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे

रेवाखण्डे शूलभेदमाहात्म्ये ऋक्षशृङ्गस्वर्गगमनवर्णनं नाम

त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

## चतुःपञ्चाशत्तमोऽध्यायः

### दीर्घतपसःस्वर्गारोहणवर्णनम्

ईश्वर उवाच

ततश्चानन्तरं राजाजगामोद्वेगमुत्तमम् । कथं यामि गृहं त्वद्य वाराणस्यामहंपुनः

ब्रह्महत्यासमाविष्टो जुहोम्यग्नौ कलेवरम् ।

अथवा तस्य वाक्येन तं गच्छाम्याश्रमम्प्रति ॥ २ ॥

कथयामियथावृत्तंगत्वातस्यमहामुनेः । एवंसञ्चिन्त्यराजासौजगामाश्रमसन्निधौ

ऋक्षशृङ्गस्य चास्थीनि गृहीत्वा स नृपोत्तमः ।
दृष्टिमार्गे स्थितस्तस्य महर्षेर्भावितात्मनः ॥ ४ ॥

दीर्घतपा उवाच

आगच्छस्वागतंतेऽस्तुआसनेऽत्रोपविश्यताम् । अर्घंददाम्यहंयेनमधुपर्कंसविष्टरम्

चित्रसेन उवाच

अर्घस्यास्य न योग्योऽहं महर्षे ! नाऽस्मि भाषणे ।
मृगमध्यस्थितो विप्रस्तव पुत्रो मया हतः ॥ ६ ॥

पुत्रघ्नंविद्धिमांविप्र तीव्रदण्डेन दण्डय । मृगभ्रान्त्याहतोविप्रऋक्षशृङ्गोमहातपाः
इति मत्वामुनिश्रेष्ठकुरुमेत्वं यथोचितम् । मातातद्वचनंश्रुत्वागृहान्निष्क्रम्यविह्वला
हा हताऽस्मीत्युवाचेदं पपात धरणीतले ।
विललाप सुदुःखार्ता पुत्रशोकेन पीडिता ॥ ६ ॥

हा हता पुत्रपुत्रेति करुणं कुररीयथा । विललापाऽतुरामाता क्वगतोमांविहायवै
मुखं दर्शय चात्मीयं मातरं मां हि मानय ॥ १० ॥
श्रुताध्यनसम्पन्नं जपहोमपरायणम् ।
आगतं त्वां गृहद्वारे कदा द्रक्ष्यामि पुत्रक !॥ ११ ॥

लोकोक्त्या श्रूयतेचैतच्चन्दनं किलशीतलम् । पुत्रगात्रपरिष्वङ्गश्चन्दनादपिशीतलः
किं चन्दनेन पीयूषबिन्दुना किं किमिन्दुना ॥ १३ ॥
पुत्रगात्रपरिष्वङ्गपात्रं गात्रं भवेद्यदि । ॥ १४ ॥
परिष्वजितुमिच्छामि त्वामहं पुत्र सुप्रिय !।
पञ्चत्वमनुयास्यामि त्वद्विहीनाद्य दुःखिता ॥ १५ ॥

एवंविलपतीदीना पुत्रशोकेनपीडिता । मूर्च्छिता विह्वला दीना निपपात महीतले
भार्यां च पतितांदृष्ट्वा पुत्रशोकेनपीडिताम् । चुकोपसमुनिस्तत्र चित्रसेनाय भूभृते

दीर्घतपा उवाच

याहि याहि महापाप! मा मुखं दर्शयस्व मे ।

किं त्वया घातितो विप्रो ह्यकामाच्च सुतो मम ॥ १८ ॥

ब्रह्महत्या भविष्यन्तिबह्वयस्तेवसुधाधिप !। सकुटुम्बस्यमेत्वंहिमृत्युरेषउपस्थितः

एवमुक्त्वाततोविप्रोविचिन्त्यच पुनःपुनः । परित्यज्यतदाक्रोधंमुनिभावाज्जगादह

दीर्घतपा उवाच

उद्वेगंत्यजभो वत्स!दुरुक्तं गदितो मया । पुत्रशोकाभिभूतेन दुःखतप्तेन मानद

किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः ।
प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥ २२ ॥

अनेनैव विधानेन पञ्चत्वं विहितं मम । हत्यास्तव भविष्यन्ति पूर्वमुक्ता न संशयः

ब्रह्मक्षत्रविशां मध्येशूद्रचण्डालजातिषु । कस्त्वं कथयसत्यंमेकस्माच्चनिहतोद्विजः

चित्रसेन उवाच

विज्ञापयामि विप्रर्षे! क्षन्तव्यं ते ममोपरि ।
नाऽहं विप्रोऽस्मि वै तात ! न वैश्यो न च शूद्रजः ॥ २५ ॥
न व्याधश्चान्त्यजातो वा क्षत्रियोऽहं महामुने !।
काशीराजो मृगान्हन्तुमागतो वनमुत्तमम् ॥ २६ ॥

भ्रान्त्यानिपातितोह्येषमृगरूपधरोमुनिः । इदानींतवपादान्तेसंश्रितःपातकान्वितः

किं कर्त्तव्यं मया विप्र! उपायं कथयस्व मे ॥ २८ ॥

दीर्घतपा उवाच

ब्रह्महत्या न शक्येताप्येका निस्तरितुं प्रभो !।
दशैका च कथं शक्यास्ताः शृणुष्व नरेश्वर !॥ २९ ॥

चत्वारो मे सुताराजन्सभार्यामातृपूर्वकाः । मयासहनजीवन्तिऋक्षशृङ्गस्यकारणे

उपायं शोभनंतातकथयिष्येशृणुष्वतम् । शक्नोषि यदि तंकर्तुं सुखोपायं नरेश्वर

सकुटुम्बं समस्तं मां दाहयित्वाऽनलेनृप । अस्थीनिनर्मदातोये शूलभेदेविनिक्षिप

नर्मदादक्षिणे कूले शूलभेदं हि विश्रुतम् । सर्वपापहरं तीर्थं सर्वदुःखघ्नमुत्तमम् ॥

शुचिर्भूत्वा ममाऽस्थीनि तत्र तीर्थे विनिक्षिप ।

मोक्ष्यसे सर्वपापैस्त्वं मम वाक्यान्न संशयः ॥ ३४ ॥

राजोवाच

आदेशो दीयतां तात करिष्यामि न संशयः ।

समस्तं मेऽस्ति यत्किञ्चिद्राज्यं कोशः सुहृत्सुताः ॥ ३५ ॥

तवाधीनं महाविप्र! प्रयच्छामि प्रसीद मे । परस्परंविवदतोर्विप्रराज्ञोस्तदा नृप

स्फुटित्वा हृदयं शीघ्रं मुनिभार्यामृता तदा ।

पुत्रशोकसमाविष्टा निर्ज्जीवा पतिता क्षितौ ॥ ३७ ॥

पुत्राश्चमातृशोकेनसर्वेपञ्चत्वमागताः । स्नुषाश्चैवतदा सर्वामृताश्च सह भर्तृभिः

पञ्चत्वं च गताःसर्वेमुनिमुख्यान्नृपोत्तम !। विप्रानाह्वापयामासयेतत्राश्रमवासिनः

तेभ्यो निवेदयामास यथावृत्तं नृपोत्तमः ।

स तैस्तदाऽभ्यनुज्ञातः काष्ठान्यादाय यत्नतः ॥ ४० ॥

दाहं सञ्चयनंचक्रे चित्रसेनोमहीपतिः । ऋक्षशृङ्गादिसर्वेषांगृहीत्वाऽस्थीनियत्नतः

याम्याशां प्रस्थितो राजा पादचारी महीपते !।

न शक्नोति यदा गन्तुं छायामाश्रित्य तिष्ठति ॥ ४२ ॥

विश्रम्य च पुनर्गच्छेद्भाराक्रान्तो महीपतिः ।

सचैलं कुरुते स्नानं मुक्त्वाऽस्थीनि पदे पदे ॥ ४३ ॥

पिबेज्जलं निराहारः सगच्छन्दक्षिणामुखः । अचिरेणैवकालेन सङ्गतो नर्मदातटम्

आश्रमस्थान्द्विजान्दृष्ट्वा पप्रच्छ पृथिवीपतिः ॥ ४५ ॥

चित्रसेन उवाच

कथ्यतां शूलभेदस्य मार्गं मे द्विजसत्तमाः !।

येन यामि महाभागा स्वकार्यार्थस्य सिद्धये ॥ ४६ ॥

मुनय ऊचुः

इतःक्रोशान्तरादर्वाक्तीर्थंपरमशोभनम् । नर्मदादक्षिणेकूले ततोद्रक्ष्यसिनाऽन्यथा

ऋषिवाक्येन राजाऽसौ शीघ्रंगत्वानरेश्वरः । सददर्शततःशीघ्रं बहुद्विजसमाकुलम्

बहुद्रुमलताकीर्णं बहुपुष्पोपशोभितम् । ऋक्षसिंहसमाकीर्णं नानाव्रतधरैः शुभैः

एकपादा स्थिताःकेचिदपरे सूर्यदृष्टयः ।
एकाङ्गुष्ठस्थिताः केचिदूर्ध्वबाहुस्थिताः परे ॥ ५० ॥
दिनैकभोजनाः केचित्केचित्कन्दफलासनाः ।
त्रिरात्रभोजनाः केचित्पराकव्रतिनोऽपरे ॥ ५१ ॥
चान्द्रायणरताः केचित्केचित्पक्षोपवासिनः ।
मासोपवासिनः केचित्केचिदृत्वन्तपारणाः ॥ ५२ ॥
योगाभ्यासरताः केचित्केचिद्ध्यायन्ति तत्पदम् ।
शीर्णपर्णाशिनःकेचित्केचिच्च कटुकाशनाः ॥ ५३ ॥
शैवालभोजनाःकेचित्केचिन्मारुतभोजनाः ।
गार्हस्थ्ये च स्थिताःकेचित्केचिच्चैवाऽग्निहोत्रिणः ॥ ५४ ॥

एवंविधान्द्विजान्दृष्ट्वाजानुभ्यामवनिं गतः । प्रणम्यशिरसाराजन्राजावचनमब्रवीत्

चित्रसेन उवाच

कस्मिन्देशे च तत्तीर्थं सत्यं कथयत द्विजाः !।
येनाभिवाञ्छिता सिद्धिः सफला मे भविष्यति ॥ ५६ ॥

ऋषय ऊचुः

धन्वन्तरशतंगच्छ भृगुतुङ्गस्यमूर्द्धनि । कुण्डंद्रक्ष्यसितत्पूर्णंविस्तीर्णंपयसाशिवम्
तेषां तद्वचनंश्रुत्वागतःकुण्डस्यसन्निधौ । दृष्ट्वाचैवतुतत्तीर्थं भ्रान्तिर्जातानृपस्य वै
ततोविस्मयमापन्नश्चिन्तयन्वैमुहुर्मुहुः । आकाशस्थंददर्शाऽसौ सामिषं कुररं नृप
भ्रममाणंगृहीताहिंवध्यमानं निरामिषैः । परस्परंचयुयुधुःसर्वेऽप्यामिषकाङ्क्षया
हतश्चञ्चुप्रहारेण स ततः पतितोऽम्भसि । शूलेनशूलिनायत्र भूभागो भेदितः पुरा

तत्तीर्थस्य प्रभावेण स सद्यः पुरुषोऽभवत् ।
विमानस्थं ददर्शाऽसौ पुमांसं दिव्यरूपिणम् ॥ ६२ ॥

गन्धर्वाऽप्सरसोयक्षास्तंयान्तं तुष्टुवुर्दिवि । अप्सरोगीयमानेतु गतेसूर्यस्य मूर्द्धनि

चित्रसेनस्ततस्तस्मिन्नाश्चर्यं परमं गतः । ऋषिणा कथितंयद्वत्तद्वत्तीर्थं न संशयः
हृष्टरोमाऽभवद्दृष्ट्वा प्रभावं तीर्थसम्भवम् ॥ ६४ ॥
ममाऽद्य दिवसो धन्यो यस्मादत्र समागतः ।
अस्थीनि भूमौ निक्षिप्य स्नानं कृत्वा यथाविधि ॥ ६५ ॥
तिलमिश्रेणतोयेनातर्पयत्पितृदेवता । गृह्यास्थीनि ततोराजा चिक्षेपाऽन्तर्जलेतदा
क्षणमेकं ततो वीक्ष्य राजोद्र्ध्र्ववदनः स्थितः ।
तान्ददर्श पुनः सर्वान्दिव्यरूपधराञ्छुभान् ॥ ६७ ॥
दिव्यवस्त्रैश्चसम्वीतान्दिव्याभरणभूषितान् ।
विमानैर्विविधैर्दिव्यैरप्सरोगणसेवितैः ॥ ६८ ॥
पृथग्भूतांश्च तान्सर्वान्विमानेषु व्यवस्थितान् ।
उत्पत्तिवत्समालोक्य राजा संहर्षितोऽभवत् ॥ ६९ ॥
ऋषिर्विमानमारूढश्चित्रसेनमथाब्रवीत् । भो भोः साधोमहाराजचित्रसेन महीपते
त्वत्प्रसादान्नृपश्रेष्ठ गतिर्दिव्या ममेदृशी । जातेयंयत्त्वया कार्यं कृतं परमशोभनम्
स्वसुतोऽपि न शक्नोति पितॄणां कर्त्तुमीदृशम् ।
मदीयवचनात्तात निष्पापस्त्वं भविष्यसि ॥ ७२ ॥
फलं प्राप्स्यसि राजेन्द्र! कामिकं मनसेप्सितम् ।
आशीर्वादांस्ततो दत्त्वा चित्रसेनाय धीमते ॥ ७३ ॥
स्वर्गं जगाम ससुतस्ततो दीर्घतपा मुनिः ।
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां पञ्चमेऽवन्तीखण्डे रेवाखण्डे
दीर्घतपसःस्वर्गारोहणवर्णनंनाम चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

———

# पञ्चपञ्चाशत्तमोऽध्यायः

## काशीराजमोक्षवर्णनम्

उत्तानपाद उवाच

माहात्म्यं तीर्थगंदृष्ट्वा चित्रसेनोनरेश्वरः। किंचकारकवा वासं किमाहारो बभूवह

ईश्वर उवाच

भृगुतुङ्गं समारुह्य ऐशानीं दिशमाश्रितः। तपश्चचारविपुलं कुण्डे तत्र नृपोत्तमः

सर्वान्देवान्हृदि ध्यात्वा ब्रह्मविष्णुमहेश्वरान्।
विचिक्षेप यदात्मानं प्रत्यक्षौ रुद्रकेशवौ।
करे गृहीत्वा राजानं रुद्रो वचनमब्रवीत् ॥ ३ ॥

ईश्वर उवाच

प्राणत्यागं महाराज! मा काले त्वं कृथा वृथा।
अद्याप्यसि युवा त्वं वै न युक्तं मरणं तव ॥ ४ ॥
स्वस्थानं गच्छ शीघ्र त्वं भुक्त्वा भोगान्यथेप्सितान्।
कुरु निष्कण्टकं राज्यं नाके शक्र इवापरः ॥ ५ ॥

चित्रसेन उवाच

न राज्यं कामये देव ! न पुत्रान्न च बान्धवान्।
न भार्यां न च कोशं च न गजान्न तुरङ्गमान् ॥ ६ ॥

मुञ्चमुञ्च महादेव मा विघ्नःक्रियतां मम। स्वर्गप्राप्तिर्ममाऽद्यैवत्वत्प्रसादान्महेश्वर

ईश्वर उवाच

यस्याऽग्रतो भवेद्ब्रह्मा विष्णुःशम्भुस्तथैव च।
स्वर्गेण तस्य किं कार्यं स गतः किं करिष्यसि ॥ ८ ॥

तुष्टावयंत्रयोदेवा वृणीष्व वरमुत्तमम्। यथेप्सितं महाराज सत्यमेतदसंशयम् ॥

चित्रसेन उवाच

यदि तुष्टास्त्रयोदेवा ब्रह्मविष्णुमहेश्वराः । अद्यप्रभृतियुष्माभिःस्थातव्यमिहसर्वदा
गयाशिरो यथापुण्यं कृतं युष्माभिरेव च । तथैवेदं प्रकर्त्तव्यं शूलभेदं च पावनम्
यत्रयत्रस्थिता यूयं तत्रतत्रवसाम्यहम् । गणानां चैवसर्वेषामाधिपत्यमथाऽस्तु मे

ईश्वर उवाच

अद्यप्रभृति तिष्ठामः शूलभेदे नरेश्वर । त्रिकालं हि त्रयोदेवाः कलांशेन वसामहे
नन्दिसञ्ज्ञो गणाधीशो भविष्यति भवान्ध्रुवम् ।
मत्समीपे तु भवत आदौ पूजा भविष्यति ॥ १४ ॥
प्रक्षिप्य तानि चास्थीनि यत्र दीर्घतपा ययौ ।
सकुटुम्बो विमानस्थः स्वर्गतस्त्वं तथा कुरु ॥ १५ ॥
एवं देवा वरं दत्त्वा चित्रसेनाय पार्थिव ।
कुण्डमूर्द्धनि याम्यायां त्रयो देवास्तदा स्थिताः ॥ १६ ॥
परस्परं वदन्त्येवं पुण्यतीर्थमिदं परम् । यथाहि गयाशिरः पुण्यं पूर्वमेव पठ्यते
तथा रेवातटे पुण्यं शूलभेदं न संशयः ॥ १७ ॥

ईश्वर उवाच

इदं तीर्थं तथा पुण्यं यथा पुण्यं गयाशिरः । सकृत्पिण्डोदकेनैवनरोनिर्मलतांव्रजेत्
एकं गयाशिरोमुक्त्वा सर्वतीर्थानि भूपते ।
शूलभेदस्य तीर्थस्य कलां नार्हन्ति षोडशीम् ॥ १९ ॥
कुण्डमुदीच्यांयाम्यायांदशहस्तप्रमाणतः । रौद्रवारुणकाष्ठायांप्रमाणंचैकविंशति
एतत्प्रमाणं तत्तीर्थं पिण्डदानादि कर्मसु । नाधर्मनिरता दातुं लभन्ते दानमत्र
विष्णुस्तु पितृरूपेण ब्रह्मरूपीपितामहः । प्रपितामहोरुद्रोऽभूदेवंत्रिपुरुषाःस्थिता
कदा पश्यति तीर्थं वै कदा नस्तारयिष्यति ।
इति प्रतीक्षां कुर्वन्ति पुत्राणां सततं नृप ।
शूलभेदे नरः स्नात्वा दृष्ट्वा शूलधरं सकृत् ॥ २३ ॥

पुत्रो नाधनो रोगी सप्तजन्मसु जायते । एकविंशतिं पितुः पक्षे मातुश्चैवैकविंशतिम्
र्यापक्षे दशैवेह कुलान्येतानि तारयेत् । शूलभेदवने राजञ्छाकमूलफलैरपि ॥

एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ।
पञ्चस्थानेषु यः श्राद्धं कुरुते भक्तिमान्नरः ॥ २६ ॥

कुलानि प्रेतभूतानि सर्वाण्यपि हि तारयेत् । द्विजदेवप्रसादेन पितृणां च प्रसादतः
श्राद्धदो निवसेत्तत्र यत्र देवो महेश्वरः । स्युरात्मघातिनो ये च गोब्राह्मणहनाश्च ये

दंष्ट्रिभिर्जलपाते च विद्युत्पातेषु ये मृताः ।
न येषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ २९ ॥

त्र तीर्थे तु यस्तेषां श्राद्धं कुर्वीत भक्तितः । मोक्षावाप्तिर्भवेत्तेषां युगमेकं न संशयः
ज्ञानाद्यत्कृतं पापं बालभावाच्च यत्कृतम् । तत्सर्वं नाशयेत्पापं स्नानमात्रेण भूपते
जकेन यथा धौतं वस्त्रं भवति निर्मलम् । तथा पापोऽपि तत्तीर्थे स्नातो भवति निर्मलः

संन्यासं कुरुते योऽत्र तीर्थे विधिसमन्वितम् ।
ध्यायन्नित्यं महादेवं स गच्छेत्परमं पदम् ॥ ३३ ॥
क्रीडित्वा स यथाकामं स्वेच्छया शिवमन्दिरे ।
वेदवेदाङ्गतत्त्वज्ञो जायतेऽसौ शुभे कुले ॥ ३४ ॥
रूपवान्सुभगश्चैव सर्वव्याधिविवर्जितः ।
राजा वा राजपुत्रो वा धर्माचारसमन्वितः ॥ ३५ ॥
एतत्ते कथितं राजंस्तीर्थस्य फलमुत्तमम् ।
यच्छ्रुत्वा मानवो नित्यं मुच्यते सर्वकिल्बिषैः ॥ ३६ ॥

इदं श्रावयेन्नित्यमाख्यानं द्विजपुङ्गवान् । श्राद्धे देवकुले वाऽपि पठेत्पर्वणि पर्वणि

गीर्वाणास्तस्य तुष्यन्ति मनुष्याः पितृभिः सह ।
पठतां शृण्वतां चैव नश्यते सर्वपातकम् ॥ ३८ ॥
लिखित्वा तीर्थमाहात्म्यं ब्राह्मणेभ्यो ददाति यः ।
जातिस्मरत्वं लभते प्राप्नोत्यभिमतं फलम् ॥ ३९ ॥

रुद्रलोके वसेत्तावद्यावदक्षरमन्वितम् ॥ ४० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेरेवाखण्डे
शूलभेदमाहात्म्ये काशीराजमोक्षगमनवर्णनंनाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५

---

## षट्पञ्चाशत्तमोऽध्यायः

### सगङ्गावतरणव्याधवाक्योपदेशकथनपूर्वकंदानादिफलवर्णनम्

उत्तानपाद उवाच

अन्यच्च श्रोतुमिच्छामि केन गङ्गाऽवतारिता ।
रुद्रशीर्षे स्थिता देवी पुण्या कथमिहाऽऽगता ॥ १ ॥
पुण्यादेवशिलानाम तस्यामाहात्म्यमुत्तमम् । एतदाख्याहिमेसर्वंप्रसन्नोयदि

ईश्वर उवाच

शृणुष्वैकमना भूत्वा यथागङ्गाऽवतारिता । देवैःसर्वैर्महाभागासर्वलोकहिता
अस्ति विन्ध्यो नगोनाम याम्याशायां महीपते !।
गीर्वाणास्तु गताः सर्वे तस्य मूर्ध्नि नरेश्वर !॥ ४ ॥
तत्रचाह्वानितागङ्गा ब्रह्माद्यैरखिलैःसुरैः । अभ्यर्च्येशं जगन्नाथं देवदेवं जगद्गु
जटामध्यस्थितां गङ्गां मोचयस्वेति भूतले ।
भास्वन्ती सा ततो मुक्ता रुद्रेण शिरसा भुवि ॥ ६ ॥
तत्र स्थाने महापुण्या देवैरुत्पादिता स्वयम् ।
ततो देवनदी जाता सा हिताय नृणां भुवि ॥ ७ ॥
वसन्ति ये तटे तस्याः स्नानं कुर्वन्ति भक्तितः ।
पिबन्ति च जलं नित्यं न ते यान्ति यमालयम् ॥ ८ ॥
यत्र सा पतिता कुण्डे शूलभेदे नराधिप !।

देवनद्याः प्रतीच्यां तु तत्र प्राची सरस्वती ॥ ९ ॥

याम्यायां शूलभेदस्य तत्रतीर्थमनुत्तमम् । तत्रदेवशिलापुण्यास्वयं देवेन निर्मिता

तत्र स्नात्वा तु यो भक्त्या तर्पयेत्पितृदेवताः ।

पितरस्तस्यतृप्यन्ति यावदाभूतसम्प्लवम् ॥ ११ ॥

तत्रस्नात्वा तु योभक्त्या ब्राह्मणान्भोजयेन्नृप ।

स्वल्पान्नेनापि दत्तेन तस्य चाऽन्तो न विद्यते ॥ १२ ॥

उत्तानपाद उवाच

कानि दानानि दत्तानि शस्तानि धरणीतले ।

यानि दत्त्वा नरो भक्त्या मुच्यते सर्वपातकैः ॥ १३ ॥

देवशिलाया माहात्म्यंस्नानदानादिजंफलम् । व्रतोपवासनियमैर्यत्प्राप्यंतद्वदस्वमे

ईश्वर उवाच

आसीत्पुरामहावीर्यश्चेदिनाथोमहाबलः । वीरसेनइतिख्यातोमण्डलाधिपतिर्नृप

राष्ट्रेतस्यरिपुर्नास्तिनव्याधिर्नचतस्कराः । न चाधर्मोऽभवत्तत्रधर्म एवहिसर्वदा

सदा मुदान्वितो राजा सभार्यो बहुपुत्रकः ।

एकासीद् दुहिता तस्य सुरूपा गिरिजा यथा ॥ १७ ॥

इष्टा सा पितृमातृभ्यां बन्धुवर्गजनस्य च । कृतंवैवाहिकंकर्मकालेप्राप्तेयथाविधि

अनन्तरं चेदिपतिर्द्वादशाब्दमखेस्थितः । ततस्तस्यास्तु योभर्त्तासमृत्युवशमागतः

विधवां तां सुतां दृष्ट्वा राजा शोकसमन्वितः ।

उवाच वचनं तत्र स्वभार्यां दुःखपीडिताम् ॥ २० ॥

प्रिये दुःखमिदं जातं यावज्जीवं सुदुःसहम् । नैषारक्षयितुं शक्या रूपयौवनगर्विता

दूषयेतकुलंकाऽपिकथंरक्ष्याहिबालिका । नोपायोविद्यतेकाऽपिभानुमत्याश्चरक्षणे

परस्परं विवदतोः श्रुत्वा तत्कन्यकाऽब्रवीत् ॥ २२ ॥

भानुमत्युवाच

न लज्जामि तवाग्रेऽहं जल्पन्ती तात ! कर्हिचित् ।

सत्यं नोत्पद्यते दोषो मदर्थे ते नराधिप !॥ २३ ॥
अद्यप्रभृत्यहं तात! धारयिष्ये न मूर्द्धजान्। स्थूलवस्त्रपटार्द्धंतुधारयिष्यामिते
करिष्यामि व्रतान्याशु पुराणविहितानि च।
आत्मानं शोषयिष्यामि तोषयिष्ये जनार्दनम् ॥ २५ ॥
ममैषा वर्तते बुद्धिर्यदित्वंतातमन्यसे। भानुमत्यावचःश्रुत्वा राजासंहर्षितोऽभ
तीर्थयात्रां समुद्दिश्य कोशं दत्त्वा सुपुष्कलम्।
विसृज्य पुरुषान्वृद्धान्कृत्वा तस्याः सुरक्षणे ॥ २७ ॥
पुरुषान्त्सायुधांश्चापि ब्राह्मणान् स पुरोहितान्।
दासीदासान्पदातींश्च चास्याःसंरक्षणक्षमान् ॥ २८ ॥
ततःपितुर्मतेनैव गङ्गातीरंगतासती। अवगाह्य तटे द्वे तु गङ्गायाः स नराधिप
नित्यं सम्पूज्य सद्विप्रान्गन्धमाल्यादिभूषणैः।
द्वादशाब्दानि सा तीरे गङ्गायां समवस्थिता ॥ ३० ॥
त्यक्त्वा गङ्गां तदा राज्ञी गता काष्ठां तु दक्षिणाम्।
प्राप्ता सा सचिवैः सार्द्धं यत्र रेवा महानदी ॥ ३१ ॥
समाःपञ्च स्थितातत्रॐकारेऽमरकण्टके। उदग्याम्येषुतीर्थेषुतीर्थात्तीर्थंजगाम
स्नात्वा स्नात्वाऽऽपूज्यविप्रान्भक्तिपूर्वमतन्द्रिता।
वारुणीं सा दिशं गत्वा देवनद्याश्च सङ्गमे ॥ ३३ ॥
ददर्शचाश्रमंपुण्यं मुनिसङ्घैः समाकुलम्। दृष्ट्वा मुनिसमूहं सा प्रणिपत्येदमब्रवी
माहात्म्यमस्य तीर्थस्य नाम चैवाऽस्य कीदृशम्।
कथयन्तु महाभागाः! प्रसादः क्रियतां मम ॥ ३५ ॥

ऋषय ऊचुः

चक्रतीर्थं तु विख्यातं चक्रं दत्तं पुरा हरेः। महेश्वरेण तुष्टेन देवदेवेन शूलिना
अत्रतीर्थेतुयःस्नात्वातर्पयेत्पितृदेवताः। अनिवर्त्तिकागतिस्तस्यजायतेनात्रसंश
द्वितीयेऽह्नितोगच्छेच्छूलभेदेतपस्विनि !। पूर्वोक्तेनविधानेनस्नानंकुर्याद्यथावि

जन्मत्रयकृतैः पापैर्मुच्यते नात्र संशयः । जलेन तिलमात्रेण प्रदद्यादञ्जलित्रयम् ॥

तृप्यन्ति पितरस्तस्य द्वादशाब्दान्यसंशयम् ।

यः श्राद्धं कुरुते भक्त्या श्रोत्रियैर्ब्राह्मणैर्नृप ॥ ४० ॥

वार्धुष्याद्यास्तु वर्ज्यन्ते पितॄणां दत्तमक्षयम् ।

अपरेऽह्नि ततोगच्छेत्पुण्यां देवशिलां शुभाम् ॥ ४१ ॥

वीक्ष्यते जाह्नवीपुण्या देवैरुत्पादिता पुरा । स्नात्वातत्रजलंदद्यात्तिलमिश्रंनराधिप

सक्तुपिण्डप्रदानेन मुच्यते ब्रह्महत्यया ।

एकादश्यामुपोषित्वा पक्षयोरुभयोरपि ॥ ४३ ॥

क्षपाजागरणं कुर्यात्पठेत्पौराणिकींकथाम् । विष्णुपूजां प्रकुर्वीतपुष्पधूपनिवेदनैः

प्रभाते भोजयेद्विप्रान्दानं दद्यात्स्वशक्तितः ।

चतुर्थेऽह्नि ततो गच्छेद्यत्र प्राची सरस्वती ॥ ४५ ॥

ब्रह्मदेहाद् विनिष्क्रान्ता पावनार्थं शरीरिणाम् ।

तत्र स्नात्वा नरो भक्त्या तर्पयेत्पितृदेवताः ॥ ४६

श्राद्धं कृत्वा यथान्यायमनिन्द्यान्भोजयेद् द्विजान् ।

पितरस्तस्य तृप्यन्ति द्वादशाब्दान्यसंशयम् ॥ ४७ ॥

सर्वदेवमयं स्थानं सर्वतीर्थमयं तथा । देवकोटिसमाकीर्णं कोटिलिङ्गोत्तमोत्तमम्

त्रिरात्रं कुरुते योऽत्र शुचिः स्नात्वा जितेन्द्रियः ।

पक्षं मासं च षण्मासमब्दमेकं कदाचन ॥ ४९ ॥

न तस्य सम्भवो मर्त्ये तस्य वासो भवेद्दिवि ।

नियमस्थो विमुच्येत त्रिजन्मजनितादघात् ॥ ५० ॥

विनापुंसातुयानारी द्वादशाब्दं शुचिव्रता । तिष्ठतेसाऽक्षयंकालं रुद्रलोकेमहीयते

मुनीनां वचनं श्रुत्वा मुदा परमया ययौ । ततोऽवगाह्य तत्तीर्थमहर्निशमतन्द्रिता

दृष्ट्वा तीर्थप्रभावं तु पुनर्वचनमब्रवीत् । श्रूयतां वचनं मेऽद्य ब्राह्मणाः सपुरोहिताः

न त्यजामीदृशं स्थानं यावज्जीवमहर्निशम् ।

मत्पितुश्च तथा मातुः कथयध्वमिदं वचः ॥ ५४ ॥
त्वत्कन्या शूलभेदस्था नियता व्रतचारिणी ।
एवमुक्त्वा स्थिता सा तु तत्र भानुमती नृप !॥ ५५ ॥
एकान्तरोपवासस्था शनैर्मासोपवासिता
देवशिलास्थिता नित्यं दध्यौ सा चक्रपाणिनम् ॥ ५६ ॥
अहर्निशं दहेद् धूपं चन्दनञ्च सदीपकम् ।
पादशौचं स्वयं कृत्वा स्वयं भोजयते द्विजान् ॥
द्वादशाब्दानि सा राज्ञी सुव्रता तत्र संस्थिता ॥ ५७ ॥

ईश्वर उवाच

अन्यद्देवशिलायास्तु माहात्म्यंशृणुभूपते। कथयामिमहाबाहोसेतिहासंपुरातनम्
कश्चिद्वनेचरोऽव्याधः शबरः सह भार्यया। दुर्भिक्षपीडितस्तत्र आमिषार्थं वनंगत
नापश्यत्पक्षिणस्तत्र न मृगान्न फलानि च ।
सरस्ततो ददर्शाऽथ पद्मिनीखण्डमण्डितम् ॥ ६० ॥
दृष्ट्वा सरोवरं तत्र शबरी वाक्यमब्रवीत् ।
कुमुदानि गृहाण त्वं दिव्यान्याहारसिद्धये ॥ ६१ ॥
देवस्य पूजनार्थं तु शूलभेदस्य यत्नतः। विक्रयो भवितातत्र धर्मशीलो जनो यत
भार्याया वचनं श्रुत्वा जग्राह कुमुदानिसः। उत्तीर्णस्तुतटे यावद्दृष्ट्वाश्रीवृक्षमग्रत
श्रीफलानिगृहीत्वा तु सुपक्वानिविशेषतः। शूलभेदं स सम्प्राप्तोददर्श सुबहूञ्जना
चैत्रमासेसितेपक्षेएकादश्यांनराधिप। तस्मिन्नहनिनाश्चीयुर्बालावृद्धास्तथास्त्रिय
मण्डपं ददृशे तत्रकृतं देवशिलोपरि। वस्त्रैः सम्वेष्टितंदिव्यं स्रङ्माल्यैरुपशोभितम्
ऋषयश्चाऽऽगतास्तत्र ये चाऽऽश्रमनिवासिनः ।
सोपवासाः सनियमाः सर्वे साग्निपरिग्रहाः ॥ ६७ ॥
देवनद्यास्तटेरम्ये मुनिसङ्घैः समाकुले। आगच्छद्भिर्नृपश्रेष्ठ मार्गस्तत्र न लभ्यते
दृष्ट्वाजनपदंतत्रतांभार्यांशबरोऽब्रवीत्। गच्छपृच्छस्व कमपिकिमद्यस्नानकारणम्

पर्वाणि यानि श्रूयन्ते किंस्वित्सूर्येन्दुसम्प्लवः ।
अयनं किं भवेदद्य किं वाऽक्षयतृतीयका ॥ ७० ॥

ततः स्वभर्तुर्वचनाच्छबरी प्रस्थितातदा । पप्रच्छनारींदृष्ट्वाऽग्रेदत्त्वाग्रे कमले शुभे

तिथिरद्यैव का प्रोक्ता किं पर्व कथयस्व मे ।
किमयं स्नाति लोकोऽयं किं वा स्नानस्य कारणम् ॥ ७२ ॥

नार्युवाच

अद्य चैकादशीपुण्या सर्वपापक्षयङ्करी । उपोषिता सकृद्येन नाकप्राप्तिं करोतिसा

तस्यास्तद्वचनं श्रुत्वाशबरी शबराय वै । कथयामासचाव्यग्रास्त्रीवाक्यं नृपसत्तम

अद्य त्वेकादशीपुण्या बालवृद्धैरुपोषिता । मदनैकादशीनाम सर्वपापक्षयङ्करी ॥

नियता श्रूयते तत्र राजपुत्री सुशोभना ।
व्रतस्था नियताहारा नाम्ना भानुमती सती ॥ ७६ ॥
नैतया सदृशी काचित्त्रिषु लोकेषु विश्रुता ।
दृश्यते सा वरारोहा ह्यवतीर्णा महीतले ॥ ७७ ॥
भार्याया वचनं श्रुत्वा शबरस्तां जगाद ह ।
कमलानि यथालाभं दत्त्वा भुङ्क्ष्व हि सत्वरम् ॥ ७८ ॥

ममैवावर्त्ततेबुद्धिर्नभोक्तव्यंमयाध्रुवम् । न मयोपार्जितंभद्रे ! पापबुद्ध्याशुभंक्वचित्

शबर्युवाच

न पूर्वं तु मया भुक्तं कस्मिंश्चैवतुवासरे । भुक्तशेषंमयाभुक्तंयावत्कालंस्मराम्यहम्

भार्यया निश्चयं ज्ञात्वा स्नानं कर्तुं जगाम ह ।
अर्धोत्तरीयवस्त्रेण स्नानं कृत्वा तु भक्तितः ॥ ८१ ॥
सर्वान्देवान्नमस्कृत्य गतो देवशिलां प्रति ।
तस्थौ स शङ्कमानोऽपि नमस्कृत्य जनार्द्दनम् ॥ ८२ ॥
यस्यास्तु कुमुदे दत्ते तया राज्ञ्यै निवेदितम् ।
तद्दृष्ट्वा पद्मयुगलं तां दासीं सदाऽब्रवीत्तदा ॥ ८३ ॥

कुत्र पद्मद्वयं लब्धं कथ्यतामग्रतो मम। शीघ्रं तत्रैव गत्वाच पद्मानानय पापरान्

धान्येन वसुना वाऽपि कमलानि समानय।

भानुमत्या वचः श्रुत्वा गता सा शबरं प्रति ॥ ८५ ॥

श्रीफलानि च पुष्पाणि बह्वन्यन्यानि देहि मे ॥ ८६ ॥

शबर्युवाच

श्रीफलानि सपुष्पाणि दास्यामि च विशेषतः।

न लोभो न स्पृहा मेऽस्ति गत्वा राज्ञीं निवेदय ॥ ८७ ॥

तया च सत्वरं गत्वा यथावृत्तंनिवेदितम्। शबर्युक्तंपुरस्तस्याःसविस्तरपरंवचः

तस्यास्तु वचनं श्रुत्वा राज्ञी तत्र स्वयं गता।

उवाच शबरीं प्रीत्या देहि पद्मानि मूल्यतः ॥ ८६ ॥

शबर्युवाच

न मूल्यं कामयेदेवि! फलपुष्पसमुद्भवम्। श्रीफलानिचपुष्पाणियथेष्टंमम गृह्यताम्

अर्चां कुरु यथान्यायं वासुदेवे जगत्पतौ।

राज्ञ्युवाच

विना मूल्यं न गृह्णामि कमलानि तवाऽधुना।

धान्यस्य खारिकामेकां ददामि प्रतिगृह्यताम् ॥ ९१ ॥

दशविंशत्यथत्रिंशच्चत्वारिंशदथाऽपिवा। गृहाण वा खारिशतं दुर्भिक्षांभोधिमुत्तर

वसुरत्नंसुवर्णं च अन्यत्ते यदभीप्सितम्। तत्सर्वंसम्प्रदास्यामिकमलार्थे नसंशयः

शबर्युवाच

नाहारंचिन्तयाम्यद्य मुक्त्वा देवं वरानने। देवकार्यंविनाभद्रे नान्याबुद्धिःप्रवर्त्तते

राज्ञ्युवाच

नत्वयाऽन्नंपरित्याज्यंसर्वमन्नेप्रतिष्ठितम्। तस्मात्सर्वप्रयत्नेनममान्नंप्रतिगृह्यताम्

तपस्विनो महाभागा येचाऽरण्यनिवासिनः।

गृहस्थद्वारि ते सर्वे याचन्तेऽन्नमतन्द्रिताः ॥ ९६ ॥

शबर्युवाच

निषेधश्च कृतः पूर्वं सर्व्वं सत्ये प्रतिष्ठितम् । सत्येनतपते सूर्यःसत्येन ज्वलतेऽनलः

सत्येन तिष्ठत्युदधिर्वायुः सत्येन वाति हि ।

सत्येन पच्यते सस्यं गावः क्षीरं स्रवन्ति च ॥ ९९ ॥

सत्याधारमिदं सर्वं जगत्स्थावरजङ्गमम् ।

तस्मात्सर्वप्रयत्नेन सत्यं सत्येन पालयेत् ॥ १०० ॥

देवकार्यं तु मे भुक्त्वा नाऽन्या बुद्धिः प्रवर्त्तते ।

गृहाण राज्ञि! पुष्पाणि कुरु पूजां गदाभृतः ॥ १०१ ॥

श्रूयते द्विजवाक्यैस्तु न दोषो विद्यते क्वचित् ।

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पाक्षता दधि ॥

मांसं शय्याऽऽसनं धानाः प्रत्याख्येया न वारि च ॥ १०२ ॥

राज्ञ्युवाच

आरामोपहृतं पुष्पमारण्यं पुष्पमेव च । क्रीतं प्रतिग्रहे लब्धं पुष्पमेवं चतुर्विधम् ॥

उत्तमं पुष्पमारण्यं गृहीतं स्वयमेव च । मध्यमं फलमारामे त्वधमं क्रीतमेव च ॥

प्रतिग्रहेण यल्लब्धं निष्फलं तद्विदुर्बुधाः ॥ १०४ ॥

पुरोहित उवाच

गृहाणराज्ञि! पुष्पाणिकुरुपूजां गदाभृतः । उपकारःप्रकर्त्तव्योऽव्यपदेशेन कर्हिचित्

ईश्वर उवाच

श्रीफलानि सपद्मानि दत्तानि शबरेण तु ।

गृहीत्वा तानि राज्ञी सा पूजाञ्चक्रे सुशोभनाम् ॥ १०६ ॥

क्षपाजागरणञ्चक्रेश्रुत्वापौराणिकींकथाम् । शबरस्तुततोभार्यामिदं वचनमब्रवीत्

दीपार्थं गृह्यतां स्नेहो यथालाभेन सुन्दरि !।

कृत्वां दीपं ततस्तौ तु कृत्वा पूजां हरेः शुभाम् ॥ १०८ ॥

चक्रतुर्जागरंरात्रौध्यायन्तो धरणीधरम् । ततः प्रभातसमये दृष्ट्वास्नानोत्सुकं जनम्

स्नाति वै शूलभेदे तु देवनद्यांतथाऽपरे । सरस्वत्यां नराःकेचिन्मार्कण्डस्यह्रदेऽपरे
चक्रतीर्थं गताश्चक्रुः स्नानं केचिद्विधानतः ।
शुचयस्ते जनाः सर्व्वे स्नात्वा देवशिलोपरि ॥ १११ ॥
श्राद्धं चक्रुः प्रयत्नेनश्रद्धयापूतचेतसा । तान्दृष्ट्वा शबरो बिल्वैः पिण्डांश्चक्रेप्रयत्नतः
भानुमत्या तथा भर्त्तुः पिण्डनिर्वपणं कृतम् ।
अनिन्द्या भोजिता विप्रा दम्भवार्धुष्यवर्जिताः ॥ ११३ ॥
हविष्यान्नैस्तथा दध्ना शर्करामधुसर्पिषा । पायसेनतु गव्येन कृतान्नेनविशेषतः॥
भोजयित्वा तथा राज्ञी ददौ दानं यथाविधि ।
पादुकोपानहौ छत्रं शय्यां गोवृषमेव च ॥ ११५ ॥
विविधानि च दानानिहेमरत्नधनानि च । चक्रतीर्थेमहाराजकपिलांयःप्रयच्छति
पृथ्वी तेन भवेद्दत्ता सशैलवनकानना ॥ ११६ ॥

उत्तानपाद उवाच

यानि यानि च दत्तानि शस्तानि जगतीपतेः ।
तानि सर्वाणि देवेश! कथयस्व प्रसादतः ॥ ११७ ॥

ईश्वर उवाच

तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् । भूमिदः स्वर्गमाप्नोति दीर्घमायुर्हिरण्यदः
गृहदो रोगरहितो रूप्यदो रूपवान्भवेत् । वासोदश्चन्द्रसालोक्यमर्कसायुज्यमश्वदः
वृषदस्तु श्रियंपुष्टां गोदाताच त्रिविष्टपम् । यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ।
वार्यन्नपृथिवीवासस्तिलकाञ्चनसर्पिषाम् ॥ १२१ ॥
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते । येनयेन हि भावेन यद्यद्दानं प्रयच्छति॥
तेनतेन सभावेन प्राप्नोतिप्रतिपूजितम् । दृष्ट्वा दानानिसर्वाणिराज्ञीदत्तानियानिच
उवाच शबरो भार्यां यत्तच्छृणु नरेश्वर । पुराणं पठितं भद्रे ब्राह्मणैर्वेदपारगैः॥
श्रुतञ्च तन्मया सर्वं दानधर्मफलं शुभम् । पूर्वजन्मार्जितं पापं स्नानदानव्रतादिभिः

शरीरं दुस्त्यजं मुक्त्वा लभते गतिमुत्तमाम् ।
संसारसागराद्भीतः सत्यं भद्रे! वदामि ते ॥ १२६ ॥
अनेकानि च पापानि कृतानि बहुशो मया ।
घातिता जन्तवो भद्रे निर्दग्धाः पर्वताः सदा ॥ १२७ ॥
तेन पापेन दग्धोऽहं दारिद्र्यं न निवर्त्तते ।
तीर्थावगाहनं पूर्वं पापेन न कृतं मया ॥ १२८ ॥
तेनाऽहं दुःखितो भद्रे !दारिद्र्यमनिवर्त्तकम् ।
मातुर्गृहं प्रयाहि त्वं त्यज स्नेहं ममोपरि ॥
नगश्रृङ्गं समारुह्य मोक्तुमिच्छाम्यहं तनुम् ॥ १२९ ॥

शबर्युवाच

मात्रा पित्रा न मे कार्यं नाऽपि स्वजनबान्धवैः ।
या गतिस्तव जीवेश! सा ममापि भविष्यति ॥ १३० ॥
न स्त्रीणामीदृशो धर्मो विना भर्त्रा स्वजीवितम् ।
श्रूयन्ते बहवो दोषा धर्मशास्त्रेष्वनेकधा ॥ १३१ ॥
पारणं कुरुभोजेन्द्रव्रतंयेननननश्यति । यत्तेऽभिवाञ्छितं किञ्चिद्विष्णवेकर्त्तुमर्हसि
भार्याया वचनं श्रुत्वा मुमुदे शबरस्ततः ।
गृहीत्वा श्रीफलं शीघ्रं होमं कृत्वा यथाविधि ॥ १३३ ॥
सर्वदेवान्नमस्कृत्य भुक्तोऽपि च तया सह ।
चैत्र्यां तु विषुवं ज्ञात्वा तस्थौ तत्र दिनत्रयम् ॥ १३४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सगङ्गावतरणव्याधवाक्योपदेशकथनपूर्वकंदानादिफलवर्णनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

———

# सप्तपञ्चाशत्तमोऽध्यायः

## व्याधस्वर्गगमनवर्णनम्

ईश्वर उवाच

भानुमतीद्विजान्भोज्य बुभुजेभुक्तशेषतः । भुक्त्वा सुसुखमास्थायतदन्नंपरिणाम्यच

त्रयोदश्यां ततो गत्वा मदनाख्यतिथौ तदा ।

मार्कण्डस्य ह्रदे स्नात्वाऽऽनर्च्य देवं गुहाशयम् ॥ २ ॥

कृतोपवासनियमा स्नापयित्वा महेश्वरम् । पञ्चामृतसुगन्धेन धूपदीपनिवेदनैः ॥

आर्चयद्विविधैः पुष्पैर्नैवेद्यैश्च सुशोभितैः ।

क्षपाजागरणं कृत्वा श्रुत्वा पौराणिकीं कथाम् ॥ ४ ॥

नृत्यगीतैस्तथास्तोत्रैर्दध्यौदेवंमहेश्वरम् । अन्नंविस्तारितंसर्वंदेवस्याऽग्रेयथाविधि

चातुर्वर्ण्यसुताः सर्वे भोजिताः सपरिच्छदाः ।

चतुर्दश्यां दिनं यावत्सम्पूज्य वृषभध्वजम् ॥ ६ ॥

शङ्खवादित्रभेरीभिः पटहध्वनिनादितम् । क्षपाजागरणं कृत्वा प्रभूतजनसङ्कुलम्

नृत्यगीतैस्तथा स्तोत्रैः प्रेरिता सा निशा तदा ।

प्रभाते भोजिता विप्राः पायसैर्मधुसर्पिषा ॥ ८ ॥

दत्त्वा दानानि विप्रेभ्यः शक्त्या विप्रानुसारतः ।

अर्चयित्वा महापुष्पैः सुगन्धैर्मदनेन च ॥ ९ ॥

विचित्रैः सूक्ष्मवस्त्रैश्च देवः सम्पूज्यवेष्टितः । स्रग्दामलम्बमानैश्चबहुदीपसमुज्ज्वलैः

पक्वान्नैर्विविधैर्भक्ष्यैःसुवृत्तैर्मोदकादिभिः । यतस्तेब्राह्मणाःसर्वेवेदाध्ययनतत्पराः

तत्पर्व कीर्त्तयाञ्चक्रुः पञ्चकं नाम नामतः ।

आदित्यस्य दिनं त्वद्य तिथिः पञ्चदशी तथा ॥ १२ ॥

त्वाष्ट्रमेव न नक्षत्रं संक्रान्तिर्विषुवंतथा ।

व्यतीपातस्तथा योगः करणं विष्टिरेव च ॥ १३ ॥

पञ्चकंनाम पर्वैतदयनादिचतुर्गुणम् । अत्र दत्तं हुतं जप्तं सर्वं भवति चाऽक्षयम् ॥

ते द्विजा भानुमत्याऽथ शूलभेदं गताः सह ।
ददृशुः शबरं कुण्डे भार्यया सह संस्थितम् ॥ १५ ॥

ऐशानीं स दिशंगत्वा पर्वते भृगुमूर्द्धनि । पतितुं च समारूढोभार्ययासहपार्थिव

भानुमत्युवाच

तिष्ठतिष्ठ महासत्त्व शृणुष्ववचनंमम । किमर्थंत्यजसि प्राणानद्यापिचयुवाभवान्

कः सन्तापः क उद्वेगः किं दुःखं व्याधिरेव च ।
शिशुः संदृश्यसेऽद्याऽपि कारणं कथ्यतामिदम् ॥ १८ ॥

शबर उवाच

कारणं नास्ति मे किंचिन्न दुःखं किञ्चिदेव तु ।
संसारभयभीतोऽहं नान्याः बुद्धिः प्रवर्त्तते ॥ १९ ॥

दुःखेनलभ्यतेयस्मान्मानुष्यंजन्मभाग्यतः । मानुष्यंजन्मचासाद्ययोनधर्मंसमाचरेत्

स गच्छेन्निरयं घोरमात्मदोषेण सुन्दरि !।
तस्मात्पतितुमिच्छामि तीर्थेऽस्मिन्पापनाशने ॥ २१ ॥

राज्ञ्युवाच

अद्यापि वर्त्तते कालो धर्मस्योपार्जनेतव । कृतापकृतकर्मावै व्रतदानैर्विशुद्ध्यति ॥

अहं दास्यामि धान्यं वा वासांसि द्रविणं बहु ।
नित्यमाचर धर्मं त्वं ध्यायन्नित्यं महेश्वरम् ॥ २३ ॥

शबर उवाच

नैवाहं कामये वित्तं न धान्यं वस्त्रमेव च ।
यो यस्यैवान्नमश्नाति स तस्याऽश्नाति किल्बिषम् ॥ २४ ॥

राज्ञ्युवाच

कन्दमूलफलाहारो भ्रमित्वा भैक्ष्यमुत्तमम् । अवगाह्यसुतीर्थानि सर्वपापैःप्रमुच्यते

देवा ऊचुः

धरा धरित्री भूतानां भारोद्विग्ना निमज्जति ।
तामुद्धर हृषीकेश लोकान्संस्थापय स्थितौ ॥ १० ॥

एवमुक्तः सुरैः सर्वैः केशवः परमेश्वरः । वाराहं रूपमास्थाय सर्वयज्ञमयं विभुः ॥
दंष्ट्राकरालं पिङ्गाक्षं समाकुञ्चितमूर्द्धजम् ।
कृत्वाऽनन्तं पादपीठं दंष्ट्राग्रेणोद्धरन्भुवम् ॥ १२ ॥

सपर्वतवनामुर्वीं समुद्रपरिमेखलाम् । उद्धृत्य भगवान्विष्णुरुदीर्णः समजायत ॥
दर्शयन्पञ्चधात्मानमुत्तरे नर्मदातटे । तथाऽऽद्यं कोरलायां तु द्वितीयं योधनीपुरे
जयक्षेत्राभिधानेतु जयेतिपरिकीर्त्तितम् । असुरान्मोहयल्लिङ्गस्तृतीयःपरिकीर्त्तितः
पावनाय जगद्धेतोःस्थितोयस्माच्छशिप्रभः । अतस्तुनृपशार्दूलश्वेतइत्यभिधीयते
उद्धृत्य जगतां देवीमुदीर्णो भृगुकच्छके । ततःपञ्चमउदीर्णोवराह इति सञ्ज्ञितः
इति पञ्चवराहास्ते कथिताः पाण्डुनन्दन !। युगपद्दर्शनं चैषां ब्रह्महत्यांव्यपोहति
ज्येष्ठे मासि सिते पक्ष एकादश्यां विशेषतः ।
गत्वा ह्यादिवराहं तु सम्प्राप्ते दशमीदिने ॥ १९ ॥

हविष्यमन्नं भुञ्जीयाल्लघुसायं गते रवौ । रात्रौ जागरणं कुर्याद्वाराहेह्यादिसञ्ज्ञके
ततः प्रभाते ह्युषसि संस्नात्वा नर्मदाजले ।
सन्तर्प्य पितृदेवांश्च तिलैर्यवविमिश्रितैः ॥ २१ ॥

धेनुं दद्याद्द्विजेयोग्येसर्वाभरणभूषिताम् । निर्ममोनिरहङ्कारो दानंदद्याद्द्विजातये
गत्वा सम्पूजयेद्देवं वाराहं ह्यादिसञ्ज्ञितम् ।
अनेन विधिना पूज्य पश्चाद्गच्छेज्जयं त्वरन् ॥ २३ ॥

त्वरितंतुजयंगत्वापूर्वकंविधिमाचरेत् । अश्वंदद्याद्द्विजाग्र्यायजयपूर्वाभिनिर्गतम्
लिङ्गेचैव तिला देयाः श्वेते हिरण्यमेवच । उदीर्णेचभुवंदद्यात्पूर्वकं विधिमाचरेत्
अनस्तमित आदित्ये वराहान्पञ्चपश्यतः । यत्फलंलभते पार्थ! तदिहैकमनाःशृणु
ब्रह्महत्यासुरापानं स्तेयंगुर्वंगनागमः । एभिस्तुसहसंयोगो विश्वस्तानांचवञ्चनम्

स्वसृदुहितृभगिनीकुलदारोपबृंहणम् । आजन्ममरणाद्यावत्पापं भरतसत्तम !॥
तीर्थपञ्चकपूतस्य वैष्णवस्य विशेषतः । युगपच्चविनश्येत तूलराशिरिवानलात्

नारायणानुस्मरणाज्जपध्यानाद्विशेषतः ।
विप्रणश्यति पापानि गिरिकूटसमान्यपि ॥ ३० ॥

दृष्ट्वा पञ्चवराहान्वै पौरुषेमहतिस्थितः । आप्लवन्नर्मदातोयेश्राद्धंकृत्वायथाविधि
उदयास्तमनादर्वाग्यः पश्येल्लोटणेश्वरम् । कलेवरविमुक्तः स इत्येवं शङ्करोऽब्रवीत्

मुक्तिं प्रयाति सहसा दुष्प्रापां परमेश्वरीम् ।
पौरुषे क्रियमाणेऽपि न सिद्धिर्जायते यदि ॥ ३३ ॥

ब्रुवन्ति स्वर्गगमनमपि पापान्वितस्य च । यत्र तत्र गतस्यैव भवेत्पञ्चवराहकी ॥
ज्येष्ठस्यैकादशीतिथौ ध्रुवं तत्र वसेन्नरः । आदिं जयंतथा श्वेतं लिङ्गमुदीर्णमेवच

आश्रित्य तस्या द्रष्टव्या वराहास्तु यतस्ततः ।
ज्येष्ठस्यैकादशीतिथौ विष्णुना प्रभुविष्णुना ॥ ३६ ॥
वाराहं रूपमास्थाय उद्धृता धरणी विभो !।
पुण्यात्पुण्यतमा तेन ह्यशेषाघौघनाशिनी ॥ ३७ ॥

दृष्ट्वा पञ्चवराहान्वै क्रोडमुदीर्णरूपिणम् । पूजयित्वाविधानेन पश्चाज्जागरणञ्चरेत्

सपञ्चवर्त्तिकान्दीपान्घृतेनोज्ज्वाल्य भक्तितः ।
पुराणश्रवणैर्नृत्यैर्गीतवाद्यैः सुमङ्गलैः ॥ ३६ ॥
वेदजाप्यैः पवित्रैश्च क्षपयित्वा च शर्वरीम् ।
यत्पुण्यं लभते मर्त्यो ह्याजमीढ! श्रृणुष्व तत् ॥ ४० ॥

रेवाजलं पुण्यतमं पृथिव्यां तथा च देवो जगतां पतिर्हरिः ।
एकादशी पापहरा नरेन्द्र! बह्वायासैर्लभ्यते मानवानाम् ॥ ४१ ॥
एकैकशो ब्रह्महत्यादिकानि शक्तानि हन्तुं पापसङ्घानि राजन् ।
नैते सर्वे युगपद्वै समेता हन्तुं शक्ताः किन्न तद्ब्रूहि राजन् !॥ ४२ ॥
यथेदमुक्तं तव धर्मसूनो! श्रुतं च यच्छङ्कराच्चन्द्रमौलेः ।

श्रुत्वेदमिच्छन्मुच्यते सर्वपापैः पठन्पदं याति हि वृत्रशत्रोः ॥ ४३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदामाहात्म्ये उदीर्णवराहतीर्थमाहात्म्यवर्णनं
नामैकोननवत्युत्तरशततमोऽध्यायः ॥ १८९ ॥

---

# नवत्यधिकशततमोऽध्यायः

## चन्द्रहासतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल सोमतीर्थमनुत्तमम् । चन्द्रहासेतिविख्यातंसर्वदैवतपूजितम्
यत्र सिद्धिं परांप्राप्तः सोमो राजा सुरोत्तमः ॥ २ ॥

युधिष्ठिर उवाच

कथंसिद्धिमनुप्राप्तःसोमोराजाजगत्पतिः। तत्सर्वंश्रोतुमिच्छामिकथयस्वममाऽनघ

मार्कण्डेय उवाच

पुरा शप्तोमुनीन्द्रेण दक्षेणकिलभारत । असेवनाद्धि दाराणां क्षयरोगीभविष्यसि
उद्वाहितानां पत्नीनां ये न कुर्वन्ति सेवनम् ।
या निष्ठा जायते तेषां तां शृणुष्व नरोत्तम !॥ ५ ॥

ऋतुकालेतु नारीणांसेवनाज्जायतेसुतः । सुतात्स्वर्गश्चमोक्षश्चहीत्येवंश्रुतिनोदना
तत्कालोचितधर्मेण ये न सेवन्ति तां नराः ।
तेषां ब्रह्मघ्नजं पापं जायते नाऽत्र संशयः ॥ ७ ॥

तेन पापेन घोरेण वेष्टतो रौरवेवसेत् । तस्यतद्रुधिरं पादाःपिबन्तेकालमीप्सितम्
ततोऽवतीर्णकालेन यांयां योनिं प्रयास्यति ।
तस्यां तस्यां स दुष्टात्मा दुर्भगो जायते सदा ॥ ६ ॥

नारीणां तु सदा कामो ह्यधिकः परिवर्त्तते। विशेषेण ऋतोः काले भिद्यते कामसायकैः
परिभूता हि सा भर्त्रा ध्यायतेऽन्यं पतिं ततः।
तस्याः पुत्रः समुत्पन्नो ह्यटते कुलमुत्तमम्॥ ११॥
स्वर्गस्थास्तेन पितरः पूर्वजाता महीपते!। पतन्ति जातमात्रेण कुलटस्तेन चोच्यते
तेन कर्मविपाकेन क्षयरोगी शशी ह्यभूत्।
त्यक्त्वा लोकं सुरेन्द्राणां मर्त्त्यलोकमुपागतः॥ १३॥
तत्र तीर्थान्यनेकानि पुण्यान्यतनानि च। भ्रमित्वा नर्मदां प्राप्तः सर्वपापप्रणाशिनीम्
उपवासैस्तु दानानि व्रतानि नियमाश्च ये।
चचार द्वादशाब्दानि ततो मुक्तः स किल्बिषैः॥ १५॥
स्थापयित्वा महादेवं सर्वपातकनाशनम्। जगाम प्रभया पूर्णः सोमलोकमनुत्तमम्
येनैव स्थापितो देवः पूज्यते वर्षसंख्यया। तावद्युगसहस्राणि तस्य लोकं समश्नुते
तेन देवान्विधानोक्तान्स्थापयन्ति नरा भुवि।
अक्षयं चाव्ययं यस्मात्फलं भवति नाऽन्यथा॥ १८॥
सोमतीर्थे तु यः स्नात्वा पूजयेद्देवमीश्वरम्। जायते स नरो भूत्वा सोमवत्प्रियदर्शनः
चन्द्रप्रभासे यो गत्वा स्नानं विधिवदाचरेत्।
व्याधिना नाभिभूतः स्यात्क्षयरोगेण वा युतः॥ २०॥
चन्द्रहास्ये नरः स्नात्वा द्वादश्यां तु नरेश्वर। चतुर्दश्यामुपोष्यैव क्षीरस्य जुहुयाच्चरुम्
मन्त्रैः पञ्चभिरीशानं पुरुषस्त्र्यम्बकं यजेत्।
हविःशेषं स्वयं प्राश्य चन्द्रहास्येशमीक्षयेत्॥ २२॥
अनेन विधिना राजंस्तुष्टो देवो महेश्वरः। विधिना तीर्थयोगेन क्षयरोगाद्विमुच्यते
सप्तभिः सोमवारैर्यः स्नानं तत्र समाचरेत्। सर्वैकर्णकृताद्रोगान्मुच्यते पूजयञ्छिवम्
अक्षिरोगस्तथा राजंश्चन्द्रहास्ये विनश्यति।
चन्द्रहास्ये तु यो गत्वा ग्रहणे चन्द्रसूर्ययोः॥
स्नानं समाचरेद्भक्त्या मुच्यते सर्वपातकैः॥ २५॥

तत्रस्नानं चदानं चचन्द्रहास्ये शुभाशुभम् । कृतंनृपवरश्रेष्ठसर्वं भवतिचाक्षयम् ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
चन्द्रहास्ये तु ये स्नात्वा पश्यन्ति ग्रहणं नराः ॥ २७ ॥
वाचिकं मानसंपापं कर्मजंयत्पुराकृतम् । स्नानमात्रात्तु राजेन्द्रतत्रतीर्थेप्रणश्यति
बहवस्तन्न जानन्ति महामोहसमन्विताः । देहस्थइवसर्वेषां परमात्मेवसंस्थितम्
पश्चिमे सागरेगत्वा सोमतीर्थेतुयत्फलम् । तत्समग्रमवाप्नोतिचन्द्रहास्येनसंशयः
संक्रान्तौ च व्यतीपाते विषुवे चायने तथा ।
चन्द्रहास्ये नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ ३१ ॥
ते मूढास्ते दुराचारास्तेषां जन्म निरर्थकम् ।
चन्द्रहास्यं न जानन्ति नर्मदायां व्यवस्थितम् ॥ ३२ ॥
चन्द्रहास्ये तु यः कश्चित्संन्यासं कुरुते नृप !।
अनिवर्त्तिका गतिस्तस्य सोमलोकात्कदाचन ॥ ३३ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे चन्द्रहास्यतीर्थमाहात्म्यवर्णनं नाम नवत्युत्तरशततमोऽध्यायः

---

# एकनवत्यधिकशततमोऽध्यायः

## द्वादशादित्यतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

सिद्धेश्वरं ततोगच्छेत्तस्यैव तुसमीपतः । अमृतस्नाचितल्लिङ्गमाद्यं स्वायंभुवंतथा
दृष्टमात्रेण येनेह ह्यनृणो जायते नरः । पुरा वर्षशतं साग्रमाराध्य परमेश्वरम् ॥
प्राप्नुयुः परमां सिद्धिमादित्या द्वादशैव तु ।
अतः सिद्धेश्वरः प्रोक्तः सिद्धिदः सिद्धिकाङ्क्षिणाम् ॥ ३ ॥

युधिष्ठिर उवाच

कथं सिद्धेश्वरे प्राप्ताःसिद्धिं देवा द्विजोत्तम !।
आदित्या इति यच्चोक्तं तत्ते विस्मापनं कृतम् ॥ ४ ॥
तपस्युग्रे व्यवसिता आदित्याः केन हेतुना ।
संप्राप्तास्तु द्विजश्रेष्ठ सिद्धिं चैवाभिलाषिकीम् ॥ ५ ॥
संक्षिप्य तु मया पृष्टं विस्तराद् द्विज! शंस मे ॥ ६ ॥

मार्कण्डेय उवाच

अदितेर्द्वादशादित्या जाताः शक्रपुरोगमाः ।
इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणोर्यमा ॥ ७ ॥
विवस्वान्सविता पूषा ह्यंशुमान्विष्णुरेवच ।
त इमे द्वादशादित्या इच्छन्तो भास्करं पदम् ॥ ८ ॥
नर्मदातटमाश्रित्यतपस्युग्रेव्यवस्थिताः । सिद्धेश्वरेमहाराज काश्यपेयैर्महात्मभिः
परा सिद्धिरनुप्राप्ता द्वादशादित्यसञ्ज्ञितैः ।
स्थापितश्च जगद्धाता तस्मिंस्तीर्थे दिवाकरः ॥ १० ॥
स्वकीयांशविभागेन द्वादशादित्यसञ्ज्ञितैः ।
तदाप्रभृति तत्तीर्थं राजन्ख्यातिं गतं भुवि ॥ ११ ॥
प्रलये समनुप्राप्ते ह्यादित्याद्वादशैव ते । द्वादशादित्यतो राजन्संभवन्तियुगक्षये
इन्द्रस्तपति पूर्वेण धाता चैवाग्निगोचरे ।
गभस्तिपतिर्वैयाम्ये त्वष्टा नैरृ तदिङ्मुखः ॥ १३ ॥
वरुणः पश्चिमे भागे मित्रस्तु वायवे तथा ।
विष्णुश्च सौम्यदिग्भागे विवस्वानीशगोचरे ॥ १४ ॥
ऊर्ध्वतश्चैवसविताह्यधःपूषाविशोषयन् । अंशुमांस्तुतथा विष्णुर्मुखतोनिर्गतंजगत्
दहन्वै नरश्रेष्ठ बभ्रमुश्च इतस्ततः । यथैव ते महाराज! दहन्ति सकलं जगत् ॥
तथैव द्वादशादित्या भक्तानां भवसाधनाः ।

प्रातरुत्थाय यः स्नात्वा द्वादशादित्यसञ्ज्ञितम् ॥ १७ ॥
पश्यते देवदेवेशं शृणु तस्यैवयत्फलम् । वाचिकं मानसं पापं कर्मजं यत्पुराकृतम्
नश्यते तत्क्षणादेव द्वादशादित्यदर्शनम् । प्रदक्षिणं तुयः कुर्यात्तस्य देवस्यभारत
प्रदक्षिणीकृता तेन पृथिवीनाऽत्र संशयः । तत्रतीर्थे तुसप्तम्यामुपवासेनयत्फलम्
अन्यत्र सप्तसप्तम्यां लभन्तिनलभन्तिच । षष्ठ्यांवारे दैनकरे द्वादशादित्यदर्शनात्
प्रदक्षिणं तुयः कुर्यात्तस्य पापंतुनश्यति । अरोगी सप्तजन्मानि भवेद्धैनाऽत्रसंशयः
यस्तु प्रदक्षिणशतंदद्याद्भक्त्यादिनेदिने । दद्रूपिटककुष्ठानि मण्डलानिविचर्चिकाः
नश्यन्तिव्याधयःसर्वेगरुडेनेवपन्नगाः । पुत्रप्राप्तिर्भवेत्तस्य षष्ठ्या वासरसेवनात्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे द्वादशादित्यतीर्थमाहात्म्यवर्णनं नामैकनवत्युत्तरशततमोऽध्यायः

------

# द्विनवत्यधिकशततमोऽध्यायः

## श्रीपत्युत्पत्तिवर्णनम्

### श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं तात देवतीर्थमनुत्तमम् । दृष्ट्वा तु श्रीपतिं पापैर्मुच्यते मानवो भुवि॥
महर्षेस्तस्य जामाता भृगोर्देवो जनार्द्दनः ॥ २ ॥

### युधिष्ठिर उवाच

कोऽयंश्रियः पतिर्देवोदेवानामधिपोविभुः । कथंजन्माऽभवत्तस्य देवेषुत्रिषुवामुने
सम्बन्धी चकथं जातो भृगुणासहकेशवः । एतद्विस्तरतो ब्रह्मन्वक्तुमर्हसि भार्गव

### श्रीमार्कण्डेय उवाच

संक्षेपात्कथयिष्यामिसाध्यस्यचरितंमहत् । नहिविस्तरतोवक्तुंशक्ताःसर्वेमहर्षयः
नारायणस्य नाभ्यब्जाज्जातो देवश्चतुर्मुखः ।

तस्य दक्षोऽङ्गजो राजन्दक्षिणाङ्गुष्ठसंभवः ॥ ६ ॥
धर्मः स्तनान्तात्संजातस्तस्य पुत्रोऽभवत्किल ।
नारायणसहायोऽसावजोपिऽभरतर्षभ ! ॥ ७ ॥
मरुत्वती वसुर्ज्ञाना लम्बा भानुमती सती ।
संकल्पा च मुहूर्त्ता च साध्या विश्वावती ककुप् ॥ ८ ॥
धर्मपत्न्यो दशैवैता दाक्षायण्यो महाप्रभाः ।
तासां साध्या महाभागा पुत्रानजयन्नृप !॥ ९ ॥
नरो नारायणश्चैव हरिः कृष्णस्तथैव च । विष्णोरंशांशका ह्येते चत्वारो धर्मसूनवः
तथा नारायणनरौ गन्धमादनपर्वते । आत्मन्यात्मानमाधाय तेपतुः परमं तपः ॥
ध्यायमानावनौपम्यं स्वं कारणमकारणम् । वासुदेवमनिर्देश्यमप्रतर्क्यमनंतरम्
योगयुक्तौ महात्मानावास्थितावुरुतापसौ ।
तयोस्तपः प्रभावेण न तताप दिवाकरः ॥ १३ ॥
ववाह शङ्कितो वायुः सुखस्पर्शो ह्यशङ्कितः ।
शिशिरोऽभवदत्यर्थं ज्वलन्नपि विभावसुः ॥ १४ ॥
सिंहव्याघ्रादयः सौम्याश्चेरुः सहमृगैर्गिरौ ।
तयोर्गौरिव भारार्त्ता पृथिवी पृथिवीपते !॥ १५ ॥
चेरुश्च भूधराश्चैव चुक्षुभेच महोदधिः । देवाश्चस्वेषु धिष्ण्येषु निष्प्रभेषु हतप्रभाः
बभूवुरवनीपाल! परमं क्षोभमागताः ॥ १६ ॥
देवराजस्तथा शक्रःसन्तप्तस्तपसातयोः । युयोजाप्सरसस्तत्र तयोर्विघ्नचिकीर्षया

इन्द्र उवाच

रम्भेतिलोत्तमे कुब्जे घृताचि ललितेशुभे । प्रम्लोचेसुभ्रु सुम्लोचे सौरभेयिमहोद्धते
अलम्बुषे मिश्रकेशिपुण्डरीके वरूथिनि । विलोकनीयं बिभ्राणा वपुर्मन्मथबोधनम्
गन्धमादनमासाद्य कुरुध्वं वचनंमम । नरनारायणौ तत्र तपोदीक्षान्वितौ द्विजौ
तेपाते धर्मतनयौ तपः परमदुश्चरम् । तावस्माकं वरारोहाः कुर्वाणौ परमं तपः

कर्मातिशयदुःखार्त्तिप्रदावायतिनाशनौ । तद्गच्छतनभीःकार्या भवतीभिरिदंवचः
स्मरः सहायो भविता वसंतश्चवराङ्गनाः । रूपं वयः समालोक्यमदनोद्दीपनं परम्
कन्दर्पवशमभ्येति विवशः को न मानवः ॥ २३ ॥

मार्कण्डेय उवाच

इत्युक्त्वा देवराजेन मदनेन समंतदा । जग्मुरप्सरसः सर्वा वसन्तश्च महीपते !॥
गन्धमादनमासाद्य पुंस्कोकिलकुलाकुलम् ।
चचार माधवो रम्यं प्रोत्फुल्लवनपादपम् ॥ २५ ॥
प्रववौ दक्षिणाशायां मलयानुगतोऽनिलः । भृङ्गमालारुतरवै रमणीयमभूद्वनम् ॥
गन्धश्च सुरभिः सद्यो वनराजिसमुद्भवः । किन्नरोरगयक्षाणां बभूव घ्राणतर्पणः
वराङ्गनाश्च ताः सर्वा नरनारायणावृषी ।
विलोभयितुमारब्धा वागङ्गललितस्मितैः ॥ २८ ॥
जगौमनोहरं काचिन्ननर्त तत्र चाऽप्सराः । अवादयत्तथैवान्या मनोहरतरं नृप !॥
हावैर्भावैः स्मृतैर्हास्यैस्तथाऽन्या वल्गुभाषितैः ।
तयोः क्षोभाय तन्वङ्ग्यश्चक्रुरुद्यममङ्गनाः ॥ ३० ॥
तथापि नतयोःकश्चिन्मनसःपृथिवीपते!। विकारोऽभवदध्यात्मपारसंप्राप्तचेतसोः
निवातस्थौ यथा दीपावकम्पौ नृप! तिष्ठतः ।
वासुदेवार्प्पणस्वस्थे तथैव मनसी तयोः ॥ ३२ ॥
पूर्यमाणोऽपि चाम्भोभिर्भुवमन्यां महोदधिः ।
यथा न याति संक्षोभं तथा तन्मानसं क्वचित् ॥ ३३ ॥
सर्वभूतहितं ब्रह्मवासुदेवमयं परम् । मन्यमानौ न रागस्य द्वेषस्य च वशंगतौ ॥
स्मरोऽपि नशशाकाथ प्रवेष्टुं हृदयं तयोः । विद्यामयं दीपयुतमन्धकारइवालयम्
पुष्पोज्ज्वलांस्तरुवरान्वसन्तं दक्षिणानिलम् ।
ताश्चैवाप्सरसः सर्वाः कन्दर्पं च महामुनी ॥ ३६ ॥
यच्चारब्धं तपस्ताभ्यामात्मानं गन्धमादनम् । ददर्शातेऽखिलं रूपं ब्रह्मणःपुरुषर्षभ!

दाहायनामलोवह्नेर्नापःक्लेदायचाम्भसः। तद्द्रव्यमेवतद्द्रव्यविकारायन वै यतः
ततोविज्ञाय विज्ञाय परंब्रह्म स्वरूपतः। मधुकन्दर्पशोषित्सु विकारोनाऽभवत्तयोः
ततो गुरुतरं यत्नं वसन्तमदनौ नृप। चक्राते ताश्चतन्वंग्यस्तत्क्षोभाय पुनः पुनः॥
अथ नारायणो धैर्यंसन्धार्योदीर्णमानसः। ऊरोरुत्पादयामास वराङ्गीमबलांतदा
त्रैलोक्यसुन्दरीरत्नमशेषमवनीपते। गुणैर्लाघवमभ्येति यस्याः संदर्शनादनु॥ ४२

तां विलोक्य महीपाल! चकम्पे मनसाऽनिलः।
वसन्तो विस्मयं यातः स्मरः सस्मार किञ्चन॥ ४३॥

रम्भातिलोत्तमाद्याश्च वैलक्ष्यं देवयोषितः। न रेजुरवनीपाल तल्लक्ष्यहृदयेक्षणाः॥
ततःकामो वसन्तश्चपार्थिवाप्सरसश्चताः। प्रणम्य भगवन्तौतौतुष्टुवुर्मुनिसत्तमौ

वसन्तकामाप्सरस ऊचुः

प्रसीदतु जगद्धाता यस्य देवस्य मायया।
मोहिताः स्म विजानीमो नान्तरं विद्यते द्वयोः॥ ४६॥

प्रसीदतु स वां देवोयस्य रूपमिदंद्विधा। धामभूतस्य लोकानामनादेरप्रतिष्ठतः

नरनारायणौ देवौ शङ्खचक्रायुधावुभौ।
आस्तां प्रसादसुमुखावस्माकमपराधिनाम्॥ ४८॥

ध्यानं सर्वविद्यानां सर्वपापवनानलः। नारायणोऽतो भगवान्सर्वपापं व्यपोहतु

शार्ङ्गचिह्नायुधः श्रीमानात्मज्ञानमयोऽनघः।
नरः समस्तपापानि हतात्मा सर्वदेहिनाम्॥ ५०॥
जटाकलापबद्धोऽयमनयोर्नः क्षमावतोः।
सौम्यास्यदृष्टिः पापानि हन्तुं जन्मार्जितानि वै॥ ५१॥
तथाऽऽत्मविद्यादोषेण योऽपराधः कृतो महान्।
त्रैलोक्यवन्द्यौ यौ नाथौ विलोभयितुमागताः॥ ५२॥

सीद देव विज्ञानघन! मूढदृशामिव। भवन्ति सन्तः सततं स्वधर्मपरिपालकाः॥
द्भूतनः समुत्पन्नं यथा स्त्रीरत्नमुत्तमम्। त्वयिनारायणोत्पन्ना श्रेष्ठापारवतीमतिः

तेन सत्येन सत्यात्मन्परमात्मन्सनातन !। नारायण प्रसीदेश सर्वलोकपरायण !॥
प्रसन्नबुद्धे शान्तात्मन्प्रसन्नवदनेक्षण । प्रसीद योगिनामीश नर! सर्वगताऽच्युत!
नमस्यामो नरं देवं तथा नारायणं हरिम् । नमो नराय नम्याय नमोनारायणाय च

प्रसन्नानामनाथानां तथा नाथवतां प्रभो !।
शं करोतु नरोऽस्माकं शं नारायण! देहि नः ॥ ५८ ॥

मार्कण्डेय उवाच

एवमभ्यर्चितःस्तुत्या रागद्वेषादिवर्जितः । प्राहेशःसर्वभूतानां मध्येनारायणो नृप!

नारायण उवाच

स्वागतं माधवे कामे भवत्वप्सरसामपि ।
यत्कार्यमागतानां च इहास्माभिस्तदुच्यताम् ॥ ६० ॥
यूयं संसिद्धये नूनमस्माकं बलशत्रुणा ।
संप्रेषितास्ततोऽस्माकं नृत्ययोगादिदर्शनम् ॥ ६१ ॥

नवयं गीतनृत्येननाङ्गचेष्टादिभाषितैः । लुब्धावैविषयैर्मन्ये विषयादारुणात्मकाः

शब्दादिसङ्गदुष्टानि यदा नाक्षाणि नः शुभाः ।
तदा नृत्यादयो भावाः कथं लोभप्रदायिनः ॥ ६३ ॥
ते सिद्धाः स्म न वै साध्या भवतीनां स्मरस्य च ।
माधवस्य च शक्रोऽपि स्वास्थ्यं यात्वविशङ्किताः ॥ ६४ ॥

योऽसौ परश्च परमः पुरुषः परमेश्वरः । परमात्मा समस्तस्यस्थावरस्यचरस्य च
उत्पत्तिहेतुरेते च यस्मिन्सर्वंप्रलीयते । सर्वावासीति देवत्वाद्वासुदेवेत्युदाहृतः

वयमंशांशकास्तस्य चतुर्व्यूहस्य मानिनः ।
तदादेशितवर्त्मानौ जगद्बोधाय देहिनाम् ॥ ६७ ॥

तत्सर्वभूतंसर्वेशंसर्वत्र समदर्शिनम् । कुतः पश्यन्तौ रागादीन्करिष्यामोविभेदिनः
वसन्ते मयि चेन्द्रे चभवतीषु तथास्मरे । यदासएव भूतात्मा तदाद्वेषादयःकथम्

तन्मयाऽन्यविभक्तानि यदा सर्वेषु जन्तुषु ।

सर्वेश्वरेश्वरो विष्णुः कुतो रागादयस्ततः ॥ ७० ॥
ब्रह्माणमिन्द्रमीशानमादित्यमरुतोऽखिलान् ।
विश्वेदेवानृषीन्साध्यान्वसून्पितृगणांस्तथा ॥ ७१ ॥
क्षराक्षसभूतादीन्नागान्सर्पान्सरीसृपान् । मनुष्यपक्षिगोरूपगजसिंहजलेचरान्
मक्षिकामशकान्दंशाञ्छलभाञ्जलजान्कृमीन् ।
गुल्मवृक्षलतावल्लीत्वक्सारतृणजातिषु ॥ ७३ ॥
चकिञ्चिदद्दृश्यं वाद्दृश्यंवात्रिदशाङ्गनाः । मन्यध्वंजातमेकस्य तत्सर्वंपरमात्मनः
जायमानः कथं विष्णुमात्मानं परमं चयम् ।
रागद्वेषौ तथा लोभं कः कुर्यादमराङ्गनाः ॥ ७५ ॥
र्वभूतमये विष्णौ सर्वगे सर्वधातरि । निपात्यतं पृथग्भूते कुतोरागादिकोगुणः
वमस्मासु युष्मासु सर्वभूतेषु चाबलाः । तन्मयैकत्वभूतेषु रागाद्यवसरः कुतः ॥
सम्यग्दृष्टिरियं प्रोक्ता समस्तैक्यावलोकिनी ।
पृथग्विज्ञानमात्रैव लोकसंव्यवहारवत् ॥ ७८ ॥
भूतेन्द्रियान्तः करणप्रधानपुरुषात्मकम् । जगद्वैद्यो तदखिलं तदा भेदः किमात्मकः
भवन्ति लयमायान्ति समुद्रसलिलोर्मयः ।
न वारिभेदतो भिन्नास्तथैवैक्यादिदं जगत् ॥ ८० ॥
यथाग्नेरर्चिषः पीताः पिङ्गलारुणधूसराः ।
तथाऽपि नाऽग्नितो भिन्नास्तथैतद् ब्रह्मणो जगत् ॥ ८१ ॥
भवतीभिश्च यत्क्षोभमस्माकं सपुरन्दरः । कारयत्यसदेतच्च विवेकाचारचेतसाम्
भवन्त्यः सच देवेन्द्रो लोकाश्चससुरासुराः । समुद्राद्रिवनोपेतामद्देहान्तरगोचराः
यथेयं चारुसर्वाङ्गी भवतीनां मयाऽग्रतः ।
दर्शिता दर्शयिष्यामि तथा चैवाऽखिलं जगत् ॥ ८४ ॥
प्रयातु शक्रो मा गर्वमिन्द्रत्वं कस्य सुस्थिरम् ।
यूयं च मा स्मयं यात सन्ति रूपान्विताः स्त्रियः ॥ ८५ ॥

किं सुरूपं कुरूपं वा यदा भेदो न दृश्यते । तारतम्यं सुरूपत्वे सततं भिन्नदर्शनात्
भवतीनां स्मयं मत्वा रूपौदार्यगुणोद्भवम् । मयेयंदर्शिता तन्वी ततस्तुशममेष्यथ

यस्मान्मदूरोर्निष्पन्ना त्वियमिन्दीवरेक्षणा ।
उर्वशीनाम कल्याणी भविष्यति वराप्सराः ॥ ८८ ॥
तदियं देवराजस्य नीयतां वरवर्णिनी ।
भवत्यस्तेन चाऽऽस्माकं प्रेषिताः प्रीतिमिच्छता ॥ ८६ ॥
वक्तव्यश्च सहस्राक्षो नाऽस्माकं भोगकारणात् ।
तपश्चर्या न वाप्राप्यफलं प्राप्तुमभीप्सता ॥ ६० ॥

सन्मार्गमस्य जगतो दर्शयिष्येकरोम्यहम् । तथानरेण सहितो जगतःपालनोद्यतः
यदि कश्चित्तवाबाधां करोतित्रिदशेश्वर !। तमहं वारयिष्यामिनिवृत्तोभववासव

कर्त्ताऽसि चेत्त्वमाबाधां न दुष्टस्येह कस्यचित् ।
तं चाऽपि शास्ता तदहं प्रवर्त्तिष्याम्यसंशयम् ॥ ६३ ॥
एतज्ज्ञात्वा न सन्तापस्त्वया कार्यो हि मां प्रति ।
उपकाराय जगतामवतीर्णोऽस्मि वासव !॥ ६४ ॥

या चेयमुर्वशी मत्तःसमुद्भूतापुरन्दर !। त्रेताग्निहेतुभूतेयं एवं प्राप्य भविष्यति॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये श्रीपत्युत्पत्तिवर्णनंनाम द्विनवत्युत्तरशततमोऽध्यायः

---

# त्रिनवत्यधिकशततमोऽध्यायः

## श्रीपतिमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

इत्युक्तेऽप्सरसः सर्वाःप्रणिपत्यपुनःपुनः। ऊचुर्नारायणं देवं तद्दर्शनसमीहया ॥ १

वसन्तकामाप्सरस उचुः

भगवन्भवता योऽयमुपदेशो हितार्थिना।
प्रोक्तः स सर्वो विज्ञातो माहात्म्यं विदितं च ते ॥ २ ॥

यत्त्वेतद्भवता प्रोक्तंप्रसन्नेनान्तरात्मना। दर्शितेयंविशालाक्षीदर्शयिष्यामिवोजगत्
तत्रार्थे सर्वभावेन प्रपन्नानांजगत्पते॥ दर्शयात्मानमखिलं दर्शितेयं यथोर्वशी ॥

यदि देवाऽपराधेपि नाऽस्मासु कुपितं तव।
नमस्ते जगतामीश दर्शयाऽऽत्मानमात्मना ॥ ५ ॥

नारायण उवाच

पश्यतेहाऽखिलाँल्लोकान्मम देहे सुराङ्गनाः।
मधुं मदनमात्मानं यच्चान्यद् द्रष्टुमिच्छथ ॥ ६ ॥

श्रीमार्कण्डेय उवाच

इत्युक्त्वाभगवान्देवस्तदानारायणोनृप। उच्चैर्जहासस्वनवत्तत्राऽभूदखिलंजगत्

ब्रह्मा प्रजापतिः शक्रः सह रुद्रैः पिनाकधृक्।
आदित्या वसवः साध्या विश्वेदेवा महर्षयः ॥ ८ ॥

नासत्यदस्रावनिलः सर्वशश्च तथाग्नयः। यक्षगन्धर्वसिद्धाश्च पिशाचोरगकिन्नराः

समस्ताप्सरसो विद्याःसाङ्गा वेदास्तदुक्तयः।
मनुष्याः पशवः कीटाः पक्षिणः पादपास्तथा ॥ १० ॥

सरीसृपाश्चाथ सूक्ष्मा यच्चान्यज्जीवसञ्ज्ञितम्।

समुद्राः सकलाः शैलाः सरितः काननानि च ॥ ११ ॥
द्वीपान्यशेषाणि तथातथा सर्वसरांसि च ।  नगरग्रामपूर्णा च मेदिनीमेदिनीपते
देवाङ्गनाभिर्देवस्य देहे दृष्टं महात्मनः ॥ १२ ॥
नक्षत्रग्रहताराभिःसुसंपूर्णंनभस्तलम् । ददृशुस्ताःसुचार्वंग्यस्तस्यान्तर्विश्वरूपिणः
ऊर्ध्वंनतिर्यङ्ङाधस्ताद्यदांतस्तस्यदृश्यते । तमनंतमनादिंचततस्तास्तुष्टुवुःप्रभुम्
मदनेनसमं सर्वामधुनाच वराङ्गनाः । ससाध्वसाभक्तिपराः परं विस्मयमागताः

वसन्तकामाप्सरस ऊचुः

पश्याम नादिं तव देव! नान्तं न मध्यमव्याकृतरूपपारम् ।
परायणं त्वां जगतामनन्तं नताः स्म नारायणमात्मभूतम् ॥ १६ ॥
महीनभोवायुजलाग्नयस्त्वं शब्दादिरूपस्तु परापरात्मन् ।
त्वत्तो भवत्यच्युत! सर्वमेतद्भेदादिरूपोऽसि विभो! त्वमात्मन् !॥ १७ ॥
द्रष्टासि रूपस्य परस्य वेत्ता श्रोता च शब्दस्य हरे! त्वमेकः ।
स्रष्टा भवान्सर्वगतोऽखिलस्य घ्राता च गन्धस्य पृथक्छरीरी ॥ १८ ॥
सुरेषु सर्वेषु न सोऽस्ति कश्चिन्मनुष्यलोकेषु न सोऽस्ति कश्चित् ।
पश्वादिवर्गेषु न सोऽस्ति कश्चिद्यो नांशभूतस्तव देवदेव !॥ १९ ॥
ब्रह्माम्बुधीदुप्रमुखानि सौम्य शक्रादि रूपाणि तवोत्तमानि ।
समुद्ररूपं तव धैर्यवत्सु तेजः स्वरूपेषु रविस्तथाग्निः ॥ २० ॥
क्षमाधनेषु क्षितिरूपमग्र्यं शीघ्रेषु शीघ्रो बलवत्सु वायुः ।
मनुष्यरूपं तव राजवेषो मूढेषु सर्वेश्वर! पादपोऽसि ॥ २१ ॥
सर्वानयेष्वच्युत दानवस्त्वं सनत्सुजातश्च विवेकवत्सु ।
रसस्वरूपेण जलस्थितोऽसि गन्धस्वरूपं भवतो धरित्र्याम् ॥ २२ ॥
दृश्यस्वरूपश्च हुताशनस्त्वं स्पर्शस्वरूपं भवतः समीरे ।
शब्दादिकं ते नभसि स्वरूपं मन्तव्यरूपो मनसि प्रभो! त्वम् ॥ २३ ॥
बोधस्वरूपश्च मतौ त्वमेकः सर्वत्र! सर्वेश्वर! सर्वभूत !।

पश्यामि ते नाभिसरोजमध्ये ब्रह्माणमीशं च हरं भृकुट्याम् ॥ २४ ॥
तवाऽश्विनौ कर्णगतौ समस्तास्तवाऽऽस्थिता बाहुषु लोकपालाः ।
घ्राणोऽनिलो नेत्रगतौ रवीन्दू जिह्वा च ते नाथ! सरस्वतीयम् ॥ २५ ॥
पादौ धरित्री जठरं समस्ताँल्लोकान्हृषीकेश! विलोकयामः ।
जङ्घे वयं पादतलाङ्गुलीषु पिशाचयक्षोरगसिद्धसङ्घाः ॥ २६ ॥
पुंस्त्वे प्रजानां पतिरोष्ठयुग्मे प्रतिष्ठितास्ते क्रतवः समस्ताः ।
सर्वे वयं ते दशनेषु देव! दंष्ट्रासु देवा ह्यभवंश्च दन्ताः ॥ २७ ॥
रोमाण्यशेषास्तव देवसंघा विद्याधरा नाथ तवाङ्घ्रिरेखाः ।
साङ्गाः समस्तास्तव देव! वेदाः समास्थिताः सन्धिषु बाहुभूताः ॥ २८ ॥
वराहभूतं धरणीधरस्ते नृसिंहरूपं च सदा करालम् ।
पश्याम ते वाजिशिरस्तथोच्चैस्त्रिविक्रमे यच्च तदाऽप्रमेयम् ॥ २९ ॥
अमी समुद्रास्तव देव ! देहे मौर्वालयः शैलधरास्तथाऽमी ।
इमाश्च गङ्गाप्रमुखाः स्रवन्त्यो द्वीपाण्यशेषाणि वनादिदेशाः ॥ ३० ॥
स्तुन्वति चेमे मुनयस्तवेश देहे स्थितास्त्वन्महिमानमग्रयम् ।
त्वामीशितारं जगतामनन्तं यजन्ति यज्ञैः किल यज्विनोऽमी ॥ ३१ ॥
त्वत्तोऽहि सौम्यं जगतीह किञ्चित्त्वतो न रौद्रंच समस्तमूर्ते !।
त्वत्तो न शीतं च न केशवोष्णं सर्वस्वरूपातिशयी त्वमेव ॥ ३२ ॥

प्रसीद सर्वेश्वर! सर्वभूत! सनातनात्मन्परमेश्वरेश ।
त्वन्मायया मोहितमानसाभिर्यत्तेऽपराद्धं तदिदं क्षमस्व ॥ ३३ ॥
किं वाऽपराद्धं तव देवदेव! यन्मायया नो हृदयं तवाऽपि ।
मायाभिशंकिप्रणतार्त्तिहंतर्मनो हि नो विह्वलतामुपैति ॥ ३४ ॥
न तेऽपराद्धं यदि तेऽपराद्धमस्माभिरुन्मार्गविवर्त्तिनीभिः ।
तत्क्षम्यतां सृष्टिकृतस्तवैव देवाऽपराधः सृजतो विवेकम् ॥ ३५ ॥

नमो नमस्ते गोविन्द नारायण जनार्द्दन !। त्वन्नामस्मरणात्पापमशेषंनः प्रणश्यतु

नमोऽनन्त! नमस्तुभ्यं विश्वात्मन्विश्वभावन !।
त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ ३७ ॥
वरेण्य यज्ञपुरुष! प्रजापालन वामन !। त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥
नमोऽस्तु तेऽब्जनाभाय प्रजापतिकृतेहर !। त्वन्नामस्मरणात्पापशेषं नः प्रणश्यतु
संसारार्णवपोताय नमस्तुभ्यमधोक्षज !। त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु
नमःपरस्मैश्रीशायवासुदेवायवेधसे । स्वेच्छयागुणयुक्ताय सर्गस्थित्यन्तकारिणे
उपसंहर विश्वात्मन्रूपमेतत्सनातनम् । वर्धमानं न नो द्रष्टुं समर्थं चक्षुरीश्वर !॥
प्रलयाग्निसहस्रस्य समा दीप्तिस्तवाऽच्युत ।
प्रमाणेन दिशो भूमिर्गगनं च समावृतम् ॥ ४३ ॥
नविद्मः कुत्र वर्त्तामो भवान्नाथोपलक्ष्यते । सर्वं जगदिहैकस्थं पिण्डितंलक्षयामहे
किं वर्णयामो रूपंते किं प्रमाणमिदंहरे !। माहात्म्यं किं नुतेदेवयज्जिह्वायानगोचरे
वक्तारो वाऽयुतेनापि बुद्धीनामयुतायुतैः । गुणनिर्वर्णनं नाथ कर्तुं तव न शक्यते
तदेतद्दर्शितं रूपं प्रसादः परमः कृतः । छन्दतो जगतामीश! तदेतदुपसंहर ॥ ४७ ॥

श्रीमार्कण्डेय उवाच

इत्येवं संस्तुतस्ताभिरप्सरोभिर्जनार्द्दनः ।
दिव्यज्ञानोपपन्नानां तासां प्रत्यक्षमीश्वरः ॥ ४८ ॥
विवेश सर्वभूतानि स्वैरंशैर्भूतभावनः । तं दृष्ट्वा सर्वभूतेषु लीयमानमधोक्षजम् ॥
विस्मयंपरमंचक्रुःसमस्तादेवयोषितः । सचसर्वेश्वरः शैलान्पादपान्सागरान्भुवम्
जलमग्निं तथा वायुमाकाशं च विवेश ह ।
काले दिक्ष्वथ सर्वात्मा ह्यात्मनश्चाऽन्यथाऽपि वा ॥ ५१ ॥
आत्मरूपस्थितंस्वेन महिम्ना भावयञ्जगत् । देवदानवरक्षांसि यक्षविद्याधरोरगाः
मनुष्यपशुकीटादिमृगपश्वन्तरिक्षगाः । येऽन्तरिक्षेतथाभूमौदिवि ये च जलाश्रयाः
तान्विवेश स विश्वात्मापुनस्तद्रूपमास्थितः । नरेणसार्धंयत्ताभिर्दृष्टपूर्वमरिन्दम
ताः परं विस्मयंजग्मुःसर्वास्त्रिदशयोषितः । प्रणेमुःसाध्वसात्पाण्डुवदनान्नृपसत्तम

नारायणोऽपि भगवानाह तास्त्रिदशाङ्गनाः ॥ ५६ ॥

नारायण उवाच

यतामुर्वशीभद्रा यत्राऽसौ त्रिदशेश्वरः। भवतीनां हितार्थाय सर्वभूतेष्वसाविति
तमुत्पादितं भूयो लयं भूतेषु कुर्वता। यद्वच्छध्वंसमस्तोऽयं भूतग्रामोमदंशकः

अहमध्यात्मभूतस्य वासुदेवस्य योगिनः।
अस्मात्परतरं नाऽस्ति योऽनन्तःपरिपठ्यते ॥ ५६ ॥

जं सर्वभूतेशं जानीत परमं पदम्। अहं भवत्यो देवाश्च मनुष्याः पशवश्च ये ॥

एतत्सर्वमनन्तस्य वासुदेवस्य वै कृतम् ॥ ६० ॥

ं ज्ञात्वा समं सर्वं सदेवासुरमानुषम्। सपश्वादिगुणं चैव द्रष्टव्यंत्रिदशाङ्गनाः

मार्कण्डेय उवाच

इत्युक्तास्तेन देवेन समस्तास्ताः सुरस्त्रियः।
प्रणम्य तौ समदनाः सवसन्ताश्च पार्थिव !॥ ६२ ॥

दाय चोर्वशीं भूयो देवराजमुपागताः। आचख्युश्च यथावृत्तं देवराजायतत्तथा

मार्कण्डेय उवाच

था त्वमपि राजेन्द्र! सर्वभूतेषु केशवम्। चिन्तयन्समतां गच्छसमतैव हि मुक्तये
तश्चैवं विशेषेण भूतेषु परमेश्वरम्। वासुदेव कथं दोषाँल्लोभादीन्न प्रहास्यसि

सर्वभूतानि गोविन्दाद्यदा नाऽन्यानि भूपते !।
तदा वैरादयो भावाः क्रियतां न तु पुत्रक !॥ ६६ ॥

त पश्य जगत्सर्वं वासुदेवात्मकं नृप !। एतदेव हि कृष्णेन रूपमाविष्कृतं नृप !
मेश्वरेति यद्रूपं तदेतत्कथितं तव। जन्मादिभावरहितं तद्विष्णोः परमम्पदम् ॥
क्षेपेणाऽथ भूपाल!श्रूयतां यद्वदामि ते। यन्मतंपुरुषः कृत्वा परं निर्वाणमृच्छति

सर्वो विष्णुसमासो हि भावाभावौ च तन्मयौ।
सदसत्सर्वमीशोऽसौ महादेवः परं पदम् ॥ ७० ॥

वजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम्।

विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे श्रीपतिमाहात्म्यवर्णनंनाम त्रिनवत्युत्तरशततमोऽध्यायः ॥ १९३ ॥

---

# चतुर्नवत्यधिकशततमोऽध्यायः

## श्रीपतिविवाहवर्णनम्

### श्रीमार्कण्डेय उवाच

तच्छ्रुत्वानन्तदेवेन विश्वरूपमुदाहृतम् । देवराजस्तथा देवाः परं विस्मयमागता

दृष्ट्वा चाप्सरसं पुण्यामुर्व्वशीं कमलाननाम् ।
सन्त्रस्तो विस्मितश्चाऽभूदिन्द्रो राजश्रिया वृतः ॥ २
न किञ्चिदुत्तरं वाक्यमुक्त्वाञ्जोषमास्थितः ।
इति वृत्तान्तभूतं हि नारायणविचेष्टितम् ॥ ३ ॥
भृगोः खा (ख्या) त्यां समुत्पन्ना लक्ष्मीः श्रुत्वा तु वै नृप !।
वैश्वरूपं परं रूपं विस्मिताऽचिन्तयत्तदा ॥ ४ ॥

केनोपायेन स स्यान्मे भर्त्ता नारायणः प्रभुः । व्रतेनतपसावाऽपिदानेननियमेन
वृद्धानांसेवनेनाऽथदेवताराधनेनवा । इति चिन्तापरांकन्यांसतीज्ञात्वायुधिष्ठि

प्राह प्राप्तो मया भर्त्ता शङ्करस्तपसा किल ।
प्रजापतिश्च गायत्र्या ह्यन्याभिरभिवाञ्छिताः ॥ ७ ॥

तपसैवहि ते प्राप्यस्तस्मात्तच्चर सुव्रते !। तपस्त्वंहिमहच्चोग्रं सर्ववाञ्छितदायक

### मार्कण्डेय उवाच

सागरान्तं समासाद्य लक्ष्मीः परपुरञ्जय । चचारविपुलं कालं तपः परमदुश्चरम्

स्थाणुवत्संस्थिता साऽभूद्दिव्यं वर्षसहस्रकम् ।

तत इन्द्रादयो देवाः शङ्खचक्रगदाधराः ॥ १० ॥
भूत्वा जग्मुस्तदर्थं ते सा तु पृष्टवती सुरान् ।
विश्वरूपं वैष्णवं यत्तद्दर्शयत मा चिरम् ॥ ११ ॥
विलक्षा व्रीडिता देवा गत्वा नारायणं तदा ।
अब्रुवन्वैश्वरूपं नो शक्ता दर्शयितुं वयम् ॥ १२ ॥
तो यथेष्टं ते जग्मुः स च विष्णुरचिन्तयत् । उग्ररूपास्थितादेवीदेहंदहतिभार्गवी
तां तस्मात्तत्र गत्वाऽहं वरं दत्त्वा तु वाञ्छितम् ।
पुनस्तपः करिष्यामि दर्शयिष्यामि वा पुनः ॥
वैष्णवं विश्वरूपं यद्दुर्दर्श्यं देवदानवैः ॥ १४ ॥

मार्कण्डेय उवाच

ततो गत्वा हृषीकेश सागरान्तस्थितां श्रियम् ।
प्राह तुष्टोऽस्मि ते देवि! वरं वृणु यथेप्सितम् ॥ १५ ॥

श्रीरुवाच

दि तुष्टोऽसि मे देव प्रपन्नाया जनार्द्दन ! । तदादर्शयतद्दृष्टमप्सरोभिस्तवाऽनघ
श्वरूपमनन्तं च भूतभावन केशव !। गन्धमादनमासाद्य कृतं यच्च तपस्त्वया ॥
तद्वदस्व विभो! विष्णो! न मिथ्या यदि केशव !।
श्रद्दधामि न चैवाऽहं रूपस्याऽस्य कथञ्चन ॥ १८ ॥
ष्ठिरुभिर्यक्षरक्षोभिर्मायाचारिप्रचारिभिः । छन्दिता मम जानद्भिर्भावमन्तर्गतं हरौ
भूत्वा विष्णुस्वरूपास्ते चक्रिणश्च चतुर्भुजाः ।
सुव्रीडिताऽऽगताः सर्वे विश्वरूपो सहायतः ॥ २० ॥

मार्कण्डेय उवाच

रायणोऽथभगवाञ्छङ्खचक्रगदाभृतम् । तयातथोक्तस्तद्रूपंमुक्त्वावं सुरपूजितम्
परं यथोक्तं वै विश्वरूपमदर्शत । दर्शयित्वा वचः प्राह पञ्चरात्रविधानतः ॥
योऽर्चयिष्यति मां नित्यं स पूज्यः स च पूजितः ।

धनधान्यसमायुक्तः सर्वभोगसमन्वितः ॥ २३ ॥
मूलं हि सर्वधर्माणां ब्रह्मचर्यंपरन्तपः । तेनाहंतत्रस्थास्यामिमूलश्रीपति सञ्ज्ञितः
मूलश्रीः प्रोच्यतेब्राह्मी ब्रह्मचर्यस्वरूपिणी । सर्वयोगमयीपुण्या सर्वपापहरीशुभा
पतिस्तस्याः प्रभुरहं वरदः प्राणिनां प्रिये !।
रेवाजले नरः स्नात्वा योऽर्चयेन्मां यतव्रतः ॥ २६ ॥
मूलश्रीपतिनामानं वाञ्छितं प्राप्नुयात्फलम् ।
दानानि तत्र यो दद्यान्महादानानि च प्रिये !॥ २७ ॥
सहस्रगुणितं पुण्यमन्यस्थानादवाप्यते । दृष्टं त्वयातत्रदेशे सम्यक्चैवावधारितम्
तदर्चित्वा परान्कामानाप्स्यसि त्वं न संशयः ॥ २८ ॥
वरं वृणीष्व देवेशि! वाञ्छितं दुर्लभं सुरैः । दुर्गसंसारकान्तारपतितैः परमेश्वरि

श्रीरुवाच

नारायण जगद्धातर्नारायण जगत्पते !। नारायण परब्रह्म! नारायणपरायण !॥३०
प्रसीद पाहि मां भक्त्या सम्यक्सर्गे नियोजय ।
प्रियो ह्यसि प्रियाऽहं ते यथा स्यां तत्तथा कुरु ॥ ३१ ॥
गृहं धर्मार्थकामानां कारणं देव सम्मतम् ।
तदास्थायाऽऽश्रमं पुण्यं मां श्रेयसि नियोजय ॥ ३२ ॥

नारायण उवाच

नारायणगिरा देवि! विज्ञतोऽस्मि यतस्त्वया ।
नारायणगिरिर्नाम तेन मेऽत्र भविष्यति ॥ ३३ ॥
नारायणस्मृतौ याति दुरितं जन्मकोटिजम् ।
यस्माद्गिरति तस्माच्च गिरिरित्येव शब्दितम् ॥ ३४ ॥
तस्मात्सर्वाश्रयो देवि गिरिः पर्वतराड् भवेत् ।
सुरासुरमनुष्याणां यथाऽहमपि चाऽऽश्रयः ॥ ३५ ॥
य एतत्पूजयिष्यन्ति मण्डलस्थं परं मम । नारायणगिरिर्नाम देवरूपं शुभेक्षणे ॥

ते दिव्यज्ञानसम्पन्ना दिव्यदेहविचेष्टिताः ।
दिव्यं लोकमवाप्स्यन्ति दिव्यभोगसमन्विताः ॥ ३७ ॥

मार्कण्डेय उवाच

तयोरेवं सम्वदतोर्देवा इन्द्रपुरोगमाः । समागता वनोद्देशं सागरान्ते महर्षयः ॥
ततो भृगुं देवराजो नारायणविचिन्तितम् ।
वव्रे ज्ञात्वा तु तत्कन्यां धर्मात्मा स ददौ च ताम् ॥ ३९ ॥
र्मोऽपि विधिवद्वत्स! विवाहं समकारयत् । देवदेवस्यराजर्षे देवतार्थे समाहितः

युधिष्ठिर उवाच

धर्मो विवाहमकरोद्विधिवद्यत्त्वयोदितम् ।
को विधिस्तत्र का दत्ता दक्षिणा भृगुणाऽपि च ॥ ४१ ॥
विवाहयज्ञे समभूत्स्रुक्स्रुवग्रहणेचकः । ऋत्विजःकेसदस्याश्च तस्यासन्द्विजसत्तम
किं तस्याऽवभृथं त्वासीत्तत्सर्वं वद विस्तरात् ।
त्वद्वाक्यामृतपानेन तृप्तिर्मम न विद्यते ॥ ४३ ॥

मार्कण्डेय उवाच

रायणविवाहस्य यज्ञस्य च युधिष्ठिर !। तपसस्तस्यदेवस्यसम्यगाचरणस्यच
वक्तुं समर्थो न गुणान्ब्रह्माऽपि परमेश्वरः ।
तथाप्युद्देशतो वच्मि शृणु भूत्वा समाहितः ॥ ४५ ॥
ह्मा सप्तर्षयस्तत्र स्रुक्स्रुवग्रहणे रताः । अग्नीञ्जुहुविरे राजन्वेदिर्धात्री ससागरा
ददुः समुद्रा रत्नानि ब्रह्मर्षिभ्यो नृपोत्तम !।
धनदोऽपि ददौ वित्तं सर्वब्राह्मणवाञ्छितम् ॥ ४७ ॥
श्वकर्माऽपि देवानांब्रह्मर्षीणांपरन्तप । वेश्मानिसुविचित्राणिसर्वरत्नमयानिच
त्वा प्रदर्शयामासदेवेन्द्राय यशस्विने । शतक्रतुस्ततोविप्रान्कपिष्ठलपुरोगमान्
शौनकादींश्च पप्रच्छ बाष्कलाञ्छागलानपि ।
आत्रेयानपि राजेन्द्र! वृणुध्वमभिवाञ्छितम् ॥ ५० ॥

दृष्ट्वातेचित्ररत्नानिप्राहुःसर्वेश्वरेश्वरम् । देवानांच ऋषीणां च सङ्गमोऽयंसुपुण्यकृत्

अस्मिन्पुण्ये सुरेशान! वस्तुं वाञ्छामहे सदा ।

शतक्रतुः प्राह पुनर्वासो वोऽत्र भविष्यति ॥

सत्यधर्मरता यूयं यावत्कालं भविष्यथ ॥ ५२ ॥

मार्कण्डेय उवाच

पृष्टंयद्राजशार्दूल केमखे होत्रिणोऽभवन् । तत्प्रोच्यमानमधुनाशृणुभूत्वासमाहितः

सनत्कुमारप्रमुखाः सदस्यास्तस्य चाऽभवन् ।

औद्गात्रमत्र्यङ्गिरसौ मतीश्चिश्च चकार ह ॥ ५४ ॥

हौत्रं धर्मवशिष्ठौच ब्रह्मत्वंसनकोमुनिः । षट्त्रिंशद्ग्रामसाहस्रंप्रादात्तेभ्यःशतक्रतु

लक्ष्मीर्भर्त्रा च संयुक्ताऽभवत्तत्कृतवान्प्रभुः । ब्रह्मणोजुह्वतोवह्नियावद्देशस्थितैःसुरै

दृष्टं ललाटं देशेऽसौ ललाट इति सञ्ज्ञितः । स देशःश्रीपतेःक्षेत्रंपुण्यंदेवर्षिसेवितम्

सर्वाश्चर्यमयंदिव्यं दिव्यसिद्धिसमन्वितम् ।

ब्राह्मणानां ततः पङ्क्तिं निवेशयितुमुद्यता ॥ ५८ ॥

लक्ष्मीः श्रीपतिनामानमाह देवं वचस्तदा ।

श्रीरुवाच

य एते ब्राह्मणाः शिष्या भृग्वादीनां यतव्रताः ।

तान्निवेशयितुमिच्छामि त्वत्प्रसादादधोक्षज !।

मरीच्यादयः सुरेन्द्रेण स्थापिता गरुडध्वज !॥ ६० ॥

नैष्ठिकव्रतिनो विप्राबहवोऽत्रयतव्रताः । प्राजापत्येव्रते ब्राह्मेकेचिदत्रव्यवस्थिताः

तानहं स्थापयिष्यामि त्वत्प्रसादादधोक्षज !॥ ६१ ॥

मार्कण्डेय उवाच

ततः कौतूहलधरोभगवान्वृषभध्वजः । पप्रच्छःव्रतिनःसर्वान्वृत्तिभेदेव्यवस्थितान्

नारदोऽपिमहादेवमुपेत्यचसतीपतिम् । प्राहकृष्णाजिनधरोनैष्ठिका ब्राह्मणा ह्यमी

अमी कार्याः सुवस्त्रेण छन्नगुह्या द्विजोत्तमाः ।

प्राजापत्याश्चतुर्विंशसहस्राणि नरेश्वर !॥ ६४ ॥

ह्मचर्यव्रतस्थानां व्रतब्रह्मविचारिणाम् । द्वादशैषां सहस्राणिसन्तिवै वृषभध्वज

नारदस्य वचः श्रुत्वा देवा देवर्षयोऽपि च ।
साधुसाध्वित्यमन्यन्त नोचुः केचन किञ्चन ॥ ६६ ॥
समाह्वयत्ततो लक्ष्मीस्तान्विप्रान्भक्तिसंयुता ।
उवाच चरणान्गृह्य प्रसादः क्रियतां मयि ॥ ६७ ॥
षट्त्रिंशच्च सहस्राणि वेश्मनामत्र संस्थितिः ।
विश्वकर्मकृतानां तु तेषु तिष्ठन्तु वोऽखिलाः ॥ ६८ ॥
ते तथेति प्रतिज्ञाय स्थिताः सम्प्रीतमानसाः ।
धनधान्यसमृद्धाश्च वाञ्छितप्राप्तिलक्षणाः ॥
सर्वकामसमृद्धाश्च ह्यनारम्भेषु कर्मणाम् ॥ ६९ ॥
इति संस्थाप्य तान्विप्रान्सा स्थिता पर्यपालयत् ।
चतुर्द्धा तु स्थितो विष्णुः श्रियाः देव्याः प्रिये रतः ॥ ७० ॥

वं ववाहिकमखेनिवृत्ते ऋषयस्तुतम् । ऊचुश्चावभृथस्नानं कुत्र कुर्मो जनार्द्दन !॥

ति श्रुत्वा तु वचनं श्रीपतिःपादपङ्कजात् । मुमोचजाह्नवीतोयं रेवामध्यगमंशुचि

ः पादोदकंदृष्ट्वानिःसृतंमुनयस्तु ते । विस्मितास्समपद्यन्तजानंतस्तस्यगौरवम्

रुद्रेण सहिताः सर्वे देवता ऋषयस्तथा ।
सङ्कथा विस्मिताश्चक्रुर्विधुन्वन्तः शिरांसि च ॥ ७४ ॥

ऋषय ऊचुः

ब्रूहि शम्भो! किमत्रायं अकस्माद्वारिसम्भवः ।
विष्णोः पादाम्बुजोत्थश्च सम्मोहकरणः परः ॥ ७५ ॥

ईश्वर उवाच

ादोदकमिदंविष्णोरहंजानामिवै सुराः । दशाश्वमेधावभृथैःस्नानमत्रातिरिच्यते

युष्माभिः श्रीपतिः पूज्यः स्नानं चावभृथं कुतः ।

भविष्यतीति तेनाऽऽशु इदं वोऽर्थे विनिर्म्मितम् ॥ ७७ ॥

स्नात्वाऽत्र त्रिदशेशाना यत्फलं सम्प्रपद्यते । वक्तुं नकेनचिद्याति ततः किमुत्तरं वचः

मार्कण्डेय उवाच

एवमुक्त्वा तु ते सर्वे स्नानं कृत्वा यथागतम् । जग्मुर्देवा महेशानपुरोगा भरतर्षभ

ब्राह्मणाश्च ततः सर्वे स्ववेश्मान्येव भेजिरे ।

देवतीर्थे महाराज! सर्वपापप्रणाशने ॥ ८० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे श्रीपतिविवाहवर्णनंनाम चतुर्नवत्युत्तरशततमोऽध्यायः ॥ १९४ ॥

---

# पञ्चनवत्यधिकशततमोऽध्यायः

## श्रीपतिमाहात्म्यवर्णनम्

युधिष्ठिर उवाच

देवतीर्थं तु किन्नाममाहात्म्यं समुदाहृतम् । फलं किं स्नानदानादिकारिणां जायते मुने

मार्कण्डेय उवाच

पृथिव्यां यानि तीर्थानि देवैर्मुनिगणैरपि ।

सेवितानि महाबाहो! तानि ध्यातानि विष्णुना ॥ २ ॥

समागतान्येकतां वै तत्र तीर्थे युधिष्ठिर । तत्तीर्थं वैष्णवं पुण्यं देवतीर्थमिति श्रुतम्

कुरुक्षेत्रं भुवि परमन्तरिक्षे त्रिपुष्करम् । पुरुषोत्तमं दिवि परं देवतीर्थं परात्परम्

देवतीर्थसमं नास्ति तीर्थमत्र परत्र च । यत्प्राप्य मनुजस्तप्येन्न कदाचिद्युधिष्ठिर

देवैरुक्तानि तीर्थानि योऽत्र स्नानं समाचरेत् ।

देवतीर्थे स सर्वत्र स्नातो भवति मानवः ॥ ६ ॥

एवमस्त्विति तैरुक्तो देवा ऋषिगणा अपि ।

सन्तुष्टाः श्रीशमभ्यर्च्य स्वं स्वं स्थानं तु भेजिरे ॥ ७ ॥
सूर्यग्रहेऽत्र वै क्षेत्रे स्नात्वा यत्फलमश्नुते ।
स्नात्वा श्रीशं समभ्यर्च्य समुपोष्य यथाविधि ॥ ८ ॥
यद्ददाति हिरण्यानि दानानि विधिवन्नृप !।
तदनन्तफलं सर्वं सूर्यस्य ग्रहणे यथा ॥ ९ ॥
भूमिदानं धेनुदानं स्वर्णदानमनन्तकम् । वस्त्रदानमनन्तं च फलं प्राह शतक्रतुः ॥
सोमो वै वस्त्रदानेनमौक्तिकानांचभार्गवः । सुवर्णस्यरविर्दानं धर्मराजोह्यनन्तकम्
देवतीर्थे तु यद्दानं श्रद्धायुक्तेन दीयते । तदनन्तफलं प्राह बृहस्पतिरुदारधीः ॥१२॥
देवतीर्थं भृगुक्षेत्रे सर्वतीर्थाधिकंनृप !। देवतीर्थे नरः स्नात्वाश्रीपतिं योऽनुपश्यति
सोमग्रहे कुलशतं स समुद्धृत्य नाकभाक् ।
दानानि द्विजमुख्येभ्यो देवतीर्थे नराधिप !॥ १४ ॥
दत्तानि नरैर्भोगभागिनः प्रेत्य चेह ते । देवतीर्थे विप्रभोज्यं हरिमुद्दिश्ययश्चरेत्
स सर्वाह्लादमाप्नोति स्वर्गलोके युधिष्ठिर !।
देवतीर्थे नरो नारी स्नात्वा नियतमानसौ ॥ १६ ॥
उपोष्यैकादशीं भक्त्या पूजयेद्यः श्रियः पतिम् ।
रात्रौ जागरणं कृत्वा घृतेनोद्बोध्य दीपकम् ॥ १८ ॥
द्वादश्यां प्रातरुत्थाय तथावै नर्मदाजले । विप्रदां पत्यमभ्यर्च्य विधिवत्कुरुनन्दन
वस्त्राभरणताम्बूलपुष्पधूपविलेपनैः । अक्षये विष्णुलोकेऽसौ मोदते चरितव्रतः ॥
यः सदैकादशीतिथौ स्नात्वोपोष्याऽर्चयेद्धरिम् ।
रात्रौ जागरणं कुर्याद्वेदशास्त्रविधानतः ॥ २० ॥
धर्मराजकृतांपापानांसपश्यतियातनाम् । पञ्चरात्रविधानेनश्रीपतियोऽर्चयिष्यति
दीक्षामवाप्य विधिवद्वैष्णवीं पापनाशनीम् ।
स्वर्गमोक्षप्रदां पुण्यां भोगदां वित्तदामथ ॥ २२ ॥
स्वर्गमोक्षप्रदां पुण्यां भोगदां वित्तदामथ । सुकलत्रप्रदांवापिविष्णोर्भक्तिप्रदामिति
राज्यदांवामहाभागपुत्रदांभाग्यदामथ । सुकलत्रप्रदांवापिविष्णोर्भक्तिप्रदामिति

तरिष्यतिभवाम्भोधिंस नरःकुरुनन्दन । योऽर्च्चयिष्यतितत्रैवदेवतीर्थेश्रियःपतिम्
विश्वरूपमथोसम्यङ्मूलश्रीपतिमेव वा । नारायणगिरिंवाऽपिगृहेवैकादशीतिथौ
भक्तिमाञ्छ्रद्धयायुक्तः क्षीरैस्तीर्थोदकैरपि । सुसूक्ष्मैरहतैर्वस्त्रैर्महाकौशेयकैर्नृप
विचित्रैर्नेत्रजैर्वाऽपि धूपैरगुरुचन्दनैः । गुग्गुलैर्घृतमिश्रैश्च नैवेद्यैर्विविधैरपि ॥ २७॥
पायसाद्यैर्मनुष्येन्द्र पयसा वा युधिष्ठिर । पिष्टदीपैः सुविमलैर्वर्द्धमानैर्मनोहरैः॥

पूजयित्वा नरो याति यथा तच्छृणु भारत !।
शङ्खी चक्री गदी पद्मी भूत्वाऽसौ गरुडध्वजः ॥ २६ ॥
देवलोकानतिक्रम्य विष्णुलोकं प्रपद्यते ।
यस्तु वै परया भक्त्या श्रीपतेः पादपङ्कजम् ॥ ३० ॥
चतुर्द्धाऽधिष्ठितं पश्येच्छ्रियं त्रैलोक्यमातरम् ।
नृत्यगीतविनोदेन मुच्यते पातकैर्ध्रुवम् ॥ ३१ ॥

नीराजनेतु देवस्यप्रातर्मध्येदिनेतथा । सायं च नियतोनित्यं यःपश्येत्पूजयेद्धरिम्

स तीर्त्वा ह्यापदं दुर्गां नैवार्त्तिं समवाप्नुयात् ।
आयुः श्रीवर्द्धनं पुंसां चक्षुषामपि पूरकम् ॥ ३३ ॥

उपपापहरं चैव सदा नीराजनं हरेः । तदा नीराजनाकाले यो हरेः पठति स्तवम्
स धन्योदेवदेवस्यप्रसन्नेनाऽन्तरात्मना । हरेर्नीराजनाशेषं पाणिभ्यांयःप्रयच्छति
संगृह्यचक्षुषीतेनयोजयेन्मार्जयन्मुखम् । तिमिरादीनक्षिरोगान्नाशयेद्दीप्तिमन्मुखम्
भवत्यशेषदुष्टानां नाशायाऽलंनरोत्तम । दीपप्रज्ज्वलनं यस्य नित्यमग्रे श्रियः पतेः

'स्नात्वा रेवाजले पुण्ये प्रदद्यादधिकम्व्रती ।
सप्तद्वीपवती तेन ससागरवनापगा ॥ ३८ ॥
प्रदक्षिणीकृता स्याद्वै धरणी शङ्करोऽब्रवीत् ।
इदं यः पठ्यमानं तु श्रृणुयात्पठतेऽपिवा ॥ ३६ ॥
स्मरणं सोऽन्तसमये विपाप्मा प्राप्नुयाद्धरेः ।
इदं यशस्यमायुष्यं स्वर्ग्यं पितृगुणप्रियम् ॥ ४० ॥

माहात्म्यं श्रावयेद्विप्राञ्छ्रीपतेः श्राद्धकर्मणि ।
घृतेन मधुना तेन तर्पिताः स्युः पितामहाः ॥ ४१ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे श्रीपतिमाहात्म्यवर्णनं नाम पञ्चनवत्युत्तरशततमोऽध्यायः ॥१९५॥

---

# षण्णवत्यधिकशततमोऽध्यायः

## हंसतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेद्धराधीश हंसतीथमनुत्तमम् । यत्र हंसस्तपस्तप्त्वा ब्रह्मवाहनतांगतः
हंसतीर्थे नरः स्नात्वा दानं दत्त्वा चु काञ्चनम् ।
सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥ २ ॥

हंसयुक्तेन यानेन तरुणादित्यवर्चसा । सर्वकामसमृद्धेन सेव्यमानोऽप्सरोगणैः ॥
तत्र भुक्त्वा यथाकामं सर्वान्भोगान्यथेप्सितान् ।
जातिस्मरो हि जायेत पुनर्मानुष्यमागतः ॥ ४ ॥
संन्यासेन त्यजेद्देहं मोक्षमाप्नोति भारत !॥ ५ ॥

एतत्ते कथितं पार्थ! हंसतीर्थस्य यत्फलम् । सर्वपापहरं पुण्यं सर्वदुःखविनाशनम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे हंसतीर्थमाहात्म्यवर्णनंनाम षण्णवत्युत्तरशततमोऽध्यायः ॥१९६॥

---

# सप्तनवत्यधिकशततमोऽध्यायः

## मूलस्थानतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवाऽनन्तरं गच्छेत्सूर्यतीर्थमनुत्तमम् ।
मूलस्थानमिति ख्यातं पद्मजस्थापितं शुभम् ॥ १ ॥
मूलश्रीपतिना देवी प्रोक्ता स्थापय भास्करम् ।
श्रुत्वा देवोदितं देवी स्थापयामास भास्करम् ॥ २ ॥
प्रोच्यते नर्मदातीरे मूलस्थानाख्यभास्करः ॥ ३ ॥
तत्रतीर्थे नरोयस्तुस्नात्वानियतमानसः । सन्तर्प्य पितृदेवांश्च पिण्डेनसलिलेनच
मूलस्थानं ततः पश्येत्स गच्छेत्परमां गतिम् ।
गुह्याद्गुह्यतरस्तत्र विशेषस्तु श्रुतो मया ॥ ५ ॥
समागमे मुनीनांतु शङ्कराच्छशिशेखरात् । सदावैशुक्लसप्तम्यांमूलमादित्यवासरः
तदा रेवाजलं गत्वा स्नात्वा सन्तर्प्य देवताः ।
पितृंश्च भरतश्रेष्ठ! दत्त्वा दानं स्वशक्तितः ॥ ७ ॥
करवीरैस्ततो गत्वा रक्तचन्दनवारिणा ।
संस्थाप्य भास्करं भक्त्या सम्पूज्य च यथाविधि ॥ ८ ॥
ततः सागुरुकैर्धूपैः कुन्दरैश्च विशेषतः । धूपयेद्देवदेवेशं दीपान्बोध्य दिशो दश ॥
उपोष्य जागरं कुर्याद्गीतवाद्यं विशेषतः । एवं कृते महीपाल न भवेदुग्रदुःखभाक्
सूर्यलोके वसेत्तावद्यावत्कल्पशतत्रयम् । गन्धर्वैरप्सरोभिश्च सेव्यमानो नृपोत्तम

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे मूलस्थानतीर्थमाहात्म्यवर्णनंनामैकसप्तनवत्यधिकशततमोऽध्यायः

---------

# अष्टनवत्यधिकशततमोऽध्यायः

## शूलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपालभद्रकालीतिसङ्गमम् । शूलतीर्थमितिख्यातंस्वयंदेवेननिर्मितम्
पञ्चायतनमध्ये तु तिष्ठते परमेश्वरः । शूलपाणिर्महादेवः सर्वदैवतपूजितः ॥ २ ॥
स सङ्गमो नृपश्रेष्ठ नित्यं देवैर्निषेवितः । दर्शनात्तस्य तीर्थस्य स्नानदानाद्विशेषतः

दौर्भाग्यं दुर्निमित्तं च ह्यभिशापो नृपग्रहः ।
यदन्यद्दुष्कृतं कर्म नश्यते शङ्करोऽब्रवीत् ॥ ४ ॥

युधिष्ठिर उवाच

कथं शूलेश्वरी देवी कथं शूलेश्वरो हरः । प्रथितो नर्मदातीरे एतद्विस्तरतो वद ॥

मार्कण्डेय उवाच

बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः ।
वृत्तिमान्सर्वधर्मज्ञः सत्ये तपसि च स्थितः ॥ ६ ॥
अशोकाश्रममध्यस्थो वृक्षमूले महातपाः ।
ऊर्ध्वबाहुर्महातेजास्तस्थौ मौनव्रतान्वितः ॥ ७ ॥

तस्यकालेनमहता तीव्रे तपसि वर्त्ततः । तमाश्रममनुप्राप्तादस्य वोलोप्त्रहारिणः
अनुसर्प्यमाणा बहुभिः पुरुषैर्भरतर्षभ । ते तस्यावसथे लोप्त्रं न्यदधुः कुरुनन्दन

निधाय च तदा लीनास्तत्रैवाऽऽश्रममण्डले ।
तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम् ॥ १० ॥
आजगाम ततोऽपश्यंस्तमृषिं तस्कराानुगाः ।
तमपृच्छंस्तदा वृत्तं रक्षिणस्तं तपोधनम् ॥ ११ ॥

वद केन पथा याता दस्यवो द्विजसत्तम । तेनगच्छामहेब्रह्मन्यथाशीघ्रतरं वयम् ॥

तथा तु वचनं तेषां ब्रुवतां स तपोधनः । न किञ्चिद्वचनंराजन्नवदत्साध्वसाधुवा
ततस्ते राजपुरुषा विचिन्वन्तस्तमाश्रमम् ।
संयम्यैनं ततो राज्ञे सर्वान्दस्यून्न्यवेदयन् ॥ १४ ॥
तंराजासहितैश्चोरैरन्वशाद्वध्यतामिति । सम्बध्यतंच तैराजञ्छूलेप्रोतोमहातपाः
ततस्तेशूलमारोप्यतं मुनिं रक्षिणस्तदा । प्रतिजग्मुर्महीपाल धनान्यादायतान्यथ
शूलस्थः स तु धर्मात्मा कालेन महता तदा ।
ध्यायन्देवं त्रिलोकेशं शङ्करं तमुमापतिम् ॥ १७ ॥
बहुकालंमहेशानंमनसाऽऽध्यायसंस्थितः ।निराहारोऽपिविप्रर्षिर्मरणंनाऽभ्यपद्यत
धारयामास विप्राणामृषभः स हृदा हरिम् । शूलाग्रे तप्यमानेनतपस्तेनकृतं तदा
सन्तापंपरमंजग्मुःश्रुत्वैतन्मुनयोऽखिलाः । ते रात्रौशकुनाभूत्वासंन्यवर्त्तन्तभारत
दर्शयन्तो मुनेः शक्तिं तमपृच्छन्द्विजोत्तमम् ।
श्रोतुमिच्छाम ते ब्रह्मन्किं पापं कृतवानसि ॥ २१ ॥

श्रीमार्कण्डेय उवाच

ततः स मुनिशार्दूलस्तानुवाच तपोधनान् ।
दोषतः किं गमिष्यामि न हि मेऽन्योपराध्यति ॥ २२ ॥
एवमुक्त्वा ततः सर्वानाचचक्षे ततो मुनिः ।
मुनयश्च ततो राज्ञे द्वितीयेऽह्नि न्यवेदयन् ॥ २३ ॥
राजा तु तमृषिंश्रुत्वा निष्क्रान्तः सह बन्धुभिः ।
प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ २४ ॥

राजोवाच

यन्मयाऽपकृतं तात तवाऽज्ञानवशाद्बहु । प्रसादयेत्वांतत्राऽहंनमेत्वंक्रोद्धुमर्हसि
एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः । कृतप्रसादंराजा तं ततः समवतारयत्
अवतीर्यमाणस्तु मुनिः शूले मां सत्वमागते ।
अतिसम्पीडितोविप्रः शङ्करं मनसाऽगमत् ॥ २७ ॥

सन्ध्यातः शङ्करस्तेन बहुकालोपवासतः ।
प्रादुर्भूतो महादेवः शूलं तस्य तथाऽच्छिनत् ॥ २८ ॥
शूलमूलस्थितः शम्भुस्तुष्टःप्राहपुनःपुनः । ब्रूहिकिंक्रियतां विप्रसत्त्वस्थानपरायण
अदेयमपि दास्यामि तुष्टोऽस्म्यद्योमया सह ।
किं तु सत्यवतां लोके सिद्धिर्न स्याच्च भूयसी ॥ ३० ॥
स्वकर्मणोऽनुरूपंहि फलं भुञ्जन्तिजन्तवः । शुभेनकर्मणा भूतिर्दुःखंस्यात्पातकेनतु
बहुभेदप्रभिन्नं तु मनुष्येषु विपच्यते । केषां दरिद्रभावेन केषां धनविपत्तिजम् ॥
सन्तत्यभावजं केषां केषाञ्चित्तद्विपर्यये ।
तथा दुर्वृत्तितस्तेषां फलमाविर्भवेन्नृणाम् ॥ ३३ ॥
केषांचित्पुत्रमरणे वियोगात्प्रियमित्रयोः ।
राजचौराग्नितः केषां दुःखं स्याद्दैवनिर्मितम् ॥ ३४ ॥
तच्छरीरे तुकेषांचित्कर्मणासंप्रदृश्यते । जराश्चविविधाः केषांदृश्यतेव्याधयस्तथा
दृश्यन्ते चाऽभिशापाश्च पूर्वकर्मानुसञ्चिताः ।
कष्टाः कष्टतरावस्था गताः केचिदनागसः ॥ ३६ ॥
पूर्वकर्मविपाकेन धर्मेणतपसिस्थिताः । दान्ताःस्वदारनिरताभूरिदाःपरिपूजकाः
ह्रीमन्तो नयसंयुक्ता अन्ये बहुगुणैर्युताः । दुर्गमामापदंप्राप्य निजकर्मसमुद्भवाम्
न संज्वरन्ति ये मर्त्या धर्मनिन्दां न कुर्वते ।
इदमेव तपो मत्त्वा क्षिपन्ति सुविचेतसः ॥ ३९ ॥
हा भ्रातर्मातः पुत्रेति कष्टेषु न वदन्तिये । स्मरन्तिमां महेशानमथवापुष्करेक्षणम्
दुष्कृतं पूर्वजं भोक्तुं ध्रुवं तदुपशाम्यति ॥ ४१ ॥
दिनानि यावन्ति वसेत्स कष्टे यथाकृतं चिन्तयद्देवमीशम् ।
तावन्ति सौम्यानि कृतानि तेन भवन्ति विप्र! श्रुतिनोदनैषा ॥ ४२ ॥
यस्मात्त्वया कष्टगतेन नित्यं स्मृतश्चाहं मनसा पूजितश्च ।
गौरीसहायस्तेन इहाऽगतोऽस्मि ब्रूह्यद्य कृत्यं क्रियतां किं नु विप्र !॥

श्रीमार्कण्डेय उवाच

तुष्टो यद्युमया सार्धं वरदो यदि शङ्कर। तदा मे शूलसंस्थस्य संशयं परमं वद॥
न रुजा मम काऽपि स्याच्छूलसम्प्रोतितेऽगके।
अमृतस्राविं तच्छूलं प्रभावात्कस्य शंस मे ॥ ४५ ॥

श्रीशूलपाणिरुवाच

शूलस्थेन त्वया विप्र मनसा चिन्तितोऽस्मि यत्।
अनयानां निहन्ताऽहं दुःखानां चिनिबर्हणः ॥ ४६ ॥
ध्यातमात्रो ह्यऽहं विप्र! पाताले वाऽपि संस्थितः।
शूलमूले त्वहं शंभुरग्रे देवी स्वयं स्थिता॥
जगन्माताऽम्बिका देवी त्वाऽमृतेनान्वपूरयत् ॥ ४७ ॥

श्रीमार्कण्डेय उवाच

पूर्वमेवस्थितोयस्माच्छूलं व्याप्योमयासह। प्रसादप्रवणोमह्यमिदानींचानयासह
यस्याः संस्मरणादेव दौर्भाग्यं प्रलयं व्रजेत्।
न दौर्भाग्यात्परं लोके दुःखाद्दुःखतरं किल ॥ ४६ ॥
किलैवं श्रूयतेगाथा पुराणेषुसुरोत्तम!। त्रैलोक्यं दहतस्तुभ्यं सौभाग्यमेकतांगतम्
विष्णोर्वक्षःस्थलं प्राप्य तत्स्थितं चेति नः श्रुतम्।
पीतं तद्वक्षसस्त्रस्तदक्षेण परमेष्ठिना ॥ ५१ ॥
तस्मात्सतीति संजज्ञ इयमिन्दीवरेक्षणा। यजतस्तस्यदेवेशतव मानावखण्डनात्
जुहावाऽग्नौ तु सा देवी ह्यात्मानं प्राणसञ्ज्ञिकम्।
आत्मानं भस्मसात्कृत्वा प्रालेयाद्रेस्ततः सुता ॥ ५३ ॥
मेनकायांप्रभोजाता साम्प्रतंयाह्युमाभिधा। अनादिनिधनादेवीह्यप्रतर्क्यासुरेश्वर
यदि तुष्टोसि देवेश! ह्युमा मे वरदा यदि।
उभावप्यत्र वै स्थाने स्थितौ शूलाग्रमूलयोः।
अवतारो यत्र तत्र संस्थितिं वै ततः कुरु ॥ ५६ ॥

श्रीमार्कण्डेय उवाच

तेनैवमुक्तेसहसाकृत्वाभूमण्डलंद्विधा । निःसृतौ शूलमूलाग्राल्लिंगार्घ्यप्रतिरूपिणौ
प्रद्योतयद्दिशः सर्वालिङ्गं मूलेप्रदृश्यते । वामतः प्रतिमादेवी तदाशूलेश्वरीस्थिता
विलोभयन्ती च जगद्भाति पूरयतीदिशः । दृष्ट्वा कृताञ्जलिपुटःस्तुतिंचक्रेद्विजोत्तमः

श्रीमार्कण्डेय उवाच

त्वमस्य जगतो माता जगत्सौभाग्यदेवता ।
न त्वया रहितं किञ्चिद् ब्रह्माण्डेऽस्ति वरानने !॥ ६० ॥
प्रसादं कुरु धर्मज्ञे! ममत्वाज्ञप्तुमर्हसि । ईदृशेनैव रूपेण केषु स्थानेषु तिष्ठसि ॥
प्रसादप्रवणा भूत्वा वद तानि महेश्वरि !॥ ६१ ॥

श्रीदेव्युवाच

सर्वगा सर्वभूतेषु द्रष्टव्यासर्वतो भुवि । सर्वलोकेषु यत्किंचिद्विहितंन मया विना
तथापि येषु स्थानेषु द्रष्टव्या सिद्धिमीप्सुभिः ।
स्मर्त्तव्या भूतिकामेन तानि वक्ष्यामि तत्त्वतः ॥ ६३ ॥
वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी ।
प्रयागे ललिता देवी कामुका गन्धमादने ॥ ६४ ॥
मानसे कुमुदानामविश्वकायातथाऽपरे । गोमन्तेगोमती नाममन्दरेकामचारिणी
मदोत्कटा चैत्ररथे हयन्तीहास्तिनेपुरे । कान्यकुब्जेस्थिता गौरीरम्भाह्यमलपर्वते
एकाम्रके कीर्त्तिमती विश्वांविश्वेश्वरेविदुः । पुष्करेपुरुहूताच केदारेमार्गदायिनी
नन्दा हिमवतः प्रस्थे गोकर्णे भद्रकर्णिका ।
स्थानेश्वरे भवानी तु बिल्वके बिल्वपत्रिका ॥ ६८ ॥
श्रीशैले माधवीनाम भद्रे भद्रेश्वरीतिच । जयावराहशैले तु कमला कमलालये ॥
रुद्रकोट्यां तु कल्याणी काली कालञ्जरे तथा ।
महालिङ्गे तु कपिला माकोटे मुकुटेश्वरी ॥ ७० ॥
शालिग्रामे महादेवी शिवलिङ्गे जलप्रिया ।

मायापुर्यां कुमारी तु सन्ताने ललिता तथा ॥ ७१ ॥

उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला । गयायांविमलानाममङ्गलापुरुषोत्तमे
विपाशायाममोघाक्षी पाटलापुण्ड्रवर्धने । नारायणीसुपार्श्वे तुत्रिकूटेभद्रसुन्दरी
विपुले विपुलानामकल्याणीमलयाचले । कोटवीकोटितीर्थेषु सुगन्धागन्धमादने

गोदाश्रमे त्रिसन्ध्या तु गङ्गाद्वारे रतिप्रिया ।
शिवचण्डे सभानन्दा नन्दिनी देविकातटे ॥ ७५ ॥

रुक्मिणी द्वारवत्यां तुराधावृन्दावनेवने । देवकी मथुरायां तु पाताले परमेश्वरी

चित्रकूटे तथा सीता विन्ध्ये विन्ध्यनिवासिनी ।
सह्याद्रावेकवीरा तु हरिश्चन्द्रे तु चण्डिका ॥ ७७ ॥

रमणा रामतीर्थे तुयमुनायां मृगावती । करवीरे महालक्ष्मी रूपादेवी विनायके
आरोग्यावैद्यनाथेतुमहाकाले महेश्वरी । अभयेत्युष्णतीर्थेतु मृगीवाविन्ध्यकन्दरे

माण्डव्ये माण्डुकीनाम स्वाहा माहेश्वरे पुरे ।
छागलिङ्गे प्रचण्डा तु चण्डिकाऽमरकण्टके ॥ ८० ॥

सोमेश्वरे वरारोहा प्रभासे पुष्करावती । वेदमातासरस्वत्यां पारापारातटे मुने

महालये महाभागा पयोष्ण्यां पिङ्गलेश्वरी ।
सिंहिका कृतशौचे तु कार्त्तिके चैव शाङ्करी ॥ ८२ ॥

उत्पलावर्तके लोला सुभद्राशोणसङ्गमे । मता सिद्धवटे लक्ष्मीस्तरङ्गा भारताश्रमे
जालन्धरे विश्वमुखीतारा किष्किन्धपर्वते । देवदारुवनेपुष्टिर्मेधा काश्मीरमण्डले
भीमादेवी हिमाद्रौ तुपुष्टिर्वस्त्रेश्वरेतथा । कपालमोचने शुद्धिर्माताकायावरोहणे

शङ्खोद्धारे ध्वनिर्नाम धृतिः पिण्डारके तथा ।
काला तु चन्द्रभागायामच्छोदे शक्तिधारिणी ॥ ८६ ॥

वेणायाममृतानाम बदर्यामुर्वशी तथा । ओषधी चोत्तरकुरौ कुशद्वीपे कुशोदका ॥
मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी । अश्वत्थे वन्दिनीकातुनिधिर्वैश्रवणालये
गायत्री वेदवदने पार्वती शिवसन्निधौ । देवलोकेतथेन्द्राणी ब्रह्मास्येतु सरस्वती

सूर्यविम्बे प्रभानाम मातॄणां वैष्णवी मता ।
अरुन्धती सतीनां तु रामासु च तिलोत्तमा ॥ ९० ॥
चित्रे ब्रह्मकलानाम शक्तिः सर्वशरीरिणाम् ।
शूलेश्वरी भृगुक्षेत्रे भृगौ सौभाग्यसुन्दरी ॥ ९१ ॥
एतदुद्देशतः प्रोक्तं नामाष्टशतमुत्तमम् । अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम् ॥
इदमेव परं विप्र सर्वेषां तु भविष्यति । पठत्यष्टोत्तरशतं नाम्नां यः शिवसन्निधौ ॥
स मुच्यते नरः पापैः प्राप्नोति श्रियमीप्सिताम् ।
स्नात्वा नारी तृतीयायां मां समभ्यर्च्य भक्तितः ॥ ९४ ॥
न सा स्याद् दुःखिनी जातु मत्प्रभावान्नरोत्तम ! ।
नित्यं मद्दर्शने नारी नियता या भविष्यति ॥ ९५ ॥
पतिपुत्रकृतं दुःखं नसाप्राप्स्यतिकर्हिचित् । मदालयेतुया नारीतुलापुरुषसंज्ञितम्
संपूज्य मण्डयेद्देवाँल्लोकपालांश्च साग्निकान् ।
सपत्नीकान्द्विजान्पूज्य वासोभिर्भूषणैस्तथा ॥ ९७ ॥
भूतेभ्यस्तु बलिं दद्यादृत्विग्भिः सह देशिकः ।
ततः प्रदक्षिणीकृत्य तुलामित्यभिमन्त्रयेत् ॥ ९८ ॥
शुचिरक्ताम्बरो वा स्याद्गृहीत्वा कुसुमाञ्जलिम् ।
नमस्ते सर्वदेवानां शक्तिस्त्वं परमा स्थिता ॥ ९९ ॥
साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना ।
त्वं तुले सर्वभूतानां प्रमाणमिहकीर्त्तिता ॥ १०० ॥
कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन्नुमामुखम् ।
ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः ॥ १०१ ॥
द्रव्यमष्टविधं तत्रद्यात्मवित्तानुसारतः । मदंशभूतं विप्रेन्द्र! पृथिव्यां यदधिष्ठितम्
सुवर्णंचैवनिष्पावांस्तथाराजिकुसुम्भकम् । तृणराजेन्दुलवणं कुङ्कुमं तुतथाष्टमम्
एषामेकतमं कुर्याद्यथावित्तानुसारतः ।

साम्यादभ्यधिकं यावत्काञ्चनादि भवेद् द्विज !॥ १०४ ॥

तावत्तिष्ठेन्नरो नारी पश्चादिदमुदीरयेत् । नमो नमस्ते ललिते तुलापुरुषसंज्ञिते !॥
त्वमुमे तारयस्वास्मानस्मात्संसारकर्दमात् । ततोऽवतीर्य गुरवेपूर्वमर्द्धंनिवेदयेत्

ऋत्विग्भ्योऽपरमर्द्धं च दद्यादुदकपूर्वकम् ।

तेभ्यो लब्धा ततोऽनुज्ञां दद्यादन्येषु चार्थिषु ॥ १०७ ॥

सपत्नीकं गुरुं रक्तवाससी परिधापयेत् ।

अन्यांश्च ऋत्विजः शक्त्या गुरुं केयूरकङ्कणैः ॥ १०८ ॥

शुक्लां गांक्षीरिणींदद्याल्ललिताप्रीयतामिति । अनेनविधिनायातुकुर्यान्नारीममालये

मत्तुल्या सा भवेद्राज्ञां तेजसा श्रीरिवामला ।

सावित्रीव च सौन्दर्ये जन्मानि दशपञ्च च ॥ ११० ॥

श्रीमार्कण्डेय उवाच

एवं निशम्य वचनं गौर्या द्विजवरोत्तमः । नमस्कृत्यजगामाऽऽशुधर्मराजनिवेशनम्

तदा प्रभृति तत्तीर्थं ख्यातं शूलेश्वरीतिच ।

तस्मिंस्तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ ११२ ॥

ब्राह्मणानन्नवासोभिः पिण्डैःपितृपितामहान् । भक्तोपहारैर्देवेशमुमयासह शङ्करम्
धूपगुग्गुलदानैश्च दीपदानैःसुबोधितैः । सर्वपापविनिर्मुक्तःसगच्छेच्छिवसन्निधिम्
तस्मिंस्तीर्थे तुयःकश्चिदभियुक्तोनरेश्वर । अभिशापी तथास्नातस्त्रिदिनंमुच्यतेनरः
कृष्णपक्षे चतुर्द्दश्यां रात्रौ जागर्त्तियोनरः । उपवासपरःशुद्धः शिवं सम्पूजयेन्नरः॥

प्रमुच्य पापसम्मोहं रुद्रलोकं स गच्छति ॥ ११६ ॥

त्रिनेत्रश्चचतुर्बाहुः साक्षाद्रुद्रइवाऽपरः । क्रीडते देवकन्याभिर्यावच्चन्द्रार्कतारकम्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शूलेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टनवत्त्युत्तरशततमोऽध्यायः ॥

---

# एकोनद्विशततमोऽध्यायः

## आश्विनतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं राजन्नाश्विनं तीर्थमुत्तमम् ।
कामिकं सर्वतीर्थानां प्राणिनां सिद्धिदायकम् ॥ १ ॥

त्रतीर्थेऽश्विनौ देवौसुरूपौभिषजांवरौ । तपःकृत्वासुविपुलं सञ्जातौयज्ञभागिनौ
म्मतौ सर्वदेवानामादित्यतनयावुभौ । नासत्यौ सत्त्वसंपन्नौ सर्वदुःखघ्नसत्तमौ

युधिष्ठिर उवाच

आदित्यस्य सुतौ तात नासत्यौ येन हेतुना ।
संजातौ श्रोतुमिच्छामि निर्णयं परमं द्विज !॥ ४ ॥

मार्कण्डेय उवाच

राणे भास्करे तात एतद्विस्तरतो मया । संश्रुतंदेवदेवस्य मार्त्तण्डस्यमहात्मनः
त्तेसंक्षेपतः सर्वं भक्तियुक्तस्यभारत । कथयामि नसंदेहो वृद्धभावेन कर्शितः ॥
तितेजो रवेर्द्दृष्ट्वा राज्ञी देवीनरोत्तम । चचार मेरुकान्तारे वडवा तप उल्बणम्
तः कतिपयाऽहस्य कालस्यभगवान्रविः । दृष्ट्वातुरूपमुत्सृज्य परमंतेजउज्ज्वलम्
नोभववशीभूतो हयोभूत्वालघुक्रमः । विस्फुरन्तीयथाप्राणं धावमानाइतस्ततः
यमाणः स्वरेणाऽसौ मैथुनायोपचक्रमे । सम्मुखीतुततोदेवी निवृत्तालघुविक्रमा

यथा तथा नासिकायां प्रविष्टं बीजमुत्तमम् ।
ततो नासागते बीजे सञ्जातो गर्भ उत्तमः ॥ ११ ॥
जातौ यतः सुतौ पार्थ! नासत्यौ विश्रुतौ ततः ।
सुसमौ सुविभक्ताङ्गौ बिम्बाद्बिम्बमिवोद्यतौ ॥ १२ ॥

धिकौ सर्वदेवानां रूपैश्वर्यसमन्वितौ । नर्मदातटमाश्रित्य भृगुकच्छेगतावुभौ

परां सिद्धिमनुप्राप्तौ तपः कृत्वा सुदुश्चरम् ॥ १३ ॥

तत्रतीर्थे तुयः स्नात्वा तर्पयेत्पितृदेवताः । सुरूपः सुभगः पार्थ जायते यत्र तत्र

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे आश्विनतीर्थमाहात्म्यवर्णनंनामैकोनद्विशततमोऽध्यायः ॥

---------

# द्विशततमोऽध्यायः

## सावित्रीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं पार्थ! सावित्रीतीर्थमुत्तमम् ।
यत्र सिद्धा महाभागा सावित्री वेदमातृका ॥ १ ॥

युधिष्ठिर उवाच

सावित्रीकाद्विजश्रेष्ठ कथंवाऽऽराध्यतेबुधैः । प्रसन्नावावरंकं चददातिकथयस्व

श्रीमार्कण्डेय उवाच

पद्मा पद्मासनस्थेनाऽधिष्ठिता पद्मयोगिनी ।
सावित्रतेजःसदृशी सावित्री तेन चोच्यते ॥ ३ ॥

पद्मानना पद्मवर्णा पद्मपत्रनिभेक्षणा । ध्यातव्याब्राह्मणैर्नित्यं क्षत्रवैश्यैर्यथाविधि

ब्रह्महत्याभयात्सा हिन तु शूद्रैः कदाचन । उच्चारणाद्धारणाद्वानरकेपतति ध्रुवम्

वेदोच्चारणमात्रेण क्षत्रियैर्द्धर्मपालकैः ।
जिह्वाच्छेदोऽस्य कर्त्तव्यः शूद्रस्येति विनिश्चयः ॥ ६ ॥

बाला बालेन्दुसदृशी रक्तवस्त्रानुलेपना ।
उषःकाले तु ध्यातव्या सन्ध्या सन्धान उत्तमे ॥ ७ ॥

उत्तुङ्गपीवरकुचा सुमुखीशुभदर्शना । सर्वाभरणसम्पन्ना श्वेतमाल्यानुलेपना ॥ ८

श्वेतवस्त्रपरिच्छन्ना श्वेतयज्ञोपवीतिनी ।
मध्याह्नसन्ध्या ध्यातव्या तरुणा भुक्तिमुक्तिदा ॥ ६ ॥
दोषे तुपुनः पार्थ!श्वेतापाण्डुरमूर्द्धजा । स्मृतातुदुर्गकान्तारे मातृवत्परिरक्षति
विशेषेण तु राजेन्द्र सावित्रीतीर्थमुत्तमम् ।
स्नात्वाऽऽचम्य विधानेन मनोवाक्कायकर्मभिः ॥ ११ ॥
प्राणायामैर्दहेद्दोषान्सप्तजन्मार्जितान्बहून् ।
आपोहिष्ठेति मन्त्रेण प्रोक्षयेदात्मनस्तनुम् ॥ १२ ॥
वषट् चतथातिस्रस्तत्रतीर्थेनृपोत्तम । आपोहिष्ठेतित्रिरावृत्त्य प्रतिग्राहैर्नलिप्यते
अघमर्षणं त्र्यृचं तोये यथा वेदमथाऽपिवा । उपपापैर्न लिप्येत पद्मपत्रमिवांभसा
पापं हि कुरुते विप्र उल्लेखत्रयमाचरेत् । चतुर्थं कारयेद्यस्तु ब्रह्महत्यांव्यपोहति
द्रुपदाख्यश्च यो मन्त्रो वेदे वाजसनेयके । अन्तर्जले सकृज्जप्तः सर्वपापक्षयं करः ॥
उदुत्यमिति मन्त्रेण पूजयित्वा दिवाकरम् । गायत्रींचजपेद्देवीं पवित्रांवेदमातरम्
गायत्रीं तुजपेद्देवीं यः सन्ध्यानन्तरंद्विजः । सर्वपापविनिर्मुक्तो ब्रह्मलोकंसगच्छति
दशभिर्जन्मभिर्लब्धं शतेन तुपुराकृतम् । त्रियुगंतुसहस्रेणगायत्री हन्तिकिल्बिषम्

गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ २० ॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते किंचिन्न तस्य फलभाग्भवेत् ॥ २१ ॥
सन्ध्यां नोपासते यस्तु ब्राह्मणो मन्दबुद्धिमान् ।
स जीवन्नेव शूद्रः स्यान्मृतः श्वा संप्रजायते ॥ २२ ॥
सावित्रीतीर्थमासाद्य सावित्रीं यो जपेद् द्विजः ।
त्रैविद्यं तु फलं तस्य जायते नाऽत्र संशयः ॥ २३ ॥
पितॄनुद्दिश्य यः स्नात्वा पिण्डनिर्वपणं नृप ! ।
कुरुते द्वादशाब्दानि तृप्यन्ति तत्पितामहाः ॥ २४ ॥

सावित्रीतीर्थमासाद्य यः कुर्यात्प्राणसंक्षयम् ।
ब्रह्मलोकं वसेत्तावद्यावदाभूतसंप्लवम् ॥ २५ ॥

पूर्णे चैव ततः काल इह मानुष्यतां गतः । चतुर्वेदो द्विजो राजञ्जायते विमले कुले ।
धनधान्यचयोपेतः पुत्रपौत्रसमन्वितः । व्याधिशोकविनिर्मुक्तो जीवेच्चशरदांशतम् ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सावित्रीतर्थमाहात्म्यवर्णनंनाम द्विशततमोऽध्यायः ॥ २०० ॥

———

# एकोत्तरद्विशततमोऽध्यायः

## देवतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल देवतीर्थमनुत्तमम् ।
यत्र सिद्धा महाभागा देवाः सेन्द्रा युधिष्ठिर !॥ १ ॥

स्नानंदानं जपोहोमःस्वाध्यायोदेवतार्च्चनम् । तत्रतीर्थप्रभावेण कृतमानंत्यमश्नुते ।
विशेषाद्भाद्रपदे तु कृष्णपक्षेत्रयोदशीम् । प्रधानं सर्वतीर्थानां देवैरध्यासितं पुरा ।

स्नात्वा त्रयोदशीदिने श्राद्धं कृत्वाविधानतः ।
देवैः संस्थापितं देवं सम्पूज्य वृषभध्वजम् ॥
सर्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात् ॥ ४ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे देवतीर्थमाहात्म्यवर्णनं नामैकोत्तरद्विशततमोऽध्यायः ॥ २०१ ॥

———

# द्व्यधिकद्विशततमोऽध्यायः

## शिखितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं चान्यच्छिखितीर्थमनुत्तमम् ।
प्रधानं सर्वतीर्थानां पञ्चायतनमुत्तमम् ॥ १ ॥
तत्र तीर्थे तपस्तप्त्वा शिखार्थं हव्यवाहनः ।
शिखां प्राप्य शिखी भूत्वा शिखाख्यं स्थापयञ्छिवम् ॥ २ ॥
प्रतिपच्छुक्लपक्षे या भवेदाश्वयुजे नृप । तदातीर्थवरे गत्वा स्नात्वा वै नर्मदाजले
देवानृषीन्पितॄंश्चान्यांस्तर्प्पयेत्तिलवारिणा ।
हिरण्यं ब्राह्मणे दद्यात्संतर्प्य च हुताशनम् ॥ ४ ॥
गन्धमाल्यैस्तथा धूपैस्ततः सम्पूजयेच्छिवम् ।
अनेन विधिनाऽभ्यर्च्य शिखितीर्थे महेश्वरम् ॥ ५ ॥
विमानेनाऽर्कवर्णेन ह्यप्सरोगणसम्वृतः । गीयमानस्तुगन्धर्वैं रुद्रलोकं सगच्छति
शत्रुक्षयमवाप्नोति तेजस्वी जायते भुवि ॥ ७ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे शिखितीर्थमाहात्म्यवर्णनंनाम द्व्यधिकशततमोऽध्यायः ॥ २०२ ॥

---

# त्र्यधिकद्विशततमोऽध्यायः

## कोटितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेद्धराधीश! कोटितीर्थमनुत्तमम् ।
यत्र सिद्धा महाभागाः कोटिसङ्ख्या महर्षयः ॥ १ ॥
तपः कृत्वा सुविपुलमृषिभिः स्थापितः शिवः ।
तथा कोटीश्वरी देवी चामुण्डा महिषार्दिनी ॥ २ ॥
कृष्णपक्षे चतुर्दश्यां मासि भाद्रपदे नृप !।
तीर्थकोटीः समाहूय मुनिभिः स्थापितः शिवः ॥ ३ ॥
तस्यां तिथौ च हस्तर्क्षं सर्वपापप्रणाशनम् ।
तत्र तीर्थे तदा गत्वा स्नानं कृत्वा समाहितः ॥ ४ ॥
नरकादुद्धरत्याशु पुरुषानेकविंशतिम् । तिलोदकप्रदानेन किमुत श्राद्धदो नरः ॥
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ।
तस्य तीर्थस्य योगेन सर्वं कोटिगुणं भवेत् ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनंनाम त्र्युत्तरद्विशततमोऽध्यायः ॥ २०३ ॥

---

# चतुरधिकद्विशततमोऽध्यायः

## पैतामहतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

भृगुतीर्थं ततो गच्छेत्तीर्थराजमनुत्तमम्। पैतामहं महापुण्यं सर्वपातकनाशनम्
ब्रह्मणा तत्रतीर्थेतुपुरा वर्षशतत्रयम्। आराधनंकृतंशम्भोः कस्मिंश्चित्कारणान्तरे

युधिष्ठिर उवाच

किमर्थं मुनिशार्दूल ब्रह्मालोकपितामहः। आराधयद्देवदेवं महाभक्त्या महेश्वरम्
आराध्यः सर्वभूतानां जगद्धर्त्ता जगद्गुरुः।
श्रोतव्यं श्रोतुमिच्छामि महदाश्चर्यमुत्तमम् ॥ ४ ॥
धर्मपुत्रवचः श्रुत्वा मार्कण्डेयो मुनीश्वरः। कथयामासतद्वृत्तमितिहासपुरातनम्

मार्कण्डेय उवाच

स्वपुत्रिकामभिगन्तुमिच्छन्पूर्वं पितामहः। शप्तस्तु देवदेवेन कोपाविष्टेन सत्तम॥
वेदास्तव विनश्यन्ति ज्ञानंचकमलासन। अपूज्यःसर्वलोकानांभविष्यसिनसंशयः
एवं दत्ते ततः शापे ब्रह्मा खेदावृतस्तदा। रेवायाउत्तरे कूलेस्नात्वा वर्षशतत्रयम्
तोषयामास देवेशं तुष्टः प्रोवाच शङ्करः ॥ ८ ॥
पूज्यस्त्वं भवितालोके प्राप्ते पर्वणिपर्वणि। अहमत्रच वत्स्यामिदेवैश्चपितृभिःसह

श्रीमार्कण्डेय उवाच

तदाप्रभृति यत्तीर्थं ख्यातिंप्राप्तं पितामहात्। सर्वपापहरंपुण्यं सर्वतीर्थेष्वनुत्तमम्
तत्र भाद्रपदे मासिकृष्णपक्षेविशेषतः। अमावास्यांतुयःस्नात्वातर्पयेत्पितृदेवताः
पिण्डदानेन चैकेन तिलतोयेनवा नृप। तृप्यन्ति द्वादशाब्दानिपितरोनाऽत्रसंशयः
कन्यागते तुयस्तत्रनित्यं श्राद्धप्रदोभवेत्। अवाप्यतृप्तिं तत्पूर्वेवल्गन्तिचहसन्तिच
सर्वेषु पितृतीर्थेषु श्राद्धंकृत्वाऽस्तियत्फलम्। तत्फलंसमवाप्नोतिदर्शेतत्र नसंशयः

पैतामहे नरः स्नात्वा पूजयन्पार्वतीपतिम् ।
मुच्यते नाऽत्र सन्देहः पातकैश्चोपपातकैः ॥ १५ ॥
तत्र तीर्थे मृतानां तु नराणां भावितात्मनाम् ।
अनिवर्तिका गती राजन्रुद्रलोकादसंशयम् ॥ १६ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे पैतामहतीर्थमाहात्म्यवर्णनंनाम चतुरधिकद्विशततमोऽध्यायः ॥

———

# पञ्चाधिकद्विशततमोऽध्यायः

## कुकुरीतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

गच्छेत्ततः क्षोणिनाथ! तीर्थं परमशोभनम् ।
कुकुरीनाम विख्यातं सर्वपापप्रणाशनम् ॥ १ ॥
यंयं प्रार्थयते कामं पशुपुत्रधनादिकम् । तं तं ददाति देवेशी कुकुरी तीर्थदेवता
क्षेत्रपालो वसेत्तत्र ढौण्ढेशो नाम नामतः ।
तस्य चाऽऽराधनं कृत्वा नारी वा पुरुषोऽपि वा ॥ ३ ॥
वन्दनादपि राजेन्द्र दौर्भाग्यं नाशमाप्नुयात् । अपुत्रोलभते पुत्रमधनो धनमुत्तमम्
नारी नरस्तथाप्येवं लभते काममुत्तमम् ।
स्पर्शनाद्दर्शनात्तस्य तीर्थस्य विधिपूर्वकम् ॥ ५ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कुंकुरीतीर्थमाहात्म्यवर्णनंनाम पञ्चाधिकद्विशततमोऽध्यायः ॥

———

# षडधिकद्विशततमोऽध्यायः

## दशकन्यातीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

गच्छेत्ततः क्षोणिनाथ! तीर्थं परमशोभनम्। सर्वपापहरं पुण्यंदशकन्येति विश्रुतम्
महादेवकृतं पुण्यं सर्वकामफलप्रदम् ॥ १ ॥
तत्र तीर्थे महादेवो दशकन्या गुणान्विताः। ब्रह्मणोवरयामास ह्युद्वाहेनयुयोजह
तदाप्रभृति तत्तर्थं दशकन्येति विश्रुतम्। सर्वपापहरं पुण्यमक्षयं कीर्त्तितं फलम्
तत्र तीर्थे तु यः कन्यां ददाति समलङ्कृतम्।
प्राप्नोति पुरुषो दत्वा यथाशक्त्या स्वलङ्कृताम् ॥ ४ ॥
तेन दानोत्थपुण्येन पूतात्मानो नरधिप !।
वसन्ति रोमसङ्ख्यानि वर्षाणि शिवसन्निधौ ॥ ५ ॥
ततः कालेन महतात्विहलोके नरेश्वर। मानुष्यंप्राप्यदुःष्प्राप्यं धनकोटीपतिर्भवेत्
तत्र तीर्थे तु यो भक्त्या स्नात्वा विप्राय काञ्चनम्।
संप्रयच्छति शान्ताय सोऽत्यन्तं सुखमश्नुते ॥ ७ ॥
वाचिकं मानसंवाऽपि कर्मजंयत्पुराकृतम्। तत्सर्वं विलयंयातिस्वर्णदानेनभारत
नरो दत्त्वा सुवर्णं च अपि बालाग्रमात्रकम्।
तत्र तीर्थे दिवं याति मृतो नाऽस्त्यत्र संशयः ॥ ६ ॥
तत्रविद्याधरैःसिद्धैर्विमानवरमास्थितः। पूज्यमानोवसेत्तावद्यावदाभूतसम्प्लवम्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे दशकन्यातीर्थमाहात्म्यवर्णनं नामषड्डुत्तरद्विशततमोऽध्यायः ॥

---

# सप्ताधिकद्विशततमोऽध्यायः

## सुवर्णबिन्दुतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्याऽग्रे पावनं तीर्थं स्वर्णबिन्द्विति विश्रुतम् ।
यत्र स्नात्वा दिवं यान्ति मृताश्च न पुनर्भवम् ॥ १ ॥

तत्रतीर्थे तुयः स्नात्वा दत्तेविप्रायकाञ्चनम् । तेनयत्तुफलंप्रोक्तं तच्छृणुष्वमहीपते
सर्वेषामेवरत्नानां काञ्चनं रत्नमुत्तमम् । अग्नितेजः समुद्भूतं तेन तत्परमम्भुवि ॥
तेनैव दत्ता पृथिवी सशैलवनकानना । सपत्तनपुरा सर्वा काञ्चनं यः प्रयच्छति ॥

मानसं वाचिकं पापं कर्मणा यत्पुरा कृतम् ।
तत्सर्वं नश्यति क्षिप्रं स्वर्णदानेन भारत !॥ ५ ॥
स्वर्णदानं तु यो दत्त्वा ह्यपि बालाग्रमात्रकम् ।
तत्र तीर्थे मृतो याति दिवं नास्त्यत्र संशयः ॥ ६ ॥

तत्रविद्याधरैःसिद्धैर्विमानवरमास्थितः । पूज्यमानोवसेत्तावद्यावदाभूतसम्प्लवम्
पूर्णे तत्र ततः काले प्राप्य मानुष्यमुत्तमम् । सुवर्णकोटिसहितेगृहेवै जायते द्विजः
सर्वव्याधिविनिर्मुक्तः सर्वलोकेषुपूजितः । जीवेद्वर्षशतंसाग्रं राजसंसत्सु विश्रुतः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सुवर्णविन्दुतीर्थमाहात्म्यवर्णनं नाम सप्ताधिकद्विशततमोऽध्यायः ॥

———

# अष्टाधिकद्विशततमोऽध्यायः

## ऋणमोचनतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

भूमिपाल!ततोगच्छेत्तीर्थंपरमशोभनम् । विख्यातं त्रिषुलोकेषुपितृणामृणमोचनम्

तत्र स्नात्वा विधानेन सन्तर्प्य पितृदेवताः ।

मनुष्यश्च नृपश्रेष्ठ! दानं दत्त्वाऽनृणो भवेत् ॥ २ ॥

इच्छन्ति पितरः सर्वे स्वार्थहेतो सुतं यतः ।

पुन्नाम्नो नरकात्पुत्रोऽस्मानयं मोचयिष्यति ॥ ३ ॥

पिण्डदानं जलं तात ऋणमुत्तममुच्यते । पितृणां तद्धि वै प्रोक्तमृणं दैवमतः परम्

अग्निहोत्रं तथा यज्ञाः पशुबन्धास्तथेष्टयः । इति देवऋणं प्रोक्तं शृणुमानुष्यकंततः

ब्राह्मणेषु च तीर्थेषु देवायतनकर्मसु । प्रतिश्रुत्य ददेत्तत्तद्व्यवहारः कृतो यथा ॥

ऋणत्रयमिदंप्रोक्तं पुत्राणांधर्मनन्दन !। सत्पुत्रास्ते तु राजेन्द्र! स्नातायऋणमोचने

ऋणत्रयाद्विमुच्यन्ते ह्यपुत्राः पुत्रिणस्तथा ।

तस्मात्तीर्थवरम्प्राप्य पुत्रेण नियतात्मना ॥

पितृभ्यस्तर्पणं कार्यं पिण्डदानं विशेषतः ॥ ८ ॥

तत्र तीर्थे हुतं दत्तं गुरवस्तोषिता यदि । मृतानां सप्त जन्मानि फलमक्षयमश्नुते

इति श्रीस्कान्दे महापुराण,एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे ऋणमोचनतीर्थमाहात्म्यवर्णनं नामाष्टोत्तरद्विशततमोऽध्यायः ॥

---

# नवाधिकद्विशततमोऽध्यायः

## भारभूतितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं पार्थ पुष्कलीतीर्थमुत्तमम् । तत्र तीर्थेनरःस्नात्वाह्यश्वमेधफलंलभेत्
क्षमानाथ! ततो गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
देवदानवगन्धर्वैरप्सरोभिश्च सेवितम् ॥ २ ॥
तत्र तिष्ठति देवेशः साक्षाद्रुद्रोमहेश्वरः । भारेणमहताजातो भारभूतिरितिस्मृतः

युधिष्ठिर उवाच

भारभूतीति विख्यातं तीर्थं सर्वगुणान्वितम् ।
श्रोतुमिच्छामि विप्रेन्द्र! परं कौतूहलं हि मे ॥ ४ ॥

श्रीमार्कण्डेय उवाच

भारभूतिसमुत्पत्तिं शृणु पाण्डवसत्तम !। विस्तरेण यथाप्रोक्ता पुरादेवेनशम्भुना
आसीत्कृतयुगेविप्रो वेदवेदाङ्गपारगः । विष्णुशर्मेतिविख्यातःसर्वशास्त्रार्थपारगः
क्षमा दमो दया दानं सत्यं शौचं धृतिस्तथा ।
विद्याविज्ञानमास्तिक्यं सर्वं तस्मिन्प्रतिष्ठितम् ॥ ७ ॥
ईदृग्गुणा हि ये विप्रा भवन्ति नृपसत्तम । पतितान्नरकेघोरेतारयन्तिपितृं स्तुते
इन्द्रियैर्लोलुपा विप्रा ये भवन्तिनृपोत्तम । पतन्ति नरके घोरे रौरवे पापमोहिताः
ये क्षान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।
प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ १० ॥
एवं गुणगणाकीर्णोब्राह्मणोनर्मदातटे । वसते ब्राह्मणैःसार्धं शिलोञ्छवृत्तिजीवनः
तादृशंब्राह्मणंज्ञात्वादेवदेवोमहेश्वरः । द्विजरूपधरोभूत्वा तस्याश्रममगात्स्वयम्
दृष्ट्वा तं ब्राह्मणैः सार्धमुच्चरन्तं पदक्रमम् ।

अभिवादयते विप्रं स्वागतेन च पूजितः ॥ १३ ॥
प्रोवाच तं मुहूर्त्तेन ब्राह्मणो विस्मयान्वितः ।
किमर्थं तद्बटो! ब्रूहि किं करोमि तवेप्सितम् ॥ १४ ॥

बटुरुवाच

विद्यार्थिनमनुप्राप्तंविद्धिमांद्विजसत्तम । ददासियदिमेविद्यांततः स्थास्यामितेगृहे

ब्राह्मण उवाच

सर्वेषामेव विप्राणां बटो! त्वं गोत्र उत्तमे ।
दानानां परमं दानं कथं विद्या च दीयते ॥ १६ ॥

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या भवतीह फलप्रदा

बटुरुवाच

यथान्ये बालकाः स्नाताः शुश्रूषन्ति ह्यहर्निशम् ।
तथाऽहं बटुभिः सार्धं शुश्रूषामि न संशयः ॥ १८ ॥
तथेति चोक्त्वा विप्रेन्द्रः पाठयंस्तं दिने दिने ।
वर्त्तते सह शिष्यैः स शिलोञ्छानुपहारयन् ॥ १९ ॥

ततः कतिपयाहोभिः प्रोक्तोबटुभिरीश्वरः । पचनाद्यं बटो कर्म कुरु क्रमतआगतम्
तथेतिचोक्तोदेवेशो भारग्राममुपागतः । ध्यात्वावनस्पतीःसर्वाः इदंवचनमब्रवीत्

यावदागच्छते विप्रो बटुभिः सह मन्दिरम् ।
अदर्शनाभिः कर्त्तव्यं तावदन्नं सुसंस्कृतम् ॥ २२ ॥

एवमुक्त्वा तु ताः सर्वा विश्वरूपो महेश्वरः । क्रीडनार्थंगतस्तत्रबटुर्वेषधरः पृथक्
दृष्ट्वा समागतं तत्र बटुवेषधरं पृथक् । धिक्त्वां च परुषंवाक्यमूचुस्तेगिरिसन्निधौ

क्षुत्क्षामकण्ठाः सर्वे च गत्वा तु किल मन्दिरम् ।
त्वया सिद्धेन चाऽन्नेन तृप्तिं यास्यामहे वयम् ॥ २५ ॥
तद्वृथा चिन्तितं सर्वं त्वयागत्य कृतं द्विज !।
मिथ्याप्रतिज्ञेन सता दुरनुष्ठितमद्य ते ॥ २६ ॥

बटुरुवाच

सन्तापमनुतापं वाभोजनार्थंद्विजर्षभाः । माकुरुध्वंयथान्यायं सिद्धेऽन्नेगृहमेष्यथ

बटुरुवाच

दिनशेषेण चास्माकं पञ्चतां च दिनेदिने । निष्पत्तियातिवानेतितदसिद्धमशेषतः

अंसिद्धं सिद्धमस्माकं यत्त्वया समुदाहृतम् ।

दृष्ट्वाऽनृतं गतास्तत्र त्वां बद्ध्वाऽम्भसि निक्षिपे ॥ २६ ॥

बटुरुवाच

भोभो शृणुद्ध्वं सर्वेऽत्र सोपाध्याया द्विजोत्तमाः ।

प्रतिज्ञां मम दुर्द्धर्षां यां श्रुत्वा विस्मयो भवेत् ॥ ३० ॥

यदि सिद्धमिदं सर्वमन्नं स्यादाश्रमे गुरोः ।

यूयं बध्वा मया सर्वे क्षेप्तव्या नर्मदाम्भसि ॥ ३१ ॥

अथवाऽन्नं न सिद्धं स्याद्भवद्भिर्दृढबन्धनैः ।

गुरोस्तु पश्यतो बध्वा क्षेप्तव्योऽहं नर्मदाह्रदे ॥ ३२ ॥

तथेति कृत्वा ते सर्वेसमयं गुरुसन्निधौ । स्नात्वाजाप्यविधानेन भूतग्रामंततोययुः

दृष्ट्वातेविस्मयंजग्मुर्विस्तृते भक्ष्यभोजने । षड्रसेननृपश्रेष्ठ भुक्त्वा हुत्वापृथक्पृथक्

ततः प्रोवाच वचनं हृष्टपुष्टो द्विजोत्तमः । वरदोऽस्मि वरंवत्स! वृणु यत्तव रोचते

साङ्गोपाङ्गास्तु ते वेदा शास्त्राणि विविधानि च ।

प्रतिभास्यन्ति ते विप्र! मदीयोऽस्तु वरस्त्वयम् ॥ ३५ ॥

प्रणम्य बटुभिः सार्धं स चिक्रीड यथासुखम् ।

द्वितीये तु ततः प्राप्ते दिवसे नर्मदाजले ॥ ३७ ॥

क्रीडनार्थं गताः सर्वे सोपाध्याया युधिष्ठिर! ।

ततः स्मृत्वा पणं सर्वे भाषयित्वा विधानतः ॥ ३८ ॥

उपाध्यायमथोवाच नत्वा देवः कृताञ्जलिः ।

जले प्रक्षेपयाम्यद्य निष्प्रतिज्ञान्बटून्प्रभो ॥ ३६ ॥

तद्देवस्य वचःश्रुत्वा नष्टास्तेबटवो नृप। गुरोस्तुपश्यतोराजन्धावमानादिशोदश
वायुवेगेन देवेन लुञ्जितास्तेसमन्ततः। भारं बध्वा तु सर्वेषां बटूनाञ्च नरेश्वर ॥
शापानुग्रहको देवोऽक्षिपत्तोये यथा गृहे। ततोविषादमगमद्दृष्ट्वा तान्नर्मदाजले ॥
गुरुणा बटुरुक्तोऽथ किमेतत्साहसंकृतम्। एतेषां मातृपितरोबालकानांगृहेऽङ्गनाः

यदि पृच्छन्ति ते बालान्कगतान्कथयाम्यहम्।
एवं स्थिते महाभाग यदि कश्चिन्मरिष्यति ॥ ४४ ॥

तदा स्वकीयजीवेन त्वं योजयितुमर्हसि। मृतेषु तेषु विप्रेषु न जीवेनिश्चयो मृतः
ब्रह्महत्याश्च ते बह्वयो भविष्यन्तिमृतेमयि। द्विजबन्धनमात्रेण नरकोभवतिध्रुवम्

मरणाद्यां गतिं यासि न तां वेद्मि द्विजाधम !।
एवमुक्तः स्मितं कृत्वा देवदेवो महेश्वरः ॥ ४७ ॥
भारभूतेश्वरे तीर्थ उज्जहार जलाद् द्विजान्।
मुक्त्वा भारं तु देवेन च्छादयित्वा तु तान्द्विजान् ॥ ४८ ॥
लिङ्गं प्रतिष्ठितं तत्र भारभूतेति विश्रुतम्।
मृतांस्तान्वै द्विजान्दृष्ट्वा ब्रह्महत्या निराकृता ॥ ४६ ॥

गतानिपञ्चवैदृष्ट्वाब्रह्महत्याशतानिवै। ततः स विस्मयाविष्टोदृष्ट्वातान्बालकान्गुरुः

नाऽन्यस्य कस्यचिच्छक्तिरेवं स्यादीश्वरं विना।
ज्ञात्वा तं देवदेवेशं प्रणाममकरोद् द्विजः ॥ ५१ ॥

अज्ञानेन मया सर्वं यदुक्तं परमेश्वर !। अप्रियं यत्कृतं सर्वं क्षन्तव्यं तन्मम प्रभो !॥

देव उवाच

भगवन्गुरुर्भवान्देवो भवान्मम पितामहः।
वेदगर्भ! नमस्तेऽस्तु नास्ति कश्चिद् व्यतिक्रमः ॥ ५३ ॥
जनिता चोपनेता च यस्तु विद्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ५४ ॥
एवमुक्त्वा जगन्नाथो विष्णुशर्माणमानतः।

तत्र तीर्थे जगामाऽऽशु कैलासं धरणीधरम् ॥ ५५ ॥
तदाप्रभृतितत्तीर्थं भारभूतीति विश्रुतम् । विख्यातंसर्वलोकेषु महापातकनाशनम्
तत तीर्थे पुनर्वृत्तमितिहासं ब्रवीमिते । सर्वपापहरं दिव्यमेकाग्रस्त्वंश्रृणुष्व तत्
पुरा कृतयुगस्यादौ वैश्यः कश्चिन्महामनाः ।
सुकेश इति विख्यातस्तस्य पुत्रोऽतिधार्मिकः ॥ ५८ ॥
सोमशर्मेतिविख्यातोमृतःपृथुललोचनः । स सखायंवणिक्पुत्रंकश्चिच्चक्रेदरिद्रिणम्
सहदेवमितिख्यातं सर्वकर्मसुकोविदम् । एकदा तु समन्तेन व्यवहारमचिन्तयत् ॥
सखे समुद्रयानेन गच्छावोत्तरणैःशुभैः । भाण्डं बहु समादाय मदीये द्रव्यसाधने
परं तीरं गमिष्याव उत्कर्षस्त्वावयोः समः ।
इति तौ मन्त्रयित्वा तु मन्त्रवत्समभीप्सितम् ॥ ६२ ॥
सर्वं प्रयाणकं गृह्य ह्यारूढौ लवणोदधिम् । तौगत्वातुपरंभाण्डंविक्रीयपुरतस्तदा
प्राप्तौबहुसुवर्णंचरत्नानिविविधानि च । नावंतांसङ्गतांकृत्वा पश्चात्तावारुरोहतुः
नावमन्तर्जलेद्दृष्ट्वा निशीथेस्वर्णसम्भृताम् । दृष्ट्वातुसोमशर्माणमुत्सङ्गेकृतमस्तकम्
शयानमतिविश्वस्तंसहदेवोव्यचिन्तयत् । एषनिद्रावशंयातोमयिप्राणान्निधाय वै
अस्याधीनमिदं सर्वं द्रव्यरत्नमशेषतः । उत्कर्षार्द्धं तु मे दद्यात्तत्र गत्वेति वा नवा
इति निश्चित्य मनसा पापस्तंलवणोदधौ । चिक्षेपसोमशर्माणं पापध्यातेनचेतसा
उत्तीर्य तरणात्तस्माद्गत्वा संगृह्य तद्धनम् ।
ततः कतिपयाहोभिः संयुक्तः कालधर्मणा ॥ ६६ ॥
गतो यमपुरं घोरं गृहीतो यमकिङ्करैः । स नीतस्तेनमार्गेण यत्र सन्तपते रविः ॥
कृत्वा द्वादशधात्मानं सम्प्राप्ते प्रलये यथा ।
सुतीक्ष्णाः कण्टका यत्र यत्र श्वानः सुदारुणाः ॥ ७१ ॥
तीक्ष्णदंष्ट्रा महाव्याला व्याघ्रा यत्र महावृकाः ।
सुतप्ता वालुका यत्र क्षुधा तृष्णा तमो महत् ॥ ७२ ॥
पानीयस्य कथा नास्ति न च्छाया नाऽऽश्रमं क्वचित् ।

अन्नं पानीयसहितं यावत्तद्दीयते विषम् ॥ ७३ ॥

…यां सम्प्रार्थमानानांभृशं ज्वलतिपावकः । तैर्दह्यमानावहुशोविलपन्तिमुहुर्मुहुः

हाभ्रातर्मातः पुत्रेति पतन्ति पथि मूर्च्छिताः ।

इत्थंभूतेन मार्गेण स नीतो यमकिङ्करैः ॥ ७५ ॥

… तिष्ठति देवेशः प्रजासंयमनोयमः । ते द्वारदेशे तंमुक्त्वाऽऽचचक्षुर्यमकिङ्कराः

बद्ध्वा तं गलपाशेन ह्यासीनं मित्रघातिनम् ।

अवधारय देवेश! बुध्यस्व यदनन्तरम् ॥ ७७ ॥

यम उवाच

न तु पूर्वं मुखं दृष्टं मया विश्वासघातिनाम् ।

ये मित्रद्रोहिणः पापास्तेषां किं शासनं भवेत् ॥ ७८ ॥

ऋषयोऽत्र विचारार्थं नियुक्ता निपुणाः स्थिताः ।

ते यत्र ब्रुवते तत्र क्षिपध्वं मा विचार्यताम् ॥ ७९ ॥

…युक्तास्तेतमादायकिङ्कराःशीघ्रगामिनः । मुनीशांस्तत्रतानूचुस्तंनिवेद्ययमाज्ञया

द्विजा अनेन मित्रं स्वं प्रसुप्तंनिशि घातितम् ।

विश्वस्तं धनलोभेन को दण्डोऽस्य भविष्यति ॥ ८१ ॥

…दृष्टपूर्वमस्माभिर्वदनंमित्रघातिनाम् । कृत्वापटान्तरेह्येनंश्रृण्वन्तु गतिमस्यताम्

…शास्त्राणि विचार्याथ ऋषयश्चपरस्परम् । आहूय यमदूतांस्तानूचुर्ब्राह्मणपुङ्गवाः

आलोकितानि शास्त्राणि वेदाः साङ्गाः स्मृतीरपि ।

पुराणानि च मीमांसा दृष्टमस्माभिरत्र च ॥ ८४ ॥

ब्रह्मघ्ने च सुरापे च स्तेये गुर्वङ्गनागमे ।

निष्कृतिर्विहिता शास्त्रे कृतघ्ने नाऽस्ति निष्कृतिः ॥ ८५ ॥

ये स्त्रीघ्नाश्च गुरुघ्नाश्च ये बालब्रह्मघातिनः ।

विहिता निष्कृतिः शास्त्रे कृतघ्ने नाऽस्ति निष्कृतिः ॥ ८६ ॥

…पीकूपतडागानां भेत्तारोयेचपापिनः । उद्यानवाटिकानां चछेत्तारोयेचदुर्जनाः

दावाग्निदाहका ये च सततं येऽसुहिंसकाः ।
न्यासापहारिणो ये च गरदाः स्वामिवञ्चकाः ॥ ८८ ॥
मातापितृगुरूणां चत्यागिनोदोषदायिनः । स्वभर्त्तृवञ्चनपरायास्त्रीगर्भप्रघातिनी
विवेकरहिता या स्त्री याऽस्नाता भोजने रता ।
द्विकालभोजनरतास्तथा वैष्णववासरे ॥ ९० ॥
तासां स्त्रीणां गतिर्दृष्टा न तु विश्वासघातिनाम् ।
विश्वासघातिनां पुंसां मित्रद्रोहकृतां तथा ॥ ९१ ॥
तेषां गतिर्न वेदेषु पुराणेषु च का कथा । इति स्थितेषु पापेषु गतिरेषांन विद्यते
नाऽन्या गतिर्मित्रहनने विश्वस्तघ्ने च नः श्रुतम् ।
इतो नीत्वा यमदूता एनं विश्वस्तघातिनम् ॥ ९३ ॥
कल्पकोटिशतं साग्रं पर्यायेणपृथक्पृथक् । नरकेषुच सर्वेषुत्रिंशत्कोटिषु संख्यया
क्षिप्यतामेष मित्रघ्नो विचारो मा विधीयताम् ।
इति ते वचनं श्रुत्वा किङ्करास्तं निगृह्य च ॥ ९५ ॥
यत्र ते नरका घोरास्तत्रक्षेप्तुं गतास्ततः । तेतमादाय हि नरके घोरे रौरवसंज्ञिते
चिक्षिपुस्तत्र पापिष्ठं क्षिप्ते रावोऽभवन्महान् ।
नरकस्थितभूतेषु मोक्तव्यो नैव पापकृत् ॥ ९७ ॥
अस्य संस्पर्शनादेव पीडा शतगुणा भवेत् ।
यथा व्यथासिकाष्ठैश्च समिद्धैर्दहनात्मकैः ॥ ९८ ॥
भवति स्पर्शनात्तस्य किमेतेनकृतामलम् । यथादुर्जनसंसर्गात्सुजनोयातिलाघवम्
सन्निधानात्तथास्याऽऽशु क्षते क्षारावसेचनम् ।
प्रसादः क्रियतामाशु नीयतां नरकेऽन्यतः ॥ १०० ॥
देवमुक्तास्ततस्तैस्तु गतास्तेत्वशुचिंप्रति । तत्रतेनारकाः सन्तिपूर्ववत्तेऽपिचुक्रुशुः
एवं ते किङ्कराः सर्वेऽपर्यटन्नरकमण्डले ।
नरकेऽपि स्थितिस्तस्य नास्ति पापस्य दुर्मतेः ॥ १०२ ॥

दा यदा तु ते सर्वे तं गृह्य यमसन्निधौ । गत्वा निवेद्य तत्सर्वं यदुक्तं नारकैर्नरैः
नरके न स्थितिर्यस्य तस्य किं क्रियतां वद ॥ १०३ ॥

यम उवाच

पापिष्ठ एव वै यातु योनिं तिर्यङ्निषेविताम् ।
कालं मुनिभिरुद्दिष्टः तीर्यग्योनिं प्रवेश्यताम् ॥ १०४ ॥

वमुक्तेतु वचने प्रजासंयमनेन च । स गतः कृमितां पापो विष्ठासु च पृथक्पृथक्
ततोऽसौ दंशमशकान्पिपीलिकसमुद्भवान् ।
यूकामत्कुणकाढ्यांश्च गत्वा पक्षित्वमागतः ॥ १०६ ॥

थावरत्वं गतः पश्चात्पाषाणत्वं ततःपरम् । सरीसृपानजगरवराहमृगहस्तिनः ॥
वृकश्वानखरोष्ट्रांश्च शूकरीं ग्रामजातिकाम् ।
योनिमाश्वतरीं प्राप्य तथा महिषसम्भवाम् ॥ १०८ ॥

ताश्चान्याश्चबह्वीर्वै प्रापयोनीःक्रमेणवै । सता योनीरनुप्राप्य धुर्योऽभूद्भारवाहकः
गृहे पार्थिवेशस्यधार्मिकस्ययशस्विनः । सदृष्ट्वा कार्त्तिकींप्राप्तामेकदानृपसत्तमः
रोहितं समाहूय ब्राह्मणांश्चतथाबहून् । न गृहे कार्त्तिकीं कुर्यादेतन्मेबहुशःश्रुतम्
समेताः कुत्र यास्याम इति ब्रूत द्विजोत्तमाः ।
यो गृहे कार्त्तिकीं कुर्यात्स्नानदानादिवर्जितः ॥ ११२ ॥
सम्वत्सरकृतात्पुण्यात्स बहिर्भवति श्रुतिः ।
तस्मात्सर्वप्रयत्नेन तीर्थं सर्वगुणान्वितम् ॥ ११३ ॥

हितास्तत्र गच्छामःस्नातुं दातुं चशक्तितः । एवमुक्तेतुवचने पार्थिवेनद्विजोत्तमाः
चुः श्रेष्ठं नृपश्रेष्ठ! रेवाया उत्तरे तटे । भारेश्वरेति विख्यातं मुक्तितीर्थंनृपोत्तम
त्र यामो वयं सर्वे सर्वपापक्षयावहम् । एवमुक्तः सनृपतिर्गृहीत्वा प्रचुरं वसु ॥
कटं सम्भृतं कृत्वा तत्र युक्तः सधूर्वहः । यः कृत्वा मित्रहननं गोयोनिंसमुपागतः
यं स नर्मदातीरे सम्प्राप्तस्तीर्थमुत्तमम् । गत्वा चतुर्दशीदिने ह्युपवासकृतक्षणः
त्वा स नर्मदातीरे नाम रुद्रेत्यनुस्मरन् । शुचिप्रदेशाच्च मृदंमन्त्रेणाऽनेनगृह्यताम्

उद्धृताऽसि वराहेण रुद्रेण शतबाहुना । अहमप्युद्धरिष्यामि प्रजया बन्धनेन च
स एवं तां मृदं नीत्वा मुक्त्वा तीरे तथोत्तरे ।
ददर्श भास्करं पश्चान्मन्त्रेणाऽनेन चाऽऽलभेत् ॥ १२१ ॥
अश्वक्रान्तेरथक्रान्ते विष्णुक्रान्तेवसुन्धरे । मृत्तिकेहरमे पापंजन्मकोटिशतार्जितम्
तत एवं विगाह्यापो मन्त्रमेतमुदीरयेत् । त्वंनर्मदे पुण्यजले तवाम्भः शङ्करोद्भवम् ॥
स्नानं प्रकुर्वतो मेऽद्य पापं हरतु चाऽर्जितम् ।
स स्नात्वाऽनेन विधिना सन्तर्प्य पितृदेवताः ॥ १२४ ॥
ययौ देवालयं पश्चादुपहारैः समन्वितः ।
भक्त्या सञ्चिन्त्य सान्निध्ये शङ्करं लोकशङ्करम् ॥ १२५ ॥
पुराणोक्तविधानेन पूजां समुपचक्रमे । पूजाचतुष्टयं देवि! शिवरात्र्यां निगद्यते ॥
संस्नाप्य प्रथमं यामे पञ्चगव्येन शङ्करम् । घृतेन पूरणं पश्चात्कृतं नृपवरेण तु ॥
धूपदापौनिवेद्याद्यं संकल्प्य च यथाविधि । अर्घेणानेन देवेशंमन्त्रेणानेन शङ्करम्
नमस्ते देवदेवेश शम्भो परमकारण !। गृहाणार्घमिमं देव संसाराघमपाकुरु ॥
वित्तानुरूपतो दत्तं सुवर्णं मन्त्रकल्पितम् । अग्निर्हिदेवाः सर्वे सुवर्णं च हुताशनम्
अतः सुवर्णदानेन प्रीताः स्युः सर्वदेवताः । तदर्घंसर्वदा दातुः प्रीतोभवतु शङ्करः
अनेन विधिना तेन पूजितःप्रथमेशिवः । यामे द्वितीये तु पुनः पूर्वोक्तविधिनाचरेत्
स्नापयामासदुग्धेनगव्येनत्रिपुरान्तकम् । तन्दुलैःपूरणंपश्चात्कृतं लिङ्गस्यशूलिनः
कृत्वा विधानं पूर्वोक्तं दत्तं वस्त्रयुगं सितम् ।
श्वेतवस्त्रयुगं यस्माच्छङ्करस्याऽतिवल्लभम् ॥ १३४ ॥
प्रीतो भवति वैशम्भुर्दत्तेन श्वेतवाससा । यामं तृतीयं सम्प्राप्तं दृष्ट्वा नृपतिसत्तमः
देवंसंस्नाप्यमधुनापूरणं चक्रिवांस्तिलैः । तिलद्रोणप्रदानं चकुर्यान्मन्त्रमुदीरयन्
तिलाः श्वेतास्तिलाः कृष्णाः सर्वपापहरास्तिलाः ।
तिलद्रोणप्रदानेन संसारश्छिद्यतां मम ॥ १३७ ॥
अनेन विधिनाराजा यामिनीयामपूजनम् । अतिवाह्यविनोदेन ब्रह्मघोषेणजागरम्

चकार पूजनं शम्भोर्बहुपुण्यप्रसाधकम् ।
ये जागरे त्रिनेत्रस्य शिवरात्र्यां शिवस्थिताः ॥ १३९ ॥
ते यां गतिं गताः पार्थ! न तां गच्छन्ति यज्विनः ।
पापानि यानि कानि स्युः कोटिजन्मार्जितान्यपि ॥ १४० ॥
हरकेशवयोः स्नान्ति जागरे यान्ति संक्षयम् ।
यावन्तो निमिषा नृणां भवन्ति निशि जाग्रताम् ॥ १४१ ॥

निमिषेनिमिषे राजन्नश्वमेधफलं ध्रुवम् । उपवासपराणां च देवायतनवासिनाम्
शृण्वतां धर्ममाख्यानं ध्यायतांहरकेशवौ । न तां बहुसुवर्णेन क्रतुनागतिमाप्नुयुः
शिवरात्रिस्तिथिःपुण्याकार्त्तिकीच विशेषतः । रेवायाउत्तरंकूलंतीरंभारेश्वरेतिच
जागृतश्चातिदुःखेन कथंपापंनहास्यति । इत्थंसजागरं कृत्वा शिवरात्र्यांनरेश्वरः
प्रभाते विमलेगत्वा नर्मदातीरमुत्तमम् । स्नापितास्तेन ते सर्वेवाहनानिगजादयः

यैस्तु वाहैर्गतस्तीर्थं स्नातोऽहं स्नापयामि तान् ।
तत्र मध्यस्थितः स्नातस्तिर्यक्त्वान्निर्गतो वणिक् ॥ १४७ ॥

दानंददौतानुदिश्य किंचिच्छक्त्यनुरूपतः । तेन वाहकृताद्दोषान्मुक्तोभवतिमानवः

अन्यथाऽसौ कुतो लाभः कुतो व्रजति तान्प्रति ।
संस्नाप्य तं ततो राजा स्वयं स्नात्वा विधानतः ॥ १४९ ॥
संतर्प्य पितृदेवांश्च कृत्वा श्राद्धं यथाविधि ।
कृत्वा पिण्डान्पितृभ्यश्च वृषमुत्सृज्य लक्षणम् ॥ १५० ॥

गत्वा देवालयं पश्चाद्देवं तीर्थोदकेनच । संस्नाप्य पञ्चगव्येनततः पञ्चामृतेन च
सर्वौषधिजलेनैव ततः शुद्धोदकेन च । चन्दनेन सुगन्धेन समालभ्य च शङ्करम् ॥
कुङ्कुमैश्च सकर्पूरैर्गन्धैश्चविविधैस्तथा । पुष्पैर्वैश्च सुगन्धाढ्यैश्चतुर्थंलिङ्गपूरणम्
कृतं नृपवरेणाऽत्र कुर्वता पूर्वकं विधिम् । गोदानं चकृतं पश्चाद्विधिदृष्टेनकर्मणा
धेनुके रुद्ररूपाऽसि रुद्रेण परिनिर्मिता । अस्मिन्नगाधे संसारे पतन्तं मां समुद्धर
धेनुं स्वलंकृतां दद्यादनेन विधिनाततः । क्षमाप्य देवदेवेशं ब्राह्मणान्भोजयेद्बहून्

षड्विधैर्भोजनैर्भक्ष्यैर्वासोभिस्तान्समर्चयेत् ।
दक्षिणाभिर्विचित्राभिः पूजयित्वा क्षमापयेत् ॥ १५७ ॥
सस्वयं बुभुजे पश्चात्परिवारसमन्वितः । तामेव रजनींतत्र न्यवसज्जगतीपतिः
तस्य तत्रोषितस्यैवं निशीथेऽथ नरेश्वर !।
आकाशे सोऽति शुश्राव दिव्यवाणीसमीरितम् ॥ १५६ ॥

वागुवाच

राजन्समन्ततो लोके फलं भवति साम्प्रतम् ।
संसारसागरे ह्यत्र पतितानां दुरात्मनाम् ॥ १६० ॥
यदि सन्निधिमात्रेण फलंतत्रोच्यतेकथम् । यदिशन्तनुवंशस्य तत्रोन्मादकरंभवेत्
य एष त्वद्गृहे वोढा ह्यतिभारधुरंधरः । अनेन मित्रहननं पापं विश्वासघातनम्
कृतं जन्मसहस्राणामतीते परिजन्मनि ।
गतेन पाप्मनाऽऽत्मानं नरकेषु च संस्थितिः ॥ १६३ ॥
ततो योनिसहस्रेषु गतिस्तिर्यक्षु चैवहि । गोयोनिं समनुप्राप्तस्त्वद्गृहेससुदुर्मतिः
स्नापितश्च त्वया तीर्थे ह्यस्मिन्पर्वसमागमे ।
दृष्ट्वा पूजां त्वया क्लृप्तां कृता जागरणक्रिया ॥ १६५ ॥
तेन निष्कल्मषो जातो मुक्त्वा देहं तवाऽग्रतः ।
स्वर्गं प्रति विमानस्थः सोऽद्य राजन्गमिष्यति ॥ १६६ ॥

श्रीमार्कण्डेय उवाच

एवमुक्ते निपतितो धुर्यः प्राणैर्व्ययुज्यत । विमानवरमारूढस्तत्क्षणात्समदृश्यत
स तं प्रणम्य राजेन्द्रमुवाच प्रहसन्निव ॥ १६८ ॥

वृष उवाच

भोभो नृपवरश्रेष्ठतीर्थमाहात्म्यमुत्तमम् । यत्रचाऽस्मद्विधस्तीर्थे मुच्यतेपातकैर्नरः
मया ज्ञातमशेषेण मत्समो नाऽस्ति पातकी ॥ १६६ ॥
अतः परं किं तु कुर्यां परं तीर्थाऽनुकीर्त्तनम् ।

भवान्माता भवान्भ्राता भवांश्चैव पितामहः ॥ १७० ॥
क्षन्तव्यं प्रणतोऽस्म्यद्य यस्मिंस्तीर्थे हि मादृशाः ।
गतिमीदृग्विधां यान्ति न जाने तव का गतिः ॥ १७१ ॥
समाराध्य महेशानं संपूज्यचयथाविधि ! कागतिस्तव संभाष्यादेह्यनुज्ञांममप्रभो
त्वरयन्ति च मां ह्येते दिविस्थाः प्रणयाद्गणाः ।
स्वस्त्यस्तु ते गमिष्यामीत्युक्त्वा सोऽन्तर्दधे क्षणात् ॥ १७३ ॥

श्रीमार्कण्डेय उवाच

गतेचाऽदर्शनंतत्र सराजाविस्मयान्वितः । तीर्थमाहात्म्यमतुलं वर्णयन्स्वपुरंगतः
इत्थं भूतं हि तत्तीर्थं नर्मदायां व्यवस्थितम् ।
सर्वपापक्षयकरं सर्वदुःखघ्नमुत्तमम् ॥ १७५ ॥
उपपापानि नश्यन्तिस्नानमात्रेणभारत !। कार्त्तिकस्यचतुर्द्दश्यामुपवासपरायणः
चतुर्द्धा पूरयेल्लिङ्गं तस्य पुण्यफलं शृणु । ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः
महापापानि चत्वारि चतुर्भिर्यान्ति संक्षयम् ।
सोऽश्वमेधस्य यज्ञस्य लभते फलमुत्तमम् ॥ १७८ ॥
कार्त्तिकेशुक्लपक्षस्य चतुर्द्दश्यामुपोषितः । स्वर्णदानाच्च तत्तीर्थे यज्ञस्यलभतेफलम्
अष्टम्यां वा चतुर्द्दश्यां वैशाखे मासि पूर्ववत् ।
दीपं पिष्टमयं कृत्वा पितॄन्सर्वान्विमोक्षयेत् ॥ १८० ॥
तत्र यद्दीयते दानमपि वालाग्रमात्रकम् । तदक्षयफलं सर्वमेवमाह महेश्वरः ॥ १८१
भारभूत्यां मृतानां तु नराणां भावितात्मनाम् ।
अनिवर्त्तिका गती राजञ्छिवलोकान्निरन्तरम् ॥ १८२ ॥
अथवा लोकवृत्त्यर्थं मर्त्यलोकं जिगीषति । साङ्गवेदज्ञविप्राणांजायते विमलेकुले
धनधान्यसमायुक्तो वेदविद्यासमन्वितः ।
सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ १८४ ॥
पुनस्तत्तीर्थमासाद्य ह्यक्षयं पदमाप्नुयात् ॥ १८५ ॥

एतत्पुण्यं पापहरं कथितं ते नृपोत्तम !। भारतेदं महाख्यानं शृणुचैव ततः परम् ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे भारभूतितीर्थमाहात्म्यवर्णनंनाम नवाधिकद्विशततमोऽध्यायः ॥

---

# दशाधिकद्विशततमोऽध्यायः

## पुङ्खिलतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं तात! पुङ्खिलं तीर्थमुत्तमम् । तत्रतीर्थेपुरा पुङ्खःपार्थसिद्धिमुपागतः
जामदग्न्यो महातेजाःक्षत्रियांतकरःप्रभुः । तपःकृत्वा सुविपुलं नर्मदोत्तरतीरभाक्
ततःप्रभृतिविख्यातंपुङ्खतीर्थं नरेश्वर। तत्र तीर्थे तु यः स्नात्वाह्याराध्यपरमेश्वरम्

इहलोके बलैर्युक्तः परे मोक्षमवाप्नुयात् ।
देवान्पितॄन्समभ्यर्च्य पितृणामनृणी भवेत् ॥ ४ ॥
तत्र तीर्थे नरो यस्तु प्राणत्यागं करोति वै ।
अनिवर्त्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ५ ॥
तत्र तीर्थे नरः स्नात्वा हयमेधफलं लभेत् ॥ ६ ॥
तत्र तीर्थे नरो यस्तु ब्राह्मणान्भोजयेन्नृप ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ७ ॥

तत्र तीर्थे तुयः कश्चित्पूयेद्वृषभध्वजम् । वाजपेयस्ययज्ञस्य फलं प्राप्नोत्यसंशयम्
इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे पुङ्खिलतीर्थमाहात्म्यवर्णनंनाम दशोत्तरद्विशततमोऽध्यायः ॥

---

# एकादशाधिकद्विशततमोऽध्यायः

## मुण्डितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

आश्चर्यभूतं लोकस्य देवदेवेन यत्कृतम् । तत्ते सर्वं प्रवक्ष्यामि नर्मदातटवासिनाम्
द्विजान्सुकृपणान्देवः कुष्ठीभूत्वा ययाचह । श्राद्धकालेतु संप्राप्ते रक्तगन्धानुलेपनः
स्रवद्बुद्बुदगात्रस्तु मक्षिकाकृमिसंवृतः । दुश्चर्मादुर्मुखो गन्धी प्रस्खलंश्चपदेपदे

ब्राह्मणावसथं गत्वा स्खलन्द्वारेऽब्रवीदिदम् ।
भोभो गृहपते! त्वद्य ब्राह्मणैः सह भोजनम् ॥ ४ ॥
त्वद्गृहे कर्तुमिच्छामि ह्येभिः सह सुसंस्कृतम् ।
ततस्तं ब्राह्मणं दृष्ट्वा यजमानसमन्विताः ॥ ५ ॥
स्रवन्तं सर्वगात्रेषु धिग्धिगित्येवमब्रुवन् ।
निर्गच्छस्वाऽऽशु दुर्गन्ध! गृहाच्छीघ्रं द्विजाधम !॥ ६ ॥

अभोज्यमेतत्सर्वेषां दर्शनात्तव सत्कृतम् । एवमेव तथेत्युक्त्वा देवदेवो महेश्वरः

जगामाऽऽकाशममलं दृश्यमानो द्विजोत्तमैः ।
गते चाऽदर्शनं देवे स्नात्वाऽभ्युक्ष्य समन्ततः ॥ ८ ॥

भुञ्जतेऽस्म द्विजा राजन्यावत्पात्रेपृथक्पृथक् । यत्रयत्र चपश्यन्तितत्रतत्रकृमिर्बहुः

दृष्ट्वा विस्मयमापन्नाः सर्वे किमिति चाऽब्रुवन् ।
ततः कश्चिदुवाचेदं ब्राह्मणो गुणवानजः ॥ १० ॥

योगीन्द्रः शङ्कया तत्र बहुविप्रसमागमे । योऽत्रपूर्वं समायातःसयोगीपरमेश्वरः ॥

तस्येदं क्रीडितं मन्ये भर्त्सितस्य विपाकजम् ।
फलं भवति नाऽन्यस्य ह्यतिथेः शास्त्रनिश्चयात् ॥ १२ ॥

सम्पूज्य परमात्मावै ह्यतिथिश्चविशेषतः । श्राद्धकालेतुसम्प्राप्तमतिथिंयोनपूजयेत्

पिशाचा राक्षसास्तस्य तद्विलुम्पन्त्यसंशयम् ।
रूपान्वितं विरूपं वा मलिनं मलिनाम्बरम् ॥ १४ ॥
योगीन्द्रं श्वपचञ्च वाऽपि अतिथिं न विचारयेत् ।
तच्छ्रुत्वा वचनं तस्य यजमानपुरोगमाः ॥ १५ ॥
ब्राह्मणा द्विजमन्वेष्टुं धाविताः सर्वतोदिशम् ।
तावत्कथञ्चित्केनाऽपि गहनं वनमाश्रितः ॥ १६ ॥

दृष्टोदृष्टइतिप्रोक्तेतेन ते सर्वआगताः । ततःपश्यन्ति तं विप्रंस्थाणुवन्निश्चलंस्थितम्
नक्रन्दते नचलति स्पन्दते न चपश्यति । जल्पन्तिकरुणंकेचित्स्तुवन्तिचतथाऽपरे

वाग्भिः सततमिष्टाभिः स्तूयमानस्त्रिलोचनः ।
क्षुधार्दितानां देवेश! ब्राह्मणानां विशेषतः ॥
विनष्टमन्नं सर्वेषां पुनः संकर्तुमर्हसि ॥ १६ ॥

श्रुत्वा तुवचनं तेषां ब्राह्मणानां युधिष्ठिर । परयाकृपया देवः प्रसन्नस्तानुवाच ह

मया प्रसन्नेन महानुभावास्तदेव वोऽन्नं विहितं सुधेव ।
भुञ्जन्तु विप्राः सह बन्धुभृत्यैरर्चन्तु नित्यं मम मण्डलं च ॥ २१ ॥

ततश्चायतनं पार्थ देवदेवस्य शूलिनः । मुण्डिनामेति विख्यातं सर्वपापहरं शुभम्

कार्तिक्यां तु विशेषेण गयातीर्थेन तत्समम् ॥ २२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे मुण्डितीर्थमाहात्म्यवर्णनंनामैकादशोत्तरद्विशततमोऽध्यायः

———

# द्वादशाधिकद्विशततमोऽध्यायः

## एकशालडिण्डिमेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

अथान्यत्यसंप्रवक्ष्यामि देवस्यचरितंमहत् । श्रुतमात्रेणयेनाऽऽशुसर्वपापैःप्रमुच्यते
भिक्षुरूपं परं कृत्वा देवदेवो महेश्वरः । एकशालां गतोग्रामं भिक्षार्थीक्षुत्पिपासितः

अक्षसूत्रोद्यतकरो भस्मगुण्ठितविग्रहः ।
स्फुरत्त्रिशूलो विश्वेशो जटाकुण्डलभूषितः ॥ ३ ॥

कृत्तिवासामहाकायो महाहिकृतभूषणः । वादयन्वै डमरुकं डिण्डिमप्रतिमंशुभम्

कपालपाणिर्भगवान्बालकैर्बहुभिर्वृतः ।
क्वचिद्गायन्हसंश्चैव नृत्यन्वादन्क्वचित्क्वचित् ॥ ५ ॥

यत्रयत्र गृहे देवो लीलयाडिण्डिमंन्यसेत् । भाराक्रान्तंगृहं पार्थ तत्रतत्रविनश्यति
एवं संप्रचरन्देवो वेष्टितो बहुभिर्जनैः । दृश्यादृश्येन रूपेण निर्जगामवहिः प्रभुः ॥

इतश्चेतश्च धावन्तं न पश्यन्ति यदा जनाः ।
विस्मितास्ते स्थिताः शम्भुर्भविष्यति ततोऽस्तुवन् ॥ ८ ॥
तेषां तु स्तुवतां भक्त्या शङ्करं जगतां पतिम् ।
डिण्डिरूपो हि भगवान्स्तदाऽसौ प्रत्यदृश्यत ॥ ९ ॥

तदाप्रभृति देवेशो डिण्डिमेश्वरउच्यते । दर्शनात्स्पर्शनाद्राजन्सर्वपापैः प्रमुच्यते

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे एकशालडिण्डिमेश्वरतीर्थमाहात्म्यवर्णनं नाम
द्वादशोत्तरद्विशततमोऽध्यायः ॥ २१२ ॥

———

# त्रयोदशाधिकद्विशततमोऽध्यायः

## आमलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

पुनरन्यत्प्रवक्ष्यामि देवस्य चरितं महत्। श्रुतमात्रेण येनैव सर्वपापैः प्रमुच्यते॥
अबालो बालरूपेण ग्रामण्यैर्बालकैःसह। आमलैःक्रीडते शम्भुस्तत्तेवक्ष्यामिभारत
सर्वैस्तैरामलाः क्षिप्ता ये ते देवेन पाण्डव !।
आनीतास्तत्क्षणादेव ततः पश्चात्क्षिपेद्धरः॥ ३॥
यावद्गत्वा दिशो दिग्भ्य आगच्छन्ति पृथक्पृथक्।
तावत्तमामलं भूतं पश्यन्ति परमेश्वरम्॥ ४॥
तृतीये चैव यत्कर्म देवदेवस्य धीमतः। स्थानानां परमं स्थानमामलेश्वरमुत्तमम्
तेन पूजितमात्रेण प्राप्यते परमं पदम्॥ ६॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे आमलेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रयोदशोत्तरद्विशततमोऽध्यायः

---------

# चतुर्दशाधिकद्विशततमोऽध्यायः

## श्रीकपालतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

चतुर्थं संप्रवक्ष्यामि देवस्य चरितंमहत्। श्रुतमात्रेण येनैवसर्वपापैः प्रमुच्यते॥
कपाली कान्थिको भूत्वा यथा स व्यचरन्महीम्।
पिशाचै राक्षसैर्भूतैर्डाकिनीयोगिनीवृतः॥ २॥

भैरवं रूपमास्थाय प्रेतासनपरिग्रहः । त्रैलोक्यस्याऽभयं दत्त्वाचचार विपुलं तपः
आषाढीतु कृतातत्रह्याषाढीनामविश्रुतम् । कन्थामुक्ता ततोऽन्यत्रदेवेनपरमेष्ठिना
तदाप्रभृतिराजेन्द्र! स कन्थेश्वर उच्यते । तस्य दर्शनमात्रेण ह्यश्वमेधफलं लभेत् ॥
देवो मार्गे पुनस्तत्र भ्रमते चयदृच्छया । विक्रीणातिबलाकारो दृष्ट्वाचोक्तोहरेणतु
यदि भद्रन चेत्कोपं करोषिमयिसाम्प्रतम् । बलाभिर्भरमेलिङ्गं ददामिबहुते धनम्

एवमुक्तोऽथ देवेन स वणिग्लोभमोहितः ।
योजयामास बलका लिङ्गे चोत्तममध्यमान् ॥ ८ ॥
तावद्यावत्क्षयं सर्वे गताः काले सुसञ्चिताः ।
स्थितं समुन्नतं लिङ्गं दृष्ट्वा शोकमुपागतम् ॥ ६ ॥

कृत्वा तुखण्डखण्डानिस देवःपरमेश्वरः । उवाचप्रहसन्वाक्यं तंद्रष्ट्वागतसाध्वसम्
नचमे पूरितं लिङ्गंयास्यामियदिमन्यसे । ददामि तत्रवित्तंतेयदि लिङ्गंप्रपूरितम्

वणिगुवाच

अधन्योकृतपुण्योऽहं निग्राह्यःपरमेश्वर । तवप्रियमकुर्वाणःशोचिष्येशाश्वतीःसमाः
एतच्छ्रुत्वावचस्तस्यवणिक्पुत्रस्य भारत । असंक्षयंधनं दत्त्वास्थितस्तत्रमहेश्वरः

तदा प्रभृति राजेन्द्र! बलाकैरिव भूषितम् ।
प्रत्ययार्थं स्थितं लिङ्गं लोकानुग्रहकाम्यया ॥ १४ ॥

देवेन रचितं पार्थक्रीडया सुप्रतिष्ठितम् । देवमार्गमिति ख्यातंत्रिषुलोकेषुविश्रुतम्

पश्यन्प्रपूजयन्वाऽपि सर्वपापैः प्रमुच्यते ॥ १५ ॥

देवमार्गे तुयो गत्वापूजयेद्बलाकेश्वरम् । पञ्चायतनमासाद्य रुद्रलोकं सगच्छति
देवमार्गे मृतानां तुनराणांभावितात्मनाम् । नभवेत्पुनरावृत्तीरुद्रलोकात्कदाचन

देवमार्गस्य माहात्म्यं भक्त्या श्रुत्वा नरोत्तम !।
मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ १८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे श्रीकपालतीर्थमाहात्म्यवर्णनंनाम चतुर्दशोत्तरद्विशततमोऽध्यायः॥

# पञ्चदशाधिकद्विशततमोऽध्यायः

## शृङ्गितीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

शृङ्गितीर्थंततोगच्छेन्मोक्षदं सर्वदेहिनाम् । मृतानांतत्र राजेन्द्र मोक्षप्राप्तिर्नसंशयः
तत्रैव पिण्डदानेन पितृणामनृणोभवेत् । तेनपुण्येन पूतात्मा लभेद्वाणेश्वरींगतिम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शृङ्गितीर्थमाहात्म्यवर्णनं नाम पञ्चदशोत्तरद्विशततमोऽध्यायः ॥

---

# षोडशाधिकद्विशततमोऽध्यायः

## अषाढीतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

अषाढीतीर्थमागच्छेत्ततो भूपालनन्दन !। कामिकंरूपमास्थायस्थितोयत्रमहेश्वरः
चातुर्युगमिदं तीर्थंसर्वतीर्थेष्वनुत्तमम् । तत्रस्नात्वानरो राजन्रुद्रस्यानुचरोभवेत्
तत्र तीर्थे तु यः कश्चित्कुरुते प्राणमोक्षणम् ।
अनिवर्त्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ३ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेऽषाढीतीर्थमाहात्म्यवर्णनंनाम षोडशोत्तरद्विशततमोऽध्यायः ॥

---

# सप्तदशाधिकद्विशततमोऽध्यायः

## एरण्डीतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

एरण्डीसङ्गमं गच्छेत्सुरासुरनमस्कृतम्। तत्तु तीर्थं महापुण्यं महापातकनाशनम्
उपवासपरो भूत्वानियतेन्द्रियमानसः। तत्र स्नात्वाविधानेन मुच्यतेब्रह्महत्यया
तत्र तीर्थे तु यो भक्त्या प्राणत्यागपरो भवेत्।
अनिवर्त्तिका गतिस्तस्य रुद्रलोकादसंशयम्॥ ३॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे एरण्डीतीर्थमाहात्म्यवर्णनं नाम सप्तदशोत्तरद्विशततमोऽध्यायः

———

# अष्टादशाधिकद्विशततमोऽध्यायः

## जामदग्न्यतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततोगच्छेद्धराधीश!तीर्थं परमशोभनम्। जमदग्निरितिख्यातं यत्रसिद्धो जनार्द्दनः

### युधिष्ठिर उवाच

कथं सिद्धो द्विजश्रेष्ठ! वासुदेवो जगद्गुरुः।
मानुषं रूपमास्थाय लोकानां हितकाम्यया॥ २॥
एतत्सर्वं यथान्यायंदेवदेवस्यचक्रिणः। चरितं श्रोतुमिच्छामिकथ्यमानंत्वयाऽनघ

### श्रीमार्कण्डेय उवाच

आसीत्पूर्वं महाराज! हैहयाधिपतिर्महान्।

कार्त्तवीर्य इति ख्यातो राजा बाहुसहस्रवान् ॥ ४ ॥

हस्त्यश्वरथसम्पन्नः सर्वशस्त्रभृतां वरः । वेदविद्याव्रतस्नातः सर्वभूताभयप्रदः ॥ ५

माहिष्मत्याः पतिः श्रीमान्राजा ह्यक्षौहिणीपतिः ।

स कदाचिन्मृगान्हन्तुं निर्जगाम महाबलः ॥ ६ ॥

बहुभिर्द्दिवसैः प्राप्तो भृगुकच्छमनुत्तमम् । जमदग्निर्महातेजा यत्र तिष्ठति तापसः

रेणुकासहितः श्रीमान्सर्वभूताभयप्रदः । तस्यपुत्रोऽभवद्रामःसाक्षान्नारायणःप्रभुः

सर्वक्षत्रगुणैर्युक्तो ब्रह्मविद्ब्राह्मणोत्तमः । तोषयन्परया भक्त्या पितरौपरमार्थवत्

तंतदाचार्जुनंदृष्ट्वाजमदग्निः प्रतापवान् । चरन्तंमृगयांगत्वा ह्यातिथ्येनन्यमन्त्रयत्

तथेति चोक्त्वा स नृपः सभृत्यबलवाहनः ।

जगाम चाऽऽश्रमं पुण्यमृषेस्तस्य महात्मनः ॥ ११ ॥

तत्क्षणादेव सम्पन्नं श्रिया परमयावृतम् । विस्मयं परमं तत्र दृष्ट्वा राजा जगामह

गतमात्रस्तु सिद्धेन परमान्नेनभोजितः । सभृत्यबलवान्राजा ब्राह्मणेन यदृच्छया

किमेतदिति पप्रच्छ कारणं शक्तिमेव च ॥ १३ ॥

कामधेनोः प्रभावं तं ज्ञात्वा प्राह ततो द्विजम् ।

दक्षिणां देहि मे विप्र! कल्मषां धेनुमुत्तमाम् ॥ १४ ॥

शतं शतसहस्राणामयुतं नियुतं परम् । भूषितानां च धेनूनां ददामि तवचार्बुदम्

जमदग्निरुवाच

अयुतैःप्रयुतैर्नाऽहं शतकोटिभिरुत्तमाम् । कामधेनुमिमांतात नदद्मिप्रतिगम्यताम्

एवमुक्तः सराजेन्द्रस्तेन विप्रेणभारत । क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ १७

यस्येदृशः कामचारो मय्यपि द्विजपांसन !।

अहं ते पश्यतस्तस्मान्नयामि सुरभिं गृहात् ॥ १८ ॥

द्विज उवाच

कः क्रीडति सरोषेण निर्भयोहिमहाहिना । मृत्युदृष्टोऽन्तरेणाऽपिममधेनुंनयेतयः

एवमुक्त्वा महादण्डं ब्रह्मदण्डमिवाऽपरम् । गृहीत्वा परमक्रुद्धो जमदग्निरुवाचह

यस्याऽस्ति शक्तिस्तेजो वा क्षत्रियस्य कुलाऽधमः ।
धेनुं नयतु मे सद्यः क्षीणायुः सपरिच्छदः ॥ २१ ॥

तच्छ्रुत्वा वचःक्रूरं हैहयः शतशोवृतः । धावमानःक्षितितले ब्रह्मदण्डहतोऽपतत्

हुङ्कृतेन ततो धेन्वाः खड्गपाशासिपाणयः ।
निर्गच्छन्तः प्रदृश्यन्ते कल्मषायाः सहस्रशः ॥ २३ ॥
नासापुटाग्राद्रोमाग्रात्किराता मागधा गुहात् ।
रन्ध्रान्तरेषु चोत्पन्नाः शतशोऽथ सहस्रशः ॥ २४ ॥

एवमन्योऽन्यमाहत्य हैहयष्टंकणान्दहन् । विनाशं सह विप्रेण गता ह्यर्जुनतेजसा

कार्त्तवीर्यो जयं लब्ध्वा सङ्ख्ये हत्वा द्विजोत्तमम् ।
जगाम स्वां पुरीं हृष्टः कृतान्तवशमोहितः ॥ २६ ॥

ततस्त्वरान्वितः प्राप्तःपश्चाद्रामोगतेरिपौ । आक्रन्दमानांजननीं ददर्शपितुरन्तिके

राम उवाच

केनेदमात्मनाशाय ह्यज्ञानात्साहसं कृतम् ।
मम तातं जिघांसुर्यो द्रष्टुं मृत्युमिहेच्छति ॥ २८ ॥

ततःसा रामवाक्येन गतसत्त्वेवविह्वला । उदरं करयुग्मेन ताडयन्ती ह्युवाच तम्
अर्जुनेन नृशंसेन क्षत्रियैरपरैः सह । इहाऽऽगत्यपिता तेन निहतो बाहुशालिना
संपश्य निहतं तातं गतासुं गतचेतसम् । संस्कृत्य विधिवत्पुत्र तर्पयस्वयथातथम्
एतच्छ्रुत्वासवचनं जननीमभिवाद्यताम् । प्रतिज्ञामकरोद्यांतां शृणुष्वचनराधिप

त्रिः सप्तकृत्वः पृथिवीं निः क्षत्रियकुलान्वयाम् ।
स्नात्वा च तेषामसृजा तर्पयिष्यामि ते पतिम् ॥ ३३ ॥
तस्यापि परशुना बाहून्कार्त्तवीर्यस्य दुर्मतेः ।
छित्वा पास्यामि रुधिरमिति सत्यं शृणुष्व मे ॥ ३४ ॥
एवं प्रतिज्ञां कृत्वाऽसौ जामदग्न्यः प्रतापवान् ।
क्रोधेन महताऽऽविष्टः संस्कृत्य पितरं ततः ॥ ३५ ॥

माहिष्मतीं पुरीं रामो जगाम क्रोधमूर्च्छितः ।
छित्वा बाहुवनं तस्य हत्वा तं क्षत्रियाधमम् ॥ ३६ ॥
जगामक्षत्रियान्ताय पृथिवीमवलोकयन् । सप्तद्वीपार्णवयुतां सशैलवनकाननाम्
पूर्वतः पश्चिमामाशां दक्षिणोत्तरतःकुरून् । स्यमन्तपञ्चके पञ्च चकार रुधिरह्रदान्
सतेषुरुधिराम्भस्सुह्रदेषु क्रोधमूर्च्छितः । पितृन्सन्तर्प्पयामासरुधिरेणेतिनःश्रुतम्
अथर्चीकादयोपेत्य पितरो ब्राह्मणर्षभम् । तंक्षमस्वेति जगदुस्ततः स विरराम ह
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
स ( स्य ) मन्तपञ्चकमिति पुण्यं तत्परिकीर्त्तितम् ॥ ४१ ॥
निर्वर्त्त्यकर्मणस्तस्मात्पितॄन्प्रोवाचपाण्डव । रामः परमधर्मात्मायदिदंरुधिरंमया
क्षिप्तं पञ्चसु तीर्थेषु तद्भूयात्तीर्थमुत्तमम् ।
तथेत्युक्त्वा तु ते सर्वे पितरोऽदृश्यतां गताः ॥ ४३ ॥
एवं रामस्य संसर्गोदेवमार्गे युधिष्ठिर । सर्वपापक्षयकरो दर्शनात्स्पर्शनान्नृणाम्
रेणुकाप्रत्ययार्थाय अद्यापि पितृदेवताः । दृश्यन्तेदेव मार्गस्थाःसर्वपापक्षयंकराः
तत्र तीर्थे तुराजेन्द्र नर्मदोदधिसङ्गमे ।
स्थानं कृत्वा विधानेनमुच्यन्तेपातकैर्नराः ॥ ४६ ॥
कुशाग्रेणाऽपि कौन्तेयनस्पृष्टव्यो महोदधिः । अनेन तत्रमन्त्रेण स्नातव्यं नृपसत्तम
नमस्ते विष्णुरूपाय नमस्तुभ्यमपांपते । सान्निध्यंकुरु देवेश सागरे लवणाम्भसि

इति स्पर्शनमन्त्रः

अग्निश्च तेजो मृडया च देहे रेतोऽथ विष्णुरमृतस्य नाभिः ।
एतद्ब्रुवन्पाण्डव सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥ ४९ ॥
पञ्चरत्नसमायुक्तं फलपुष्पाक्षतैर्युतम् । मन्त्रेणाऽनेन राजेन्द्र दद्यादर्घं महोदधेः
सर्वरत्ननिधानस्त्वं सर्वरत्नाकराकरः । सर्वामरप्रधानेश गृहाणार्घं नमोऽस्तु ते

इत्यर्घमन्त्रः

आजन्मजनितात्पापान्मामुद्धर महोदधे । याह्यर्चितोरत्ननिधे पर्वतान्पार्वणोत्तम

इति विसर्ज्जनमन्त्रः

तोऽपरः सागराद्देवात्स्वर्गद्वारविपाटन । तत्र सागरपर्यन्तं महातीर्थमनुत्तमम्
जामदग्न्येन रामेण तत्र देवः प्रतिष्ठितः ।
यत्र देवाः स गन्धर्वा मुनयः सिद्धचारणाः ॥ ५४ ॥
पासते विरूपाक्षं जमदग्निमनुत्तमम् । रेणुकांचैव येदेवीं पश्यन्ति भुवि मानवाः
प्रियवासे शिवे लोके वसन्ति कालमीप्सितम् ।
तत्र स्नात्वा नरो राजंस्तर्पयन्पितृदेवताः ॥ ५६ ॥
तारयेन्नरकाद्घोरात्कुलानां शतमुत्तरम् ।
स्नात्वा दत्त्वाऽत्र सहिताः श्रुत्वा वै भक्तिपूर्वकम् ॥ ५७ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे जामदग्न्यतीर्थमाहात्म्यवर्णनंनामाष्टादशाधिकद्विशततमोऽध्यायः

———

# एकोनविंशत्यधिकद्विशततमोऽध्यायः

## कोटितीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

र्मदादक्षिणे कूले तीर्थं कोटीश्वरंपरम् । यत्रस्नानं चदानं चसर्वं कोटिगुणंभवेत्
तत्र देवाः सगन्धर्वा ऋषयो ये तथाऽमलाः ।
कोटितीर्थे परां सिद्धिं संप्राप्ता भुवि दुर्लभाम् ॥ २ ॥
स्थापितश्च महादेवस्तत्र कोटीश्वरोनृप । तंदृष्ट्वादेवदेवेशं सिद्धिं प्राप्नोत्यनुत्तमाम्
तत्र तीर्थे तु यत्किंचिच्छुभं वा यदि वाऽशुभम्
क्रियते तन्नृपश्रेष्ठ! सर्वं कोटिगुणं भवेत् ॥ ४ ॥
तत्र दक्षिणमार्गस्था ये केचिन्मुनिसत्तमाः ।

सिद्धा मृताः पदं यान्ति पितृलोकं ध्रुवं हि ते ॥ ५ ॥
उत्तरं नर्मदाकूलं ये श्रेष्ठा मुनिपुङ्गवाः । देवलोकंगताः पूर्वमिति शास्त्रस्यनिश्चयः

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनंनामैकोनविंशदधिकद्विशततमोऽध्यायः

---

# विंशत्यधिकद्विशततमोऽध्यायः

## लोटणेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेद्धराधीश लोटणेश्वरमुत्तमम् । उत्तरे नर्मदाकूले सर्वपातकनाशनम् ॥
तत्क्षणादेव तत्सर्वं सप्तजन्मार्जितं त्वघम् । नश्यते देवदेवस्य दर्शनादेव तन्नृप!
बाल्यात्प्रभृति यत्पापं यौवने चाऽपि यत्कृतम् ।
तत्सर्वं विलयं याति देवदेवस्य दर्शनात् ॥ ३ ॥

युधिष्ठिर उवाच

आश्चर्यभूतं लोकेषु नर्मदाचरितं महत् । त्वया वै कथितं विप्र सकलं पापनाशनम
यदेकं परमं तीर्थं सर्वतीर्थफलप्रदम् । श्रोतुमिच्छामितत्सर्वं दयां कृत्वावदाऽऽशुमे
ये केचिद्दुर्लभाःप्रश्नास्त्रिषु लोकेषुसत्तम । त्वत्प्रसादेनते सर्वे श्रुतामेसहबान्धवैः
एतमेकं परं प्रश्नं सर्वप्रश्नविदां वर । श्रुत्वाऽहं त्वत्प्रसादेन यत्र यामि सबान्धवः

श्रीमार्कण्डेय उवाच

साधुसाधु महाप्राज्ञ! यस्य ते मतिरीदृशी ।
दुर्लभं त्रिषु लोकेषु तस्य ते नाऽस्ति किञ्चन ॥ ८ ॥
धर्ममर्थं चकामं चमोक्षं चभरतर्षभ । कालेकालेचयो वेत्ति कर्त्तव्यस्तेन धीमता ॥
तस्मात्ते सम्प्रवक्ष्यामि प्रश्नस्यास्योत्तरं शुभम् ।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यन्ते भुवि मानवाः ॥ १० ॥
नर्मदा सरितां श्रेष्ठासर्वतीर्थमयीशुभा। विशेषः कथितस्तस्यारेवासागरसङ्गमे
आगच्छन्तीं नृपश्रेष्ठ! दृष्ट्वा रेवां महोदधिः। प्रणम्यच पुनर्देवीं सङ्गमे रेवया सह॥
सञ्चिन्त्य मनसा केयमिति मां वै सरिद्वरा।
ज्ञात्वा सञ्चिन्त्य मनसा रेवां लिङ्गोद्भवां पराम्॥ १३ ॥
लुठन्वै सम्मुखस्तात गतोरेवां महोदधिः। समुद्रेनर्मदा यत्रप्रविष्टाऽस्तिमहानदी
तत्र देवाधिदेवस्य समुद्रे लिङ्गमुत्थितम्।
लिङ्गोद्भूता महाभागा नर्मदा सरितां वरा ॥ १५ ॥
लयंगता तत्र लिङ्गे तेन पुण्यतमाहिसा। नर्मदायां वसन्नित्यं नर्मदाम्बुपिबन्सदा
दीक्षितः सर्वयज्ञेषु सोमपानं दिने दिने ॥ १६ ॥
सङ्गमे तत्र यः स्नात्वा लोटणेश्वरमर्च्चयेत्।
सोऽश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १७ ॥
वाचिकं मानसं पापंकर्मणा यत्कृतंनृप। लोटणेश्वरमासाद्य सर्वंविलयतां व्रजेत्
कार्त्तिक्यां तु विशेषेण कथितंशङ्करेणतु। तच्छृणुष्व नृपश्रेष्ठ सर्वपापापनोदनम्
संप्राप्तां कार्त्तिकींदृष्ट्वा गत्वातत्रनृपोत्तम। चतुर्दश्यामुपोष्यैव स्नात्वावैनर्मदाजले
संतर्प्य पितृदेवांश्च श्राद्धं कृत्वा यथाविधि।
रात्रौ जागरणं कुर्यात्सम्पूज्य लोटणेश्वरम् ॥ २१ ॥
सफलंजीवितं यस्य सफलं तस्यचेष्टितम्। पङ्गवस्तेन सन्देहोजन्म तेषांनिरर्थकम्
एकाग्रमनसा यैस्तु नदृष्टो लोटणेश्वरः। पिशाचत्वं वियोनित्वंनभवेत्तस्यवै कुले
सङ्गमे तत्र योगत्वा स्नानं कृत्वा यथाविधि।
पुण्यैश्चैव तथा कुर्याद्गीतैर्नृत्यैःप्रबोधनम् ॥ २४ ॥
ततः प्रभातां रजनीं दृष्ट्वा नत्वा महोदधिम्।
आमन्त्र्य स्नानविधिना स्नानं तत्र तु कारयेत् ॥ २५ ॥
ॐ नमो विष्णुरूपायतीर्थनाथायतेनमः। सान्निध्यंकुरु मे देवसमुद्रलवणाम्भसि

इत्यामन्त्रणमन्त्रः

अग्निश्चश्च तेजो मृडया च देहो रेतोऽधा विष्णुरमृतस्य नाभिः।
एवं ब्रुवन्पाण्डव! सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥ २७ ॥

इति स्नानमन्त्रः

आजन्मसतसाहस्त्रंयत्पापं कृतवान्नरः। सकृत्स्नानाद्व्यपोहेत पापौघंलवणाम्भसि
अन्यथा हिकुरुश्रेष्ठदेवयोनिरसौविभुः। कुशाग्रेणाऽपि विबुधैर्नस्प्रष्टव्योमहार्णवः
सर्वरत्नप्रधानस्त्वं सर्वरत्नाकराकर ॥ सर्वामरप्रधानेश! गृहणार्घं नमोऽस्तु ते ॥

इति अर्घमन्त्रः

पितृदेवमनुष्यांश्च सन्तर्प्य सदनंतरम् । उत्तीर्य तीरेतस्यैव पञ्चभिर्द्विजपुङ्गवैः ॥
श्राद्धं समाचरेत्पश्चाल्लोकपालानुरूपिभिः।
कृत्वाऽग्रे लोकपालांस्तु प्रतिष्ठाप्य यथाविधि ॥ ३२ ॥
सम्पूज्य च यथान्यायं तानेव ब्राह्मणैःसह। सुकृतंदुष्कृतं पश्चात्तेभ्यःसर्वंनिवेदयेत्
बाल्यात्प्रभृति यत्पापं कृतं वार्धकयौवने।
प्रख्यापयित्वा तेभ्योऽग्रे लोकपालान्निमन्त्रयेत् ॥ ३४ ॥
बाल्यात्प्रभृति यत्किञ्चित्कृतमाजन्मतोऽशुभम्।
विप्रेभ्यः कथितं सर्वं तत्सान्निध्यं स्थितेषु मे ॥ ३५ ॥
इत्युक्त्वा स लुठेत्पश्चात्तेभ्योऽग्रेण च सम्मुखम्।
अनुमान्य च तान्पञ्च पश्चात्स्नानं समाचरेत् ॥ ३६ ॥
श्राद्धंचकार्यं विधिवत्पितृभ्यो नृपसत्तम! । एवंकृते नृपश्रेष्ठ सर्वपापक्षयो भवेत्
जिज्ञासार्थं तु यः कश्चिदात्मानं ज्ञातुमिच्छति।
शुभाऽशुभं च यत्कर्म तस्य निष्ठामिमां शृणु ॥ ३८ ॥
स्नात्वा तत्र महातीर्थेलुठमानो व्रजेन्नरः। पापकर्माऽन्यतोयातिधर्मकर्माव्रजेन्नदीम्
पापकर्मा ततो ज्ञात्वा पापं मे पूर्वसञ्चितम्।
स्नात्वा तीर्थवरे तस्मिन्दानं दद्याद्यथाविधि ॥ ४० ॥

लोटणेश्वरमभ्यर्च्य सर्वपापैः प्रमुच्यते । अवक्रगमनं गत्वा मुच्यते सर्वपातकैः ॥
तस्मात्सर्वप्रयत्नेन ज्ञात्वैवं नृपसत्तम !। स्नातव्यंमानवैस्तत्र यत्र सन्निहितो हरः

एवं स्नात्वा विधानेन ब्राह्मणान्वेदपारगान् ।
पूजयेत्पृथिवीपाल सर्वपापोपशान्तये ॥ ४३ ॥

एवंगुणविशिष्टं हितत्तीर्थं नृपसत्तम । तस्य तीर्थस्य माहात्म्यं शृणुष्वैकमनानृप
तत्रतीर्थेनरःस्नात्वा संतर्प्यपितृदेवताः । श्राद्धंयःकुरुते तत्रपितॄणांभक्तिभावितः
दानं ददातिविप्रेभ्यो गोभूतिलहिरण्यकम् । षष्टिवर्षसहस्राणिकोटिवर्षशतानिच
विमानवरमारूढः स्वर्गलोके महीयते । नर्मदासर्वतीर्थेभ्यः स्नानेदाने च यत्फलम्
तत्फलंसमवाप्नोति रेवासागरसङ्गमे । सुवर्णं रजतं ताम्रं मणिमौक्तिकभूषणम्
गोवृषं चमहींधान्यं तत्रदत्त्वाऽक्षयंफलम् । शुभस्याप्यशुभस्यापितत्रतीर्थेनसंशयः

तत्र तीर्थे नरः कश्चित्प्राणत्यागं युधिष्ठिर !।
करोति भक्त्या विधिवत्तस्य पुण्यफलं शृणु ॥ ५० ॥

कोटिवर्षं तु वर्षाणां क्रीडित्वाशिवमन्दिरे । वेदवेदाङ्गविद्विप्रो जायतेविमलेकुले

पुत्रपौत्रसमृद्धोऽसौ धनधान्यसमन्वितः ।
सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ५२ ॥

अपि द्वादशयात्रासुसोमनाथे यदर्चिते । कार्त्तिक्यांकृत्तिकायोगे तत्पुण्यंलोटणेश्वरे
गयागङ्गाकुरुक्षेत्रे नैमिषेपुष्करे तथा । तत्पुण्यं लभते पाथ लोटणेश्वरदर्शनात् ॥

यः शृणोति नरो भक्त्या पठ्यमानमिदं शुभम् ।
सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ ५५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे लोटणेश्वरतीर्थमाहात्म्यवर्णनं नाम विंशत्युत्तरद्विशततमोऽध्यायः

———

# एकविंशत्यधिकद्विशततमोऽध्यायः

## हंसेश्वरतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र! रेवायादक्षिणेतटे। क्रोशद्वयान्तरे तीर्थं मातृतीर्थादनुत्तमम्
नाम्ना हंसेश्वरं पुण्यं वैमनस्यविनाशनम्।
कश्यपस्य कुले जातो हंसो दाक्षायणीसुतः॥ २॥
ब्रह्मणो वाहनं जातः पुरा तप्त्वा तपो महत्।
सैकदाविधिनिर्देशं विनावैयग्र्यमास्थितः॥ ३॥
अभिभूतः शिवगणैः प्रणनाश युधिष्ठिर। दक्षयज्ञप्रमथने कान्दिशीकोविधिंविना
ब्रह्मणा संस्मृतोऽप्याशु नायाति स यदा खगः।
तदा तं शप्तवान्ब्रह्मा पातयामास वै पदात्॥ ५॥
ततः स शप्तमात्मानं मत्वा हंसस्त्वरान्वितः।
पितामहमुपागम्य प्रणिपत्येदमब्रवीत्॥ ६॥

### हंस उवाच

तिर्यग्योनिसमुत्पन्नं भवाञ्छप्तुं नचार्हसि। स्वभावएवतिर्यक्षु विवेकविकलंमनः
तथापिदेवपापोऽस्मियदहं स्वामिनंत्यजे। किंतुधावद्भिरत्युग्रैर्गणैःशार्वैःपितामह
सहसाऽहं भयाक्रान्तस्त्रस्तस्त्यक्त्वा पलायितः॥ ८॥
अद्यापि भयमेवाहं पश्यन्नस्मिविभो पुरः। तेनस्मृतोऽपि भवतानाव्रजंभवदन्तिके

### श्रीमार्कण्डेय उवाच

इति ब्रुवन्नेव हि धातुरग्रे हंसः श्वसत्यक्षिपूज्यः सुदीनः।
तिर्यञ्चं मां पापिनं मूढबुद्धिं प्रभो पुरः पतितं पाहिपाहि॥ १०॥
एको देवस्त्वं हि सर्गस्य कर्ता नानाविधं सृष्टमेतत्त्वयैव।

अहं सृष्टस्त्वीदृशो यत्त्वया वै सोऽयं दोषो धातरद्धा तवैव ॥ ११ ॥
शापस्य वानुग्रहस्यापि शक्तस्त्वत्तो नान्यः शरणं कं व्रजामि ।
सेवाधर्माद्विच्युतं दासभूतं चपेटैर्हन्तव्यं वै तात! मां त्राहि भक्तम् ॥ १२॥
विद्याविद्ये त्वत्त एवाविरास्तां धर्माधर्मौ सदसद्द्युनिशे च ।
नानाभावाञ्जगतस्त्वं विधत्सेस्तं त्वामेकं शरणं वै प्रपद्ये ॥ १३ ॥
एकोऽसि बहुरूपोऽसि नानाचित्रैककर्मतः ।
निष्कर्माखिलकर्माऽसि त्वामतः शरणं व्रजे ॥ १४ ॥
नमोनमो वरेण्याय वरदाय नमोनमः । नमो धात्रे विधात्रे चशरण्याय नमोनमः
शिक्षाक्षरवियुक्तेयं वाणी मे स्तौति किं विभो !।
का शक्तिः किं परिज्ञानमिदमुक्तं क्षमस्व मे ॥ १६ ॥

श्रीमार्कण्डेय उवाच

एवं वदतिहंसे वै ब्रह्मा प्राहप्रसन्नधीः । शिक्षादत्ता तवैवेयं मा विषादंकुथाःखग
तपसा शोधयाऽऽत्मानं यथा शापान्तमाप्नुयाः ।
रेवासेवां कुरु स्नात्वा स्थापयित्वा महेश्वरम् ॥
अचिरेणैव कालेन ततः संस्थानमाप्स्यसि ॥ १८ ॥
यच्चेष्ट्वाबहुभिर्यज्ञैः समाप्तवरदक्षिणैः । गोस्वर्णकोटिदानैश्च तत्फलंस्थापितेशिवे
ब्रह्मघ्नो वा सुरापो वा स्वर्णहृद्गुरुतल्पगः ।
रेवातीरे शिवं स्थाप्य मुच्यते सर्वपातकैः ॥ २० ॥
तस्माद्भर्गसरित्तीरे स्थापयित्वा त्रियम्बकम् ।
वियुक्तः सर्वदोषैस्त्वं यास्यसे पदमुत्तमम् ॥ २१ ॥
एवमुक्तः सविधिना हृष्टतुष्टःखगोत्तमः । तथेत्युक्त्वा जगामाशु नर्मदातीरमुत्तमम्
तपस्तप्त्वा कियत्कालं स्थापयामास शङ्करम् ॥ २३ ॥
स्वनाम्ना भरतश्रेष्ठ हंसेश्वरमनुत्तमम् । पूजयित्वापरं स्थानं प्राप्तवान्खगसत्तमः
तत्र हंसेश्वरे तीर्थे गत्वा स्नात्वा युधिष्ठिर !। पूजयेत्परमेशानं सपापैःपरिमुच्यते

स्तुवन्नेकमना देवंनदैन्यंप्राप्नुयात्क्वचित् । श्राद्धंदीपप्रदानं चब्राह्मणानांचभोजनम्
दत्त्वा शक्त्या नृपश्रेष्ठ! स्वर्गलोके महीयते ॥ २६ ॥
त्रिकालमेककालं वा यो भक्त्या पूजयेच्छिवम् ।
नवप्रसूतां धेनुं च दत्त्वा पार्थ! द्विजोत्तमे ॥
षष्टिवर्षसहस्राणि शिवलोके महीयते ॥ २७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे-रेवाखण्डे हंसेश्वरतीर्थमाहात्म्यवर्णनंनामैकविंशदधिकद्विशततमोऽध्यायः ॥

---

## द्वाविंशत्यधिकद्विशततमोऽध्यायः

### तिलादेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततः क्रोशान्तरे गच्छेत्तिलादं तीर्थमुत्तमम् ।
तिलप्राशनकृद्यत्र जाबालिः शुद्धिमाप्तवान् ॥ १ ॥
पितृमातृपरित्यागी भ्रातुर्भार्याभिलाषकृत् । पुत्रविक्रयकृत्पापश्छलकृद्गुरुणासह
एवंदोषसमाविष्टो यत्रयत्रापि गच्छति । तत्र तत्रापि धिक्कारंलभते सत्सु भारत!
न कोऽपि सङ्गतिं धत्ते तेन सार्द्धं सभास्वपि ॥ ३ ॥
इति लज्जान्वितो विप्रः कालेन महतान्नृप । चिन्तामवापमहतीमगतिज्ञोहि पावने
चकार सर्वतीर्थानि रेवां चाप्यवगाहयत् ॥ ५ ॥
अणिवापान्तमासाद्य दक्षिणे नर्मदातटे ।
तस्थौ यत्र व्रती पार्थ! जाबालिः प्राशयंस्तिलान् ॥ ६ ॥
तिलैरेकाशनं कुर्वंस्तथैवैकान्तराशनम् । त्र्यहषड्द्वादशाहाशीपक्षमासाशनस्तथा
कृच्छ्रचान्द्रायणादीनि व्रतानि च तिलैरपि ।

तिलादत्वमनुप्राप्तो ह्यब्दद्वासप्ततिं क्रमात् ॥ ८ ॥

कालेन गच्छता तस्य प्रसन्नोऽभवदीश्वरः ।

प्रादादिहामुत्रिकीं तु शुद्धिं सालोक्यमात्मकम् ॥ ६ ॥

तेनस स्थापितोदेवः स्वनाम्नाभरतर्षभ । तिलादेश्वरसञ्ज्ञाञ्च प्रापलोकादपिप्रभुः
तदा प्रभृति विख्यातं तीर्थंपापप्रणाशनम् । तत्रतीर्थेनरः स्नात्वाचतुर्दश्यष्टमीषुच
उपवासपरः पार्थ तथैव हरिवासरे। तिलहोमी तिलोद्वर्ती तिलस्नायीतिलोदकी
तिलदाता चभोक्ता च नानापापैःप्रमुच्यते । तिलैरापूरयेल्लिङ्गं तिलतैलेन दीपदः

रुद्रलोकमवाप्नोति पुनात्यासप्तमं कुलम् ॥ १३ ॥

तिलपिण्डप्रदानेनश्राद्धेनृपतिसत्तम !। विकर्मस्थाश्चगच्छन्तिगतिमिष्टांहिपूर्वजाः

स्वर्गलोकस्थिताः श्राद्धैर्ब्राह्मणानां च भोजनैः ।

अक्षयां तृप्तिमासाद्य मोदन्ते शाश्वतीः समाः ॥ १५ ॥

पितुः कुलं मातृकुलं तथा भार्याकुलं नृप । कुलत्रयं समुद्धृत्यस्वर्गंनयति वै नरः

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे तिलादेश्वरतीर्थमाहात्म्यवर्णनंनाम द्वाविंशत्यधिकद्विशततमोऽध्यायः

---------

# त्रयोविंशत्यधिकद्विशततमोऽध्यायः

## वासवेश्वरतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततः क्रोशान्तरे पार्थ! वासवं तीर्थमुत्तमम् ।

वसुभिः स्थापितं तत्र स्थित्वा वै द्वादशाब्दकम् ॥ १ ॥

धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः । प्रत्यूषश्चप्रभासश्चवसवोऽष्टाविमेपुरा
पितृशापपरिक्लिष्टा गर्भवासाय भारत । नार्मदं तीर्थमासाद्य तपश्चक्रुर्यतेन्द्रियाः

आराधयन्तः परमं भवानीपतिमव्ययम् । द्वादशाब्दानि राजेन्द्र ततस्तुष्टो महेश्वर
प्रत्यक्षः प्रददौ तेभ्यस्त्वभीष्टंवरमुत्तमम् । ततःस्वनाम्नासंस्थाप्यघस्रवस्तंमहेश्वरम्
जग्मुराकाशमाविश्य प्रसन्ने सति शङ्करे ॥ ५ ॥
ततः प्रभृति विख्यातं तीर्थं तद्वासवाह्वयम् ।
तस्मिंस्तीर्थे महाराज! यो भक्त्या पूजयेच्छिवम् ॥
यथालब्धोपहारैश्च दीपं दद्यात्प्रयत्नतः ॥ ६ ॥
शुक्लपक्षे तदाष्टम्यांप्रत्यहं वापिशक्तितः । अष्टौवर्षसहस्राणि सवसेच्छिवसन्निधौ
ततःशिवालयं यातिगर्भवासं नपश्यति । पुष्पैर्वापल्लवैर्वापि फलैर्धान्यैस्तथापिवा
पूजयेद्देवमीशानं सदैन्यं नाप्नुयात्क्वचित् । सर्वशोकविनिर्मुक्तः स्वर्गलोकेमहीयते
एकाहमपि कौन्तेय योवसेद्वासवेश्वरे । पापराशिं विनिर्धूय भानुवद्दिवि मोदते
विप्रांश्च भोजयेद्भक्त्या दद्याद्वासांसि दक्षिणाम् ॥ ११ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे वासवेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः

---

# चतुर्विंशत्यधिकद्विशततमोऽध्यायः

## कोटीश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततः क्रोशान्तरेपार्थतीर्थं कोटीश्वरंपरम् । यत्रस्नानंच दानंचजपहोमार्चनादिकम्
भक्त्या कृतं नरैस्तत्र सर्वं कोटिगुणं भवेत् ॥ १ ॥
तत्रदेवाःसगन्धर्वाऋषयः सिद्धचारणाः । जलधिंप्रति गच्छन्तिनर्मदांवीक्षितुंकिल
मिलिताः कोटिशो राजन्रेवासागरसङ्गमे । विनोदमतुलं दृष्ट्वा रेवार्णवसमागमे
स्नात्वा शिवं च संस्थाप्य पूजयित्वा महेश्वरम् ।

कोटीश्वराभिधानं तु स्वस्वभक्त्या विधानतः ॥ ४ ॥
कोटीतीर्थे परां सिद्धिं सम्प्राप्ताः सर्वतोषणात् ।
तेन तत्पुण्यमतुलं सर्वतीर्थेषु चोत्तमम् ॥ ५ ॥
तत्र तीर्थे तु यत्किंचिच्छुभं वा यदि वाऽशुभम् ।
क्रियते नृपशार्दूल! सर्वं कोटिगुणं भवेत् ॥ ६ ॥

तत्रतीर्थेतुमार्गस्थायेकेचिदृषिसत्तमाः । सिद्धामृतपदं यान्तिपितृलोकंतथोत्तमम्
उत्तरे नर्मदातीरे दक्षिणेचाश्रिताश्चये । देवलोकं गतास्तत्र इति मेनिश्चिता मतिः
बिल्वार्कपुष्पैर्धत्तूरकुशकाशप्रसूनकैः । ऋतूद्भवैस्तथान्यैश्च पूजयित्वा महेश्वरम्
नानोपचारैर्विधिवन्मन्त्रपूर्वं युधिष्ठिर । धूपदीपार्घनैवेद्यैस्तोषयित्वा चधूर्जटिम्
शिवलोकमवाप्नोति यावदिन्द्राश्चतुर्दश । पौषकृष्णाष्टमीयोगेविशेषः पूजनेस्मृतः
नित्यं चनृपतिश्रेष्ठ चतुर्दश्यष्टमीषु च । शिवमभ्यर्च्य विप्रांश्चभोजयेद्भक्तितो वरान्

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कोटीश्वरतीर्थमाहात्म्यवर्णनंनामचतुर्विंशत्यधिकद्विशततमोऽध्यायः

---

# पञ्चविंशत्यधिकद्विशततमोऽध्यायः

## अलिकेश्वरतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततः क्रोशान्तरे गच्छेदलिकातीर्थमुत्तमम् ।
अलिकानाम गान्धर्वी कुशीला कुटिलाशया ॥ १ ॥

चित्रसेनस्य दौहित्री विद्यानन्दमृषिंगता । चव्रे तंस्वीकृतातेन दशवर्षाणितंश्रिता
पतिं जघान तंसुप्तं कस्मिंश्चित्कारणान्तरे । गत्वानिवेदयामासपितरंरत्नवल्लभम्
पित्रा मात्रा च संत्यक्ता बहुभिर्भर्त्सिता नृप !।

गर्भघ्नी त्वं पतिघ्नी त्वमिति दर्शय मा मुखम् ॥ ४ ॥
ब्रह्मघ्नी याहि पापिष्ठे! परित्यक्ता गृहाद्व्रज ॥ ५ ॥

मार्कण्डेय उवाच

इति दुःखान्विता मूढा ताभ्यां निर्भत्सिता सती।
तनुं त्यक्तुं मनश्चक्रे प्राप्य तीर्थान्तरं क्वचित् ॥ ६ ॥
सम्पृच्छ्यमाना तीर्थानि ब्राह्मणेभ्यो युधिष्ठिर !।
श्रुत्वा पापहरं तीर्थं रेवासागरसङ्गमे ॥ ७ ॥
तत्रपार्थतपश्चक्रेनिराहाराजितव्रता । कृच्छ्रातिकृच्छ्रपाराकमहासान्तपनादिभिः
चान्द्रायणैर्ब्रह्मकूर्चैः कर्शयामासवैतनुम् । एवं वर्षशतंसार्द्धं व्यतीतं तपसा नृप !॥
तस्या विशुद्धिमिच्छन्त्या शिवध्यानार्चनादिभिः।
ततः कतिपयाहोभिस्तस्या ज्ञात्वा हठं परम् ॥
परितुष्टः शिवः प्राह पार्वत्या परिनोदितः ॥ १० ॥

ईश्वर उवाच

पुत्रि मा साहसं कार्षीः शुद्धदेहाऽसि साम्प्रतम्।
तुष्टोऽहं तपसा तेऽद्य वरं वरय वाञ्छितम् ॥ ११ ॥

अलिकोवाच

यदि तुष्टोऽसि देवेश! वरार्हायद्यहंमता । नानापापाग्नितप्ताया देहिशुद्धिपरां मम
त्वं मे नाथो ह्यनाथायास्त्वमेव जगतां गुरुः।
दीनानाथसमुद्धर्त्ता शरण्यः सर्वदेहिनाम् ॥ १३ ॥

ईश्वर उवाच

त्वं भद्रे! शुद्धदेहाऽसि मा किञ्चिदनुशोचिथाः।
स्वनाम्ना स्थापयित्वेह मां ततः स्वर्गमेष्यसि ॥ १४ ॥
इत्युक्त्वा देवदेवेशस्तत्रैवाऽन्तरधीयत ।
अलिकाऽपि ततो भक्त्या स्नात्वा संस्थाप्य शङ्करम् ॥ १५ ॥

दत्त्वादानंच विप्रेभ्योलोकमापमहोत्कटम् । पितरंचसमासाद्यमातरं च युधिष्ठिर!
तैश्चसन्मानिता प्रीत्या बन्धुभिः साऽलिका ततः ।
विमानवरमारूढा दिव्यमालान्विता नृप !॥ १७ ॥
गौरीलोकमनुप्राप्तासखित्वेऽद्यापिमोदते । ततःप्रभृतितत्पार्थविख्यातमलिकेश्वरम्
तत्र तीर्थे तु या नारी पुरुषो वा युधिष्ठिर !।
स्नात्वा सम्पूजयेद्भक्त्या महादेवमुमायुतम् ॥ १६ ॥
सपापैर्विविधैर्मुक्तो लोकमाप्नोति शाङ्करम् ।
मानसं वाचिकं पापं कायिकं यत्पुरा कृतम् ॥ २० ॥
सर्वं तद्विलयं यातिभोजयित्वा द्विजान्सदा । दीपंदत्त्वाचदेवाग्रे नरोगैःपरिभूयते
धूपपात्रं विमानं चघण्टांकलशमेवच । दत्त्वा देवायराजेन्द्रशाक्रं लोकमवाप्नुयात्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे रेवासागरसङ्गमेऽलिकेश्वरतीर्थमाहात्म्यवर्णनंनाम
पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

---

# षड्विंशत्यधिकद्विशततमोऽध्यायः

## विमलेश्वरतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततः क्रोशान्तरे पुण्यंतीर्थं तद्विमलेश्वरम । यत्र स्नानेन दानेन जपहोमार्चनादिभिः
विमलेश्वरमाराध्य यो यदिच्छेत्स तल्लभेत् ।
स्वर्गलाभादिकं वापि पार्थिवं वा यथेप्सितम् ॥ २ ॥
पुरात्रिशिरसं हत्वा त्वष्टुःपुत्रं शतक्रतुः । यस्यतीर्थस्यमाहात्म्याद्वैमल्यंपरमंगतः
यत्रवेदनिधिर्विप्रो महत्तप्त्वा तपःपुरा । नानाकर्ममलैः क्षीणैर्विमलोऽभवदर्कवत्

महादेवप्रसादेन सोमवत्प्रियदर्शनः । पुरा भानुमतीं भानुः सुतां स्मरशरार्दितः
चकमे तेनदोषेण कुष्ठरोगार्द्दितोऽभजत् । सचाप्यत्र तपस्तप्त्वा विमलत्वमुपागतः
महादेवेन तुष्टेनस्वस्थानं मुदितोऽभजत् । तथैवचपुरापार्थ विभाण्डकसुतोमुनिः
योगिसङ्गं वनेप्राप्य पुरे च नृपतेस्तथा । राजसंसर्गदोषाद्धै मालिन्यं परमात्मनः

विचारयन्नभ्युपेत्य रेवासागरसङ्गमम् ।
शान्तया भार्यया सार्द्धं तप्त्वा द्वादशवत्सरान् ॥ ९ ॥
कृच्छ्चान्द्रायणैर्देवं तोषयंस्त्र्यम्बकं मुनिः ।
महादेवेन तुष्टेन सोऽपि वैमल्यमाप्तवान् ॥ १० ॥

शर्वाण्याप्रेरितःशर्वः पुरादारुवनेनृप । मोहनान्मुनिपत्नीनां स्वंवीक्ष्यविमलंकिल

विचार्य परमस्थानं नर्मदोदधिसङ्गमम् ।
तत्र स्थित्वा महाराज! तपस्तप्त्वा सहोमया ॥ १२ ॥
विमलोऽसौ यतो जातस्तेनाऽसौ विमलेश्वरः ।
तेन नाम्ना स्वयं तस्थौ लोकानां हितकाम्यया ॥ १३ ॥
ततस्तिलोत्तमां सृष्ट्वा ब्रह्मा लोकपितामहः ।
प्रजानाथोऽपि तां सृष्टां दृष्ट्वाऽग्रे सुमनोहराम् ॥ १४ ॥
भावियोगवलाक्रान्तः स तस्यामभिकोऽभवत् ।
तेन वीक्ष्य सदोषत्वं रेवातीरद्वयं श्रितः ॥ १५ ॥
तीर्थान्यनुसरन्मौनी त्रिस्नायी संस्मरञ्छिवम् ।
रेवार्णवसमायोगे स्नात्वा सम्पूज्य शङ्करम् ॥
कालेनाऽल्पेन राजर्षे! ब्रह्माऽप्यामलतां गतः ॥ १६ ॥

एवमन्येऽपि बहुशो देवर्षिनृपसत्तमाः । त्यक्त्वादोषमलं तत्र विमला बहवोऽभवन्

तथा त्वमपि राजेन्द्र! तत्र स्नात्वा शिवार्चनात् ।
अमलोऽपिविशेषेण वैमल्यं प्राप्स्यसे परम् ॥ १८ ॥

तत्र स्नात्वानरो नारी पूजयित्वामहेश्वरम् । पापदोषविनिर्मुक्तो ब्रह्मलोकेमहीयते

तत्रोपवासं यःकृत्वा पश्येतविमलेश्वरम् । अष्टम्यांच चतुर्द्दश्यां सर्वपर्वसु पार्थिव
सप्तजन्मकृतं पापं हित्वा याति शिवालयम् ।
श्राद्धं कृत्वा विधानेन पितृणामनृणी भवेत् ॥
ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥ २१ ॥
यद्यदिष्टतमं लोके यच्चैवाऽऽत्महितं गृहे । तत्तद्गुणवते देयं तत्रैवाऽक्षयमिच्छता
स्वर्णधान्यानि वासांसि छत्रोपानत्कमण्डलुम् ॥ २२ ॥
गृहं देवस्यवैशक्त्या कृत्वास्याद्भुविभूपतिः । गीतनृत्यकथाभिश्च तोषयेत्परमेश्वर
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे विमलेश्वरतीर्थमाहात्म्यवर्णनंनाम षड्विंशत्यधिकद्विशततमोऽध्यायः

---

# सप्तविंशत्यधिकद्विशततमोऽध्यायः

## तीर्थयात्रादिविशेषविधानकथनम्

मार्कण्डेय उवाच

एतानि तव सङ्क्षेपात्प्राधान्यात्कथितानि च ।
न शक्तो विस्तराद्वक्तुं सङ्ख्यां तीर्थेषु पाण्डव !॥ १ ॥
एषा पवित्रा विमला नदीत्रैलोक्यविश्रुता । नर्मदासरितां श्रेष्ठामहादेवस्यवल्लभा
मनसा संस्मरेद्यस्तु नर्मदां सततं नृप । चान्द्रायणशतस्याशु लभते फलमुत्तमम्
अश्रद्दधानाः पुरुषा नास्तिकाश्चात्रयेस्थिताः । पतन्तिनरके घोरेप्राहैवं परमेश्वरः
नर्मदां सेवते नित्यं स्वयं देवोमहेश्वरः । तेनपुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी
इयं माहेश्वरी गङ्गा महेश्वरतनूद्भवा । प्रोक्ता दक्षिणगङ्गेति भारतस्य युधिष्ठिर
जाह्नवी वैष्णवी गङ्गा ब्राह्मी गङ्गा सरस्वती ।
इयं माहेश्वरी गङ्गा रेवा नास्त्यत्र संशयः ॥ ७ ॥

यथा हि पुरुषे देवस्त्रैमूर्तत्वमुपाश्रितः । ब्रह्मविष्णुमहेशाख्यं न भेदस्तत्र वै यथा
तथा सरित्त्रये पार्थ! भेदं मनसि मा कृथाः ॥ ८ ॥
कोटिशो ह्यत्रतीर्थानिलक्षशश्चाऽपिभारत !। तथासहस्रशो रेवातीरद्वयगतानि तु
वृक्षान्तरिक्षसंस्थानि जलस्थलगतानि च ।
कः शक्तस्तानि निर्णेतुं वागीशो वा महेश्वरः ॥ १० ॥
स्मरणाज्जन्मजनितं दर्शनाच्चत्रिजन्मजम् । सप्तजन्मकृतं नश्येत्पापंरेवावगाहनात्
देवकार्यं कृतं तेन अग्नयो विधिवद्धुताः । वेदा अधीताश्चत्वारोयेनरेवावगाहिता
प्राधान्याच्चाऽपि सङ्क्षेपात्तीर्थान्युक्तानि ते मया ।
न शक्यो विस्तरः पार्थ! श्रोतुं वक्तुं च वै मया ॥ १२ ॥

युधिष्ठिर उवाच

विधानंच यमांश्चैव नियमांश्चवदस्वमे । प्रायश्चित्तार्थगमनेको विधिस्तंवदस्व मे

श्रीमार्कण्डेय उवाच

साधुपृष्टं महाराजयच्छ्रेयःपारलौकिकम् ।शृणुष्वावहितो भूत्वायथाज्ञानंवदमिते
अध्रुवेण शरीरेण ध्रुवं कर्मसमाचरेत् । अवश्यमेवयास्यन्ति प्राणाः प्राघूर्णिकाइव
दानंवित्ताद्दृतं वाचः कीर्तिधर्मौतथायुषः । परोपकरणं कायादसारात्सारमुद्धरेत्
अस्मिन्महामोहमये कटाहे सूर्याग्निना रात्रिदिवेन्धनेन ।
मासर्त्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्ता ॥ १८ ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ।
नाऽयं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ १९ ॥
मन्त्रेतीर्थे द्विजे देवे दैवज्ञेभेषजेगरौ । यादृशी भावना यस्य सिद्धिर्भवतितादृशी
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतंचयत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इ
यः शास्त्रविधिमुत्सृज्यवर्ततेकामकारतः । नससिद्धिमवप्नोति नसुखंनपरांगतिम्
सन्तीह विविधोपाया नृणां देहविशोधनाः ।
तीर्थसेवासमं नास्ति स्वशरीरस्य शोधनम् ॥ २३ ॥

कृच्छ्रचान्द्रायणाद्यैर्वा द्वितीयं तीर्थसेवया ।
यदा तीर्थं समुद्दिश्य प्रयाति पुरुषो नृप !॥
तदा देवाश्च पितरस्तं व्रजन्त्यनु खेचराः ॥ २४ ॥
परमामोदपूर्णास्ते प्रयान्त्यस्यानुयायिनः ।
कृत्वाऽऽभ्युदयिकं श्राद्धं समापृच्छ्य तु देवताम् ॥ २५ ॥

इष्टबन्धूंश्च विष्णुंचशङ्करंसगणेश्वरम् । व्रजेद्द्विजाभ्यनुज्ञातो गृहीत्वानियमानपि
एकाशनं ब्रह्मचर्यंभूशय्यां सत्यवादिताम् । वर्जनं च परान्नस्य प्रतिग्रहविवर्जनम्
वर्जयित्वा तथा द्रोहवञ्चनादिनृपोत्तम । साधुवेषं समास्थाय विनयेनविभूषितः
दम्भाहंकारमुक्तो यः सतीर्थफलमश्नुते । यस्य हस्तौ चपादौ चमनश्चैवसुसंयतम्
विद्या तपश्च कीर्तिश्चस तीर्थफलमश्नुते । अक्रोधनश्च राजेन्द्रसत्यशीलो दृढव्रतः
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते । मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः

वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ।
स्नानं सुरार्चनं चैव श्राद्धे वै पिण्डपातनम् ॥ ३२ ॥
विप्राणां भोजनं शक्त्या सर्वतीर्थेष्वयं विधिः ।
प्रायश्चित्तनिमित्तं च यो व्रजेद्यतमानसः ॥ ३३ ॥

तस्यापि च विधिं वक्ष्ये शृणुपार्थसमाहितः । एकाशनंब्रह्मचर्यमक्षारलवणाशनम्
स्नात्वा तीर्थाभिगमनं हविष्यैकान्नभोजनम् । वर्जयेत्पतितालापंबहुभाषणमेवच
परीवादं परान्नंचनीचसङ्गं विवर्जयेत् । व्रजेच्च निरुपानत्को वासानोवससीशुचिः

सङ्कल्पं मनसा कृत्वा ब्राह्मणानुज्ञया व्रजेत् ।
तीर्थे गत्वा तथा स्नात्वा कृत्वा चैव सुरार्चनम् ॥ ३७ ॥

दुष्कर्मतो विमुक्तः स्यादनुतापीभवेद्यदि । वेदेतीर्थे च देवेच दैवज्ञे चौषधे गुरौ ॥

यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।
उक्ततीर्थफलानां च पुराणेषु स्मृतिष्वपि ॥ ३९ ॥

अर्थवादभवांशङ्कांविहाय भरतर्षभ !। कृत्वाचिवारंशास्त्रोक्तंपरिकल्प्ययथोचितम्

कायेन कृच्छ्रमरणे ह्यशक्तानांविशुद्धये । ज्ञात्वातीर्थविशेषंहि प्रायश्चित्तंसमाचरेत्

तच्छृणुष्व महाराज! नर्मदायां यथोचितम् ।

चतुर्विंशतिसङ्ख्येभ्यो योजनेभ्यो व्रजेन्नरः ॥ ४२ ॥

चतुर्विंशति कृच्छ्राणां फलमाप्नोतिशोभनम् । अतऊर्ध्वंयोजनेषु पादकृच्छ्रउदाहृतः

तन्मध्ये च महाराज यो व्रजेच्छुद्धिकाङ्क्षया ।

योजने योजने तस्य प्रायश्चित्तं विदुर्बुधाः ॥ ४४ ॥

प्रणवाख्ये महाराज!तथारेवोरिसङ्गमे । भृगुक्षेत्रेतथागत्वा फलं तद्द्विगुणंस्मृतम्

सङ्गमे देवनद्याश्च शूलभेदे नृपोत्तम! । द्विगुणं पादहीनं स्यात्करजासङ्गमे तथा

एरण्डीसङ्गमे तद्वत्कपिलायाश्चसङ्गमे । केचित्त्रिगुणितंप्राहुः कुब्जारेवोत्थसङ्गमे

ओङ्कारेचमहाराजतदपिस्यात्समञ्जसम् । सङ्गमेषुतथाऽन्यासांनदीनांरेवयासह

प्राहुस्ते सार्द्धकृच्छ्रं वै फलंपूर्वं युधिष्ठिर !। त्रिगुणंकृच्छ्रमाप्नोतिरेवासागरसङ्गमे

कृच्छ्रं चतुर्गुणंप्रोक्तं शुक्लतीर्थेयुधिष्ठिर । योजनेयोजने गत्वाचतुर्विंशतियोजनम्

तत्र तत्र वसेद्यस्तु सुचिरं नृवरोत्तम !॥ ५० ॥

रेवासेवासमाचारः संयुक्तःशुद्धबुद्धिमान् । दम्भाहंकाररहितः शुद्ध्यर्थंसविमुच्यते

इतिते कथितं पार्थ प्रायश्चित्तार्थलक्षणम् । रेवायात्राविधानंच गुह्यमेतद्युधिष्ठिर

युधिष्ठिर उवाच

योजनस्य प्रमाणं मे वद त्वं मुनिसत्तम !।

यज्ज्ञात्वा निश्चितं मे स्यान्मनः शुद्धेस्तु कारणम् ॥ ५३ ॥

मार्कण्डेय उवाच

शृणु पाण्डव! वक्ष्यामि प्रमाणं योजनस्य यत् ।

तथा यात्राविशेषेण विशेषं कृच्छ्रसम्भवम् ॥ ५४ ॥

तिर्यग्यवोदराण्यष्टावूर्ध्वा वाव्रीहयस्त्रयः । प्रमाणमङ्गुलस्याहुर्वितस्तिर्द्वादशाङ्गुला

वितस्तिद्वितयं हस्तश्चतुर्हस्तं धनुः स्मृतम् ।

स एव दण्डो गदितो विशेषज्ञैर्युधिष्ठिर !॥ ५६ ॥

धनुःसहस्रे द्वेक्रोशश्चतुःक्रोशं च योजनम् । एतद्योजनमानं ते कथितं भरतर्षभ ॥
येन यात्रां व्रजन्वेत्ति फलमानंनिजार्जितम् । उक्तंकृच्छ्फलं तीर्थे जलरूपेनृपोत्तम
यथाविशेषं ते वच्मि पूर्वोक्ते तत्र तत्र च । तन्मे शृणु महीपाल श्रद्दधानायकथ्यते

यस्मिंस्तीर्थे हि यत्प्रोक्तं फलं कृच्छ्रादिकं नृप !।
तत्राप्युपोषणात्कृच्छ्फलं प्राप्नोत्यथाधिकम् ॥ ६० ॥
दीनजाप्याच्च लभते फलं कृच्छ्स्य शक्तितः ।
तत्र विख्यातदेवेशं स्नात्वा दृष्ट्वाभिपूज्य च ॥ ६१ ॥
प्रणम्य लभते पार्थ फलं कृच्छ्भवं सुधीः ।
तीर्थे मुख्यफलं स्नानाद्द्वितीयं चाप्युपोषणात् ॥ ६२ ॥

तृतीयंख्यातदेवस्य दर्शनाभ्यर्चनादिभिः । चतुर्थंजाप्ययोगेनदेहशक्त्यात्वहर्निशम्
पञ्चमं सर्वतीर्थेषु कल्पनीयं हि दूरतः । तीरस्थोयोजनादर्वाग्दशांशं लभते फलम्

उक्तत्तीर्थफलात्पार्थ! नात्र कार्या विचारणा ॥ ६५ ॥
उपवासेन सहितं महानद्यां हि मज्जनम् ।
अप्यर्वाग्योजनात्पार्थ! दद्यात्कृच्छ्फलं नृणाम् ॥ ६६ ॥
षड्योजनवहा कुल्या नद्योऽल्पा द्वादशैवच ।
चतुर्विंशतिगा नद्यो महानद्यस्ततोऽधिकाः ॥ ६७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेतीर्थयात्रादिविशेषविधानकथनंनामसप्तविंशत्यधिकद्विशततमोऽध्यायः

---

# अष्टाविंशत्यधिकद्विशततमोऽध्यायः

## परार्थयात्राफलकथनम्

युधिष्ठिर उवाच

परार्थं तीर्थयात्रायां गच्छतः कस्य किं फलम् ।
कियन्मात्रं मुनिश्रेष्ठ! तन्मे ब्रूहि कृपानिधे !॥ १ ॥

मार्कण्डेय उवाच

परार्थंगच्छतस्तन्मेवदतः शृणुपार्थिव । यथायावत्फलंतस्य यात्रादिविहितंभवेत्
उत्तमेनेह वर्णेनद्रव्यलोभादिना नृप । नाधमस्यक्वचित्कार्यं तीर्थयात्रादिसेवनम्
धर्मकर्म महाराज! स्वयं विद्वान्समाचरेत् ।
शरीरस्याऽथवा शक्त्या अन्यद्वा कार्ययोगतः ॥ ४ ॥
धर्मकर्म सदा प्रायः सवर्णेनैव कारयेत् । पुत्रपौत्रादिकैर्वापिज्ञातिभिर्गोत्रसंम्भवैः
श्रेष्ठं हि विहितं प्राहुर्धर्मकर्म युधिष्ठिर । तैरेव कारयेत्तस्मान्नोत्तमैर्नाधमैरपि ॥ ६
अधमेन कृतं सम्यङ् नभवेदितिमे मतिः । उत्तमश्चाधमार्थे वैकुर्वन्दुर्गतिमाप्नुयात्
न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ ८ ॥
जपस्तपस्तीर्थयात्राप्रव्रज्यामन्त्रसाधनम् । देवताराधनं दीक्षास्त्रीशूद्रपतनानिषट्
पतिवत्नी पतत्येव विधवा सर्वमाचरेत् । सभर्तृकाऽशके पत्यौ सर्वंकुर्यादनुज्ञया
गत्वा परार्थं तीर्थादौषोडशांशफलं लभेत् । गच्छतश्चप्रसङ्गेनतीर्थमर्द्धफलंस्मृतम्
अनुसङ्गेन तीर्थस्य स्नाने स्नानफलं विदुः ।
नैव यात्राफलं तज्ज्ञाः शास्त्रोक्तं कल्मषापहम् ॥ १२ ॥
पित्रर्थं चपितृव्यस्यमातुर्मातामहस्य च । मातुलस्यतथा भ्रातुःश्वशुरस्यसुतस्यच
पोषकार्थादयोश्चापि मातामह्या गुरोस्तथा ।

स्वसुर्मातृष्वसुः पैत्र्या आचार्याध्यापकस्य च ॥ १४ ॥
इत्याद्यर्थे नरः स्नात्वा स्वयमष्टांशमाप्नुयात् ।
साक्षात्पित्रोः प्रकुर्वाणश्चतुर्थांशमवाप्नुयात् ॥ १५ ॥
पतिपत्न्योर्मिथश्चार्द्धं फलं प्राहुर्मनीषिणः ।
भागिनेयस्य शिष्यस्य भ्रातृव्यस्य सुतस्य च ॥
षट्त्रिपञ्चचतुर्भागान्फलमाप्नोति वै नरः ॥ १६ ॥

इति ते कथितं पार्थ पारम्पर्यक्रमागतम् । कर्तव्यं ज्ञातिवर्गस्य परार्थे धर्मसाधनम्
वर्षास्वृतुसमायोगे सर्वा नद्यो रजस्वलाः । मुक्त्वा सरस्वतीं गङ्गां नर्मदां यमुनां नदीम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे परार्थयात्राफलकथनंनामाष्टाविंशत्यधिकद्विशततमोऽध्यायः

———

# एकोनत्रिंशदधिकद्विशततमोऽध्यायः

## रेवाखण्डपठनश्रवणदानादिफलश्रुतिवर्णनम्

श्रीमार्कण्डेय उवाच

एवं ते कथितं राजन्पुराणं धर्मसंहितम् । शिवप्रीत्या यथा प्रोक्तं वायुना देवसंसदि
षष्टितीर्थसहस्राणि षष्टिकोटिस्तथैव च । आदिमध्यावसानेषु नर्मदायां पदेपदे ॥
मया द्वादशसाहस्री संहिता या श्रुता पुरा । देवदेवस्य गदतः साम्प्रतं कथिता तव
पृष्टस्त्वयाऽहं भूपाल पर्वतेऽमरकण्टके । स्थितः संक्षेपतः सर्वं मया तत्कथितं तव
नर्मदाचरितं पुण्यं शृणु तस्यास्ति यत्फलम् । यत्फलं सर्ववेदैः स्यात्सषडङ्गपदक्रमैः

पठितैश्च श्रुतैर्वाऽपि तस्माद्बहुतरं भवेत् ।
सत्रयाजी फलं यत्र लभते द्वादशाब्दिकम् ॥ ६ ॥

चरिते तु श्रुते देव्या लभते तादृशं फलम् । सर्वतीर्थेषु तत्पुण्यं स्नात्वा सागरमादितः

सकृत्स्नात्वा तथा श्रुत्वा नर्मदायां फलं हि तत् ।
आदिमध्यावसानेन नर्मदाचरितं शुभम् ॥ ८ ॥
यः शृणोति नरो भक्त्या तस्य पुण्यफलं शृणु ।
स प्राप्य शिवसंस्थानं रुद्रकन्यासमावृतः ॥ ६ ॥
रुद्रस्यानुचरो भूत्वा तेनैवसहमोदते । एतद्धर्ममुपाख्यानं सर्वशास्त्रेषु सत्तमम् ॥
देशेवा मण्डलेवाऽपि वाग्रामेनगरेऽपिवा । गृहेवा तिष्ठतेयस्यचातुर्वर्ण्यस्यभारत
सब्रह्मास शिवःसाक्षात्सच देवोजनार्द्दनः । त्रिविधंकारणंलोकेधर्मपन्थानमुत्तमम्
देवतानां गुरुं शास्त्रं परमं सिद्धिकारणम् ।
श्रुत्वेश्वरमुखात्पार्थ मयाऽपि तव कीर्त्तितम् ॥ १३ ॥
दक्षिणे चोत्तरे कूले यानि तीर्थानि कानिचित् ।
प्रधानतः सुपुण्यानि कथितानि विशेषतः ॥ १४ ॥
स्पशनाद्दर्शनात्तेषां कीर्त्तनाच्छ्रवणात्तथा । मुच्यतेसर्वपापेभ्योरुद्रलोकंसगच्छति
इदं यः शृणुयान्नित्यं पुराणं शिवभाषितम् ।
ब्राह्मणो वेदविद्यावान्क्षत्रियो विजयी भवेत् ॥ १६ ॥
धनभागी भवेद्वैश्यः शूद्रो वै धर्मभाग्भवेत् ।
सौभाग्यं सन्ततिं स्वर्गं नारी श्रुत्वाऽप्नुयाद्धनम् ॥ १७ ॥
ब्रह्मघ्नश्चसुरापश्चस्तेयीचगुरुतल्पगः । माहात्म्यंनर्मदायास्तु श्रुत्वापापबहिष्कृताः
पापभेदी कृतघ्नश्च स्वामिविश्वासघातकः । गोघ्नश्चगरदश्चैव कन्याविक्रयकारकः
एतेश्रुत्वैवपापेभ्यो मुच्यन्ते नाऽत्रसंशयः । येपुनर्भावितात्मानः शृण्वन्तिसततंनृप
पूजयन्त इदं देवा पूजिता गुरवश्च तैः । नर्मदा पूजितातेन भगवांश्च महेश्वरः ॥
तस्मात्सर्वप्रयत्नेन गन्धपुष्पविभूषणैः । पूजितं परया भक्त्या शास्त्रमेतत्फलप्रदम्
लेखापयित्वा सकलंनर्मदाचरितं शुभम् । उत्तमं सर्वशास्त्रेभ्योयो ददातिद्विजन्मने
नर्मदा सर्वतीर्थेषु स्नाने दाने चयत्फलम् । तत्फलंसमवाप्नोतिसनरोनाऽत्र संशयः
एतत्पुराणं रुद्रोक्तं महापुण्यफलप्रदम् । स्वर्गदंपुत्रदं धन्यं यशस्यं कीर्त्तिवर्द्धनम्

सर्वपापहरं पार्थ दुःखदुःस्वप्ननाशनम् । पठतां शृण्वतांराजन्सर्वकमार्थसिद्धिदम्
शान्तिरस्तु शिवं चास्तु लोकाः सन्तु निरामयाः ।
गोब्राह्मणेभ्यः स्वस्त्यस्तु धर्म्मं धर्म्मात्मजाऽऽश्रयः ॥ २७ ॥
नरकान्तकरी रेवा सतीर्था विश्वपावनी । नर्मदा धर्मदाचास्तु शर्मदापार्थतेसदा

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे मार्कण्डेययुधिष्ठिरसम्वादे रेवाखण्डपठनश्रवणदानादिफलश्रुति वर्णनंनामैकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

———

# त्रिंशदधिकद्विशततमोऽध्यायः

## तीर्थावलिवर्णनम्

सूत उवाच

इत्युक्त्वोपररामाथपाण्डोःपुत्रायवैमुनिः । मृकण्डतनयोधीमान्सप्तकल्पस्मरःपुरः
मार्कण्डेमुनिना प्रोक्त यथा पार्थाय सत्तमाः ।
तथा वः कथितं सर्वं रेवामाहात्म्यमुत्तमम् ॥ २ ॥
इयं पुण्या सरिच्छ्रेष्ठारेवा विश्वैकपावनी । रुद्रदेहसमुद्भूता सर्वभूताभयप्रदा ॥
ॐकारजलधिं यावदुवाच भृगुनन्दनः । तीर्थसङ्गमभेदान्वै धर्मपुत्राय पृच्छते ॥
समासेनैव मुनयस्तथाहं कथयामिवः । सप्तषष्टिसहस्राणि षष्टिकोट्यस्तथैव च
कथं केनात्रशक्यन्ते वक्तुं वर्षशतैरपि । तथाप्यत्र मुनिश्रेष्ठाः प्रोक्तंपार्थाय वै यथा
तीर्थमोङ्कारमारभ्य वक्ष्ये तीर्थावलिं शुभाम् ।
प्रोच्यमानां समासेन तां शृणुध्वं महर्षयः ॥ ७ ॥
नत्वा सोमं महेशानं नत्वाब्रह्माच्युतावुभौ ।
सरस्वतीं गणेशानं वेदव्यासाङ्घ्रिपङ्कजम् ॥ ८ ॥
पूर्वाचार्यांस्तथा सर्वान्दृष्टादृष्टार्थवेदिनः ।

प्रणम्य नर्मदां देवीं वक्ष्ये तीर्थावलिं त्विमाम् ॥ ९ ॥

ॐनमो विश्वरूपाय ॐकारायाऽखिलात्मने ।

यमारभ्य प्रवक्ष्यामि रेवातीर्थावलिं द्विजाः !॥ १० ॥

अस्मिन्मार्कण्डगदिते रेवातीर्थक्रमे शुभे ।

पुराणसंहिताध्याया मार्कण्डाश्रमवर्णनम् ॥ ११ ॥

ततः प्रश्नाधिकारश्च प्रशंसा नर्मदोद्भवा । तथापञ्चदशानां चप्रवाहानांप्रकीर्तनम्

नामनिर्वचनं तद्वत्तथा कल्पसमुद्भवाः । एकविंशतिकल्पानां तद्वन्नामानुकीर्त्तनम्

मार्कण्डेयानुभूतानां सप्तानां लक्षणानि च ।

माहात्म्यं चैव रेवायाः शिवविष्णवोस्तथैव च ॥ १४ ॥

संहारलक्षणं तद्वदोङ्कारस्य चसम्भवः । तथैवोङ्कारमाहात्म्यममरङ्कटकीर्तनम् ॥

अमरेश्वरतीर्थं चतथा दारुवनं महत् । दारुकेश्वरतीर्थं च तीर्थं वै चरुकेश्वरम् ॥

चरुकासङ्गमस्तद्वद्व्यतीपातेश्वरं तथा । पातालेश्वरतीर्थं चकोटियज्ञाह्वयं तथा ॥

चरुणेश्वरतीर्थं चलिङ्गान्यष्टोत्तरं शतम् । सिद्धेश्वरंयमेशं च ब्रह्मेश्वरमतः परम् ॥

सारस्वतं चाष्टरुद्रं सावित्रं सोमसञ्ज्ञितम् ।

शिवखातं महातीर्थं रुद्रावर्तं द्विजोत्तमाः ॥ १९ ॥

ब्रह्मावर्तं परं तीर्थं सूर्यावर्तमतः परम् । पिप्पलावर्ततीर्थं चपिप्पलयाश्चैव सङ्गमः

अमरकण्टमाहात्म्यं कपिलासङ्गमस्तथा ।

विशल्यासम्भवश्चापि भृगुतुङ्गाद्रिकीर्तनम् ॥ २१ ॥

विशल्यासङ्गमः पुण्यः करमर्दासमागमः । करमर्देश्वरं तीर्थं चक्रतीर्थमनुत्तमम् ॥

सङ्गमो नीलगङ्गायाःविध्वंसस्त्रिपुरस्यच । कीर्तनंतीर्थदानानां मधुकतृतीयाव्रतम्

अप्सरेश्वरतीर्थं च देहक्षेपे विधिस्ततः ।

तीर्थं ज्वालेश्वरं नाम ज्वालायाः सङ्गमस्तथा ॥ २४ ॥

शक्रतीर्थं कुशावर्तं हंसतीर्थं तथैव च । अम्बरीषस्य तीर्थं चमहाकालेश्वरं तथा ॥

मातृकेश्वरतीर्थं च भृगुतुङ्गानुवर्णनम् । तत्र भैरवमाहात्म्यं चपलेश्वरकीर्तनम् ॥

चण्डपाणेश्चमाहात्म्यं कावेरीसङ्गमस्तथा। कुबेरेश्वरतीर्थं चवाराहीसङ्गमस्तथा
सङ्गमश्चण्डवेगायास्तीर्थं चण्डेश्वरंतथा। एरण्डीसङ्गमः पुण्य एरण्डेश्वरमुत्तमम्
पितृतीर्थं च तत्रैव ॐकारस्य च सम्भवम्।
माहात्म्यं पञ्चलिङ्गानामोङ्कारस्य मुनीश्वराः ॥ २६ ॥
कोटितीर्थस्य माहात्म्यंतीर्थंकाकह्रदंतथा। जम्बुकेश्वरतीर्थं चसारस्वतमतःपरम्
कपिलासङ्गमस्तद्वत्तीर्थंच कपिलेश्वरम्। दैत्यसूदनतीर्थं चचक्रतीर्थं च वामनम् ॥
तीर्थलक्षं विदुः पूर्वे कपिलायास्तु सङ्गमे।
स्वर्गस्य नरकस्यापि लक्षणं मुनिभाषितम् ॥ ३२ ॥
व्यवस्थानं शरीरस्य गोप्रदानानुवर्णनम्। अशोकवनिकातीर्थं मतङ्गाश्रमवर्णनम्
अशोकेश्वरतीर्थं च मतङ्गेश्वरमुत्तमम्। तथा मृगवनं पुण्यं तत्र तीर्थं मनोरथम् ॥
सङ्गमोऽङ्गारगर्तायां अङ्गारेश्वरमुत्तमम्। तथा मेघवनंतीर्थं देव्यानामानुकीर्तनम्
सङ्गमश्चापि कुब्जायास्तीर्थं कुब्जेश्वरं तथा।
बिल्वाम्रकं तथा तीर्थं पूर्णद्वीपमतः परम् ॥ ३६ ॥
तथा हिरण्यगर्भायाः सङ्गमःपुण्यकीर्तनः। द्वीपेश्वरं नाकतीर्थं पुण्यं यज्ञेश्वरंतथा
माण्डव्याश्रमतीर्थं च विशोकासङ्गमस्तथा।
वागीश्वरं नाम तीर्थं पुण्यो वै वागुसङ्गमः ॥ ३८ ॥
सहस्रावर्तकं तत्र तीर्थंसौगन्धिकंतथा। सङ्गमश्चसरस्वत्या ईशानं तीर्थमुत्तमम्
देवतात्रयतीर्थं चशूलखातं ततः परम्। ब्रह्मोदं शाङ्करं सौम्यं सारस्वतमतः परम्
सहस्रयज्ञतीर्थं च कपालमोचनं तथा। आग्नेयमदितीसं वाराहं तीर्थमुत्तमम् ॥
तथा देवपथंतीर्थंतीर्थं यज्ञसहस्रकम्। शुक्रतीर्थंदीप्तिकेशं विष्णुतीर्थंचयोधनम्
नर्मदेश्वरतीर्थं चवरुणेशं चमारुतम्। योगेशं रोहिणीतीर्थं दारुतीर्थं च सत्तमाः
ब्रह्मावर्तं चपत्रेशं वाहंसौरं चकीर्त्यते। मेघनादं दारुतीर्थं देवतीर्थं गुहाश्रयम् ॥
नर्मदेश्वरसञ्ज्ञं तत्कपिलातीर्थमुत्तमम्। करंजेशं कुण्डलेशं पिपलादमतः परम् ॥
विमलेश्वरतीर्थं चपुष्करिण्याश्चसङ्गमः। प्रशंसाशूलभेदस्य तत्रैवाऽन्धकविक्रमः

देवाश्वासनदानं चतथैवान्धकनिग्रहः । शूलभेदस्य चोत्पत्तिस्तथापात्रपरीक्षणम्
प्रशंसा दानधर्मस्य ऋषिश्रृङ्गानुभावनम् ।
स्वर्गतिं दीर्घतपसो भानुमत्यास्तथेङ्गितम् ॥ ४८ ॥
शवरस्वर्गगमनं माहात्म्यं शूलभेदजम् । कपिलेश्वरतीर्थं च मोक्षतीर्थमतः परम्
सङ्गमो मोक्षनद्याश्च तीर्थं च विमलेश्वरम् ।
तथैवोलूकतीर्थं च पुष्करिण्याश्च सङ्गमः ॥ ५० ॥
आदित्येश्वरतीर्थं च तीर्थं वै सङ्गमेश्वरम् ।
सङ्गमो भीमकुल्यायास्तीर्थं भीमेश्वरं शुभम् ॥ ५१ ॥
मार्कण्डेश्वरतीर्थं चतथावै पिप्पश्वरम् । करोटीश्वरतीर्थं च तीर्थमिन्द्रेश्वरं शुभम्
अगस्त्येशं कुमारेशं व्यासेश्वरमनुत्तमम् । वैद्यनाथं च केदारमानन्देश्वरसंज्ञितम्
मातृतीर्थं च मुण्डेशं चौरं कामेश्वरं तथा । सङ्गमश्चानुदुह्यावैतीर्थेभीमार्जुनाह्वये
तीर्थं धर्मेश्वरं नाम लुङ्केश्वरमतः परम् ॥ ५४ ॥
ततो धनदतीर्थं च जटेशं मङ्गलेश्वरम् । कपिलेश्वर तीर्थं च गोपारेश्वरमुत्तमम् ॥
मणिनागेश्वरं नाम मणिनद्याश्च सङ्गमः । तिलकेश्वरतीर्थं च गौतमेशमतः परम्
भीमेश्वरं च चन्द्रेशमश्ववत्याश्च सङ्गमः । बह्वीश्वरं नारदेशं वैद्यनाथं कपीश्वरम्
कुम्भेश्वरं च मार्कण्डं रामेशं लक्ष्मणेश्वरम् । मेघेश्वरं मत्स्यकेशमप्सराह्वदसञ्ज्ञकम्
दधिस्कन्दं मधुस्कन्दं नन्दिकेशं च वारुणम् ।
पावकेश्वरतीर्थं च तथैव कपिलेश्वरम् ॥ ६० ॥
नारायणाह्वयं तीर्थं चक्रतीर्थमनुत्तमम् ।
चण्डादित्यं परं तीर्थं चण्डिकातीर्थमुत्तमम् ॥ ६१ ॥
यमहासाह्वयं तीर्थं तथा गङ्गेश्वरंशुभम् । नन्दिकेश्वरसञ्ज्ञंच नरनारायणाह्वयम् ॥
नलेश्वरं च मार्कण्डं शुक्लतीर्थमतःपरम् । व्यासेश्वरं परंतीर्थं तत्र सिद्धेश्वरं तथा
कोटितीर्थं प्रभातीर्थं वासुकीश्वरमुत्तमम् । सङ्गमश्चकरञ्जाया मार्कण्डेश्वरमुत्तमम्
तीर्थं कोटीश्वरंनाम तथा सङ्कर्षणाह्वयम् । कनकेशं मन्मथेशंतीर्थंचैवानसूयकम् ॥

एरण्डीसङ्गमःपुण्यो मातृतीर्थं च शोभनम् ।
तीर्थं स्वर्णशलाकाख्यं तथा चैवाम्बिकेश्वरम् ॥ ६६ ॥
करञ्जेशं भारतेशं नागेशं मुकुटेश्वरम् । सौभाग्यसुन्दरीतीर्थं धनदेश्वरमुत्तमम् ॥
रोहिण्यं चक्रतीर्थं च उत्तरेश्वरसञ्ज्ञितम् । भोगेश्वरं च केदारं निष्कलङ्कमतःपरम्
मार्कण्डं धौतपापं च तीर्थमाङ्गिरसेश्वरम् । कोटवीसङ्गमःपुण्यंकोटितीर्थंचतत्रवै
अयोनिजं परं तीर्थमङ्गारेश्वरमुत्तमम् ।
स्कान्दं च नार्मदं ब्राह्मं वाल्मीकेश्वरसञ्ज्ञितम् ॥ ७० ॥
कोटितीर्थं कपालेशं पाण्डुतीर्थं त्रिलोचनम् ।
कपिलेशं कम्बुकेशं प्रभासं कोहनेश्वरम् ॥ ७१ ॥
इन्द्रेशं वालुकेशं च देवेशं शाक्रमेव च । नागेश्वरं गौतमेशमहल्यातीर्थमुत्तमम् ॥
रामेश्वरं मोक्षतीर्थं तथाकुशलवेश्वरौ । नर्मदेशं कपर्द्दीशं सागरेशमतः परम् ॥ ७३
धौरादित्यं परंतीर्थं तीर्थं चापरयोनिजम् । पिङ्गलेश्वरतीर्थं च भृगवीश्वरमनुत्तमम्
दशाश्वमेधिकं तीर्थं कोटितीर्थं च सत्तमाः ।
मार्कण्डं ब्रह्मतीर्थं च आदिवाराहमुत्तमम् ॥ ७५ ॥
आशापूराभिधं तीर्थं कौबेरं मारुतं तथा । वरुणेशं यमेशं च रामेशं कर्कटेश्वरम्
शक्रेशं सोमतीर्थं च नन्दाह्रदमनुत्तमम् । वैष्णवं चक्रतीर्थं च रामकेशवसञ्ज्ञितम्
तथैवरुक्मिणीतीर्थं शिवतीर्थमनुत्तमम् । जयवाराहतीर्थंच तीर्थमस्माहकाह्वयम्
अङ्गारेशं च सिद्धेशं तापेश्वरमतः परम् । पुनः सिद्धेश्वरं नाम तीर्थं च वरुणेश्वरम्
पराशरेश्वरं पुण्यं कुसुमेशमनुत्तमम् । कुण्डलेश्वरतीर्थं च तथा कलकलेश्वरम् ॥
न्यङ्कुवाराहसञ्ज्ञं च अङ्कोलं तीर्थमुत्तमम् । श्वेतवाराहतीर्थं चभार्गलंसौरमुत्तमम्
हुङ्कारस्वामितीर्थं च शुक्लतीर्थं च शोभनम् ।
सङ्गमो मधुमत्याश्च तीर्थं वै सङ्गमेश्वरम् ॥ ८२ ॥
नर्मदेश्वरसञ्ज्ञं च नदीत्रितयसङ्गमः । अनेकेश्वरतीर्थं च शर्भेशं मोक्षसञ्ज्ञितम् ॥
कावेरीसङ्गमः पुण्यस्तीर्थं गोपेश्वराह्वयम् । मार्कण्डेशंचनागेशमुदम्बर्याश्च सङ्गमः

साम्बादित्याह्वयं तीर्थमुदम्बर्याश्च सङ्गमः ।
सिद्धेश्वरं च मार्क्कण्डं तथा सिद्धेश्वरीकृतम् ॥ ८५ ॥

गोपेशं कपिलेशं च वैद्यनाथमनुत्तमम् । पिङ्गलेश्वरतीर्थं च सैन्धवायतनं महत् ॥
भूतीश्वराह्वयं तीर्थं गङ्गावाहमतः परम् । गौतमेश्वरतीर्थं च दशाश्वमेधिकं तथा ।

भृगुतीर्थं तथा पुण्यं ख्याता सौभाग्यसुन्दरी ।
वृषखातं च तत्रैव केदारं धूतपातकम् ॥ ८८ ॥

तीर्थं धूतेश्वरीसङ्गमेरण्डीसञ्ज्ञकं तथा । तीर्थं च कनकेश्वर्या ज्वालेश्वरं ततः परम्
शालग्रामाह्वयं तीर्थं सोमनाथमनुत्तमम् । तथैवोदीर्णवाराहंतीर्थं चन्द्रप्रभासकम्
द्वादशादित्यतीर्थंचतथासिद्धेश्वराभिधम् । कपिलेश्वरतीर्थंच तथात्रैविक्रमं शुभम्
विश्वरूपाह्वयंतीर्थं नारायणकृतं तथा । मूलश्रीपतितीर्थंच चौलश्रीपतिसञ्ज्ञकम्
देवतीर्थं हंसतीर्थं प्रभासं तीर्थमुत्तमम् । मूलस्थानं च कण्ठेशमट्टहासमतः परम् ॥
भूर्भुवेश्वरतीर्थंच ख्याताशूलेश्वरी तथा । सारस्वतंदारुकेशमश्विनोस्तीर्थमुत्तमम्
सावित्रीतीर्थंमतुलंवालखिल्येश्वरं तथा । नर्मदेशं मातृतीर्थंदेवतीर्थंमनुत्तमम् ॥

मच्छकेश्वरतीर्थंच शिखितीर्थं च शोभनम् ।
कोटितीर्थं मुनिश्रेष्ठास्तत्रकोटीश्वरी मृडा ॥ ९६ ॥

तीर्थंपैतामहंनाम माण्डव्येश्वरसञ्ज्ञितम् । तत्रनारायणेशश्चअक्रूरेशमतः परम् ॥
देवखातं सिद्धरुद्रं वैद्यनाथमनुत्तमम् । तथैव मातृतीर्थंच उत्तरेशमतः परम् ॥ ९८ ॥
तथैवनर्मदेशं च मातृतीर्थं तथा पुनः । तथा च कुररीतीर्थं ढौण्ढेशं दशकन्यकम्
सुवर्णबिन्दुतीर्थं च ऋणपापप्रमोचनम् । भारभूतेश्वरं तीर्थं तथा मुण्डीश्वरंविदुः

एकशालं डिण्डिपाणिं तीर्थं चाप्सरसं परम् ।
मुन्यालयं च मार्कण्डं गणितादेवताह्वयम् ॥ १०१ ॥

आमलेश्वरतीर्थंश्च तीर्थं कन्थेश्वरं तथा । आषाढीतीर्थंमित्याहुःशृङ्गीतीर्थंतथैव च
श्रीबकेश्वरतीर्थं च कपालेशं तथैव च । मार्कण्डं कपिलेशं च एरण्डीसङ्गमस्तथा
एरण्डीदेवतातीर्थं रामतीर्थमतः परम् । जमदग्नेः परं तीर्थं रेवासागरसङ्गम

लोटणेश्वरतीर्थं तल्लुङ्केशनामकं तथा । वृषखातं तत्र कुण्डं तथैव ऋषिसत्तमाः
तथा हंसेयुरंनाम तिलादं वासवेश्वरम् । तथा कोटीश्वरं तीर्थमलिकातीर्थमुत्तमम्
विमलेश्वरतीर्थं च रेवासागरसङ्गमे ॥ १०६ ॥
एवं तीर्थावलिः पुण्या मया प्रोक्ता महर्षयः ।
तीर्थमुक्तावलिः पुण्या ग्रथिता तटरज्जुना ॥ १०७ ॥
नर्मदानीरनिर्णिक्ता मार्कण्डेयविनिर्मिता । मण्डनायेहसाधूनांसर्वलोकहितायच
दुरितध्वान्तशमनी धार्या धर्मार्थिभिः सदा ।
अहोरात्रकृतं पापं सकृज्जप्त्वाऽऽशु नाशयेत् ॥ १०६ ॥
त्रिकालं जप्त्वा मासोत्थं शिवाग्रे च त्रिमासिकम् ।
मासं जप्त्वाऽथ वर्षोत्थं वर्षं जप्त्वा शताब्दिकम् ॥ ११० ॥
श्राद्धकाले च विप्राणां भुञ्जतां पुरतः स्थितः ।
पठँस्तीर्थावलिं पुण्यां गयाश्राद्धप्रदो भवेत् ॥ १११ ॥
पूजाकाले च देवानां श्रद्धया पुरतः पठन् । प्रीणयेत्सर्वदेवांश्च पुनातिसकलंकुलम्
एवं तीर्थावलिः पुण्या रेवातीरद्वयाश्रिता ।
मया प्रोक्ता मुनिश्रेष्ठास्तथैव श्रृणुताऽनघाः ॥ ११३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
तीर्थावलिकथनंनाम त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

---

# एकत्रिंशदधिकद्विशततमोऽध्यायः

## तीर्थसङ्ख्यापरिगणनवर्णनम्

श्रीसूत उवाच

तथैव तीर्थस्तबकान्वक्ष्येहमृषिसत्तमाः । यैस्तुतीर्थावलीगुम्फःपूर्वोक्तैरेकतः कृतः
विभक्तो भक्तलोकानामानन्दप्रथनः शुभः । मृकण्डतनयः पूर्वं प्राह पार्थाय पृच्छते
यथा तथाऽहं वक्ष्यामि तीर्थानां स्तबकानिह ।
शिवाम्बुपानजा पुण्या रेवाकल्पलता किल ॥ ३ ॥
तीरद्वयोद्भूततीर्थप्रसूनैःपुष्पिताशुभा । यत्पुण्यगन्धलक्ष्म्यावैत्रैलोक्यंसुरभीकृतम्
तत्पुष्पमकरन्दस्य रसास्वादविदुत्तमः । भ्रमरः खलुमार्कण्डो मुनिर्मतिमतां वरः
तत्पुष्पमालां हृदये तीर्थस्तबकचित्रिताम् । दधातिसततंपुण्यांमुनिर्भृगुकुलोद्वहः
तस्याः स्तबकसंस्थानं वक्ष्येऽहमृषिसत्तमाः ॥ ६ ॥
ॐकारतीर्थमारभ्य यावत्पश्चिमसागरम् । सङ्गमाःपञ्चत्रिंशद्वैनदीनां पापनाशनाः
दशैकमुत्तरे तीरे सत्रिविंशति दक्षिणे । पञ्चत्रिंशत्तमः श्रेष्ठो रेवासागरसङ्गमः ॥
सङ्गमैःसहितान्येवंरेवातीरद्वयेऽपिच । चतुःशतानितीर्थानिप्रसिद्धानिद्विजोत्तमाः
त्रिशतं शिवतीर्थानि त्रयस्त्रिंशत्समन्वितम् ।
तत्राऽपि व्यक्तितो वक्ष्ये शृणुध्वं तानि सत्तमाः !॥ १० ॥
मार्कण्डेश्वरतीर्थानि दशतेषु मुनीश्वराः । दशादित्यभवान्यत्र नवैव कपिलेश्वराः
सोमसंस्थापितान्यष्टौ तावन्तो नर्मदेश्वराः ।
कोटितीर्थान्यथाष्टौ च सप्त सिद्धेश्वरास्तथा ॥ १२ ॥
नागेश्वराश्च सप्तैव रेवातीरद्वयेऽपि तु । सप्तैव वह्निविहितान्यथाप्यावर्तसप्तकम्
केदारेश्वरतीर्थानि पञ्च पञ्चेन्द्रजानि च । वरुणेशाश्च पञ्चैव पञ्चैव धनदेश्वराः
देवतीर्थानि पञ्चैव चत्वारोवैयमेश्वराः । वैद्यनाथाश्च चत्वारश्चत्वारोवानरेश्वराः

ङ्गारेश्वतीर्थानितावन्त्येवमुनीश्वराः । सारस्वतानिचत्वारिचत्वारोदारुकेश्वराः
ौतमेश्वरतीर्थानि त्रीणिरामेश्वरास्त्रयः । कपालेश्वरतीर्थानित्रीणिहंसकृतानि च
ीण्येव मोक्षतीर्थानि त्रयोवैचिमलेश्वराः । सहस्रयज्ञतीर्थानि त्रीण्येवमुनिरब्रवीत्
भीमेश्वरास्त्रयः ख्याताः स्वर्णतीर्थानि त्रीणि च ।
धौतपापद्वयं प्रोक्तं करञ्जेशद्वयं तथा ॥ १६ ॥
ृणमोचनतीर्थेद्वे तथास्कन्देश्वरद्वयम् । दशाश्वमेधतीर्थे द्वे नन्दीतीर्थद्वयं द्विजाः
न्मथेशद्वयं चैव भृगुतीर्थद्वयं तथा । पराशरेश्वरौ द्वौ च अयोनीसम्भवद्वयम् ॥
यासेश्वरद्वयं प्रोक्तंपितृतीर्थद्वयं तथा । नन्दिकेश्वरतीर्थेद्वे द्वौ चगोपेश्वरौस्मृतौ
ारुतेशद्वयं तद्वद् द्वौच ज्वालेश्वरौ स्मृतौ । शुक्लतीर्थद्वयंपुण्यमप्सरेशद्वयंचथा
िप्पलेश्वरतीर्थे द्वे माण्डव्येश्वरसञ्ज्ञिते । द्वीपेश्वरद्वयं चैव प्राह तद्वद् भृगूद्वह !
उत्तरेश्वरतीर्थे द्वे अशोकेशद्वयी तथा ॥ २४ ॥
योधनपुरे चैव रोहिणीतीर्थकद्वयम् । लुङ्केश्वरद्वयंख्यातमाख्यानं मुनिना तथा
कोनविंशतिशतं तीर्थान्येकैकशोद्विजाः । स्तवकेषुक्तंतीर्थंद्विशतं स चतुर्दशम् ॥
शैवान्येतानि तीर्थानि वैष्णवानि च सत्तमाः !।
शृणुध्वं प्रोच्यमानानि ब्राह्मशाक्तानि च क्रमात् ॥ २७ ॥
ष्टाविंशति तीर्थानिवैष्णवान्यब्रवीन्मुनिः । तेषुवाराहतीर्थानिषडेवमुनिसत्तमाः
चत्वारि चक्रतीर्थानि शेषाण्यष्टादशैव हि ।
विष्णुनाऽधितिष्ठितान्येव प्राह पूर्वं मृकण्डजः ॥ २६ ॥
थैव ब्रह्मणा सिद्ध्यै सप्ततीर्थान्यवीवदत् । त्रिषुचब्रह्मणः पूजाब्रह्मेशाश्चतुरोऽपरे
अष्टाविंशन्मया ख्याता यथासङ्ख्यं यथाक्रमम् ।
तत्पवित्रमतुलं ह्येतत्पापहरं परम् । नर्मदाचरितं पुण्यं माहात्म्यं मुनिभाषितम्

सूत उवाच

वमुद्देशतःप्रोक्तोरेवातीर्थक्रमो मया । यथापार्थायसङ्क्षेपान्मार्कण्डोमुनिरब्रवीत्
वान्तराणितीर्थानितेषुगुप्तान्यनेकशः । यत्रयावत्प्रमाणानितान्याकर्णयतानघाः

ॐकारतीर्थपरितः पर्वतादमरकूटात् । क्रोशद्वये सर्वदिक्षु सार्द्धकोटीत्रयीमता ॥
तीर्थानां सङ्ख्यया गुप्तप्रकटानां द्विजोत्तमाः ।
कोटिरेका तु तीर्थानां कपिलासङ्गमे पृथक् ॥ ३५ ॥
अशोकवनिकायाश्च तीर्थं लक्षं प्रतिष्ठितम् । शतमङ्गारगर्तायाःसङ्गमे मुनिसत्तमाः
तीर्थानामयुतं तद्वत्कुब्जायाः सङ्गमे स्थितम् ।
शतं हिरण्यगर्भायाः सङ्गमे समवस्थितम् ॥ ३७ ॥
तीर्थानामष्टषष्टिश्च विशोकासङ्गमे स्थिता ।
तथा सहस्रं तीर्थानां संस्थितं वायुसङ्गमे ॥ ३८ ॥
शतं सरस्वतीसङ्गे शुक्लतीर्थशतद्वयम् । सहस्रंविष्णुतीर्थेषुमाहिष्मत्यामथायुतम्
शूलभेदे च तीर्थानां साग्रं लक्षं स्थितं द्विजाः ।
देवग्रामे सहस्रं च तीर्थानां मुनिरब्रवीत् ॥ ४० ॥
लुङ्केश्वरे च तीर्थानां साग्रासप्तशतीस्थिता । तीर्थान्यष्टोत्तरशतंमणिनद्याश्चसङ्गमे
वैद्यनाथं च तीर्थानां शतमष्टाधिकं विदुः ॥ ४१ ॥
एवं तावत्प्रमाणानितीर्थेकुम्भेश्वरेद्विजाः ! साग्रंलक्षंचतीर्थानांस्थितंरेवोरसङ्गमे
ततश्चाऽप्यधिकानि स्युरिति मार्कण्डभाषितम् ।
अष्टाशीतिसहस्राणिव्यासद्वीपाश्रितानि च ॥ ४३ ॥
सङ्गमे चकरञ्जायाः स्थितमष्टोत्तरायुतम् । एरण्डीसङ्गमेतद्वत्तीर्थान्यष्टाधिकंशतम्
धूतपापे च तीर्थानां षष्टिरष्टाधिकास्थिता ।
स्कन्दतीर्थे शतं पुण्यं तीर्थानां मुनिरुक्तवान् ॥ ४५ ॥
कोहनेशे च तीर्थानां षष्टिरष्टाधिका स्थिता ।
सार्द्धकोटी च तीर्थानां स्थिता वै कोरिलापुरे ॥ ४६ ॥
रामकेशवतीर्थं च सहस्रं साग्रमुक्तवान् ।
अस्माहके सहस्रं च तीर्थानि निवसन्ति हि ॥ ४७ ॥
लक्षाष्टकं सहस्रे द्वे शुक्लतीर्थेद्विजोत्तमाः । तीर्थानिकथयामास पुरापार्थायभार्गवः

ातमष्टाधिकं प्राह प्रत्येकं सङ्गमेषु च । नदीनामवशिष्टानां कावेरीसङ्गमं विना

कावेर्याः सङ्गमे विप्राः स्थिता पञ्चशती तथा ।
तीर्थानां पर्वसु तथा विशेषो मुनिनोदितः ॥ ५० ॥
मोक्षतीर्थं हि सत्प्राहुः पुराणपुरुषाश्रितम् ।
भृगोः क्षेत्रे च तीर्थानां कोटिरेका समाश्रिता ॥ ५१ ॥

ाधिकानामृषिश्रेष्ठा वक्तुंशक्तोहिकोभवेत् । सर्वामराश्रयंप्रोक्तंसर्वतीर्थाश्रयंतथा

त्रिषु लोकेषु विख्यातं पूजितं सिद्धिसाधनम् ।
भारभूत्यां च तीर्थानां स्थितमष्टोत्तरं शतम् ॥ ५३ ॥

क्रूरेश्वरतीर्थे च सार्द्धं तीर्थशतं स्थितम् । विमलेश्वरतीर्थे तु रेवासागरसङ्गमे

दशायुतानि तीर्थानां साधिकान्याब्रवीन्मुनिः ॥ ५४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे तीर्थसंख्यापरिगणनवर्णनं नामैकत्रिंशदधिकद्विशततमोऽध्यायः

---

# द्वात्रिंशदधिकद्विशततमोऽध्यायः

## रेवाखण्डपुस्तकदानादिमाहात्म्यवर्णनम्

### सूत उवाच

तिवः कथितं विप्रारेवामाहात्म्यमुत्तमम् । यथोपदिष्टंपार्थाय मार्कण्डेयेनवैपुरा

तथा तीर्थकदम्बाश्च तेषु तीर्थविशेषतः ।
प्राधान्येन मया ख्याता यथासङ्ख्यं यथाक्रमम् ॥ २ ॥

तत्पवित्रमतुलं ह्येतत्पापहरं परम् । नर्मदाचरितं पुण्यं माहात्म्यं मुनिभाषितम्

स्तकल्पानुगो विप्रो नर्मदायांमुनीश्वराः । मृकण्डतनयो धीमान्परमार्थविदुत्तमः

सेव्य सर्वतीर्थानि नदीःसर्वाश्चवैपुरा । बहुकल्पस्मरां रेवामालक्ष्यशिवदेहजाम्

मेकलेति च शर्वोक्तां शरणं शर्वजां ययौ । अजराममरां देवीं दैत्यध्वंसकरीं पराम्
महाविभवसंयुक्तां भवघ्नीं भवजाह्नवीम् ।
तस्यामाबध्य सत्प्रेम जातः सोऽप्यजरामरः ॥ ७ ॥
षष्टितीर्थसहस्राणि षष्टिकोट्यश्च सत्तमाः । व्यवस्थितानि रेवायास्तीरयुग्मे पदे पदे
सरितः परितः सन्ति सतीर्थास्तु सहस्रशः ।
न तुलां यान्ति रेवायास्ताश्च मन्ये मुनीश्वराः ॥ ६ ॥
एतद्वः कथितं सर्वं यत्पृष्टमखिलं द्विजाः । यन्महेशमुखाच्छ्रुत्वा वायुराह ऋषीन्प्रति
तद्वन्मृकण्डतनयोऽप्यनूभूयाखिलां नदीम् ।
सतीर्थां पदशः प्राह पाण्डुपुत्राय पावनीम् ॥ ११ ॥
एतच्च कथितं सर्वं सङ्क्षेपेण द्विजोत्तमाः । नर्मदाचरितं पुण्यं त्रिषु लोकेषु दुर्लभम्
किमन्यैः सरितां तोयैः सेवितैस्तु सहस्रशः ।
यदि संसेव्यते तोयं रेवायाः पापनाशनम् ॥ १३ ॥
मेकलाजलसंसेवी मुक्तिमाप्नोति शाश्वतीम् ॥ १४ ॥
यथा यथा भजेन्मर्त्यो यद्यदिच्छति तीर्थगः ।
तत्तदाप्नोति नियतं श्रद्धयाऽश्रद्धयापि च ॥ १५ ॥
इदं ब्रह्मा हरिरिदमिदं साक्षात्परो हरः । इदं ब्रह्म निराकारं कैवल्यं नर्मदाजलम्
तावद्गर्जन्ति तीर्थानि नद्यो ह्यघफलप्रदाः । यावन्न स्मर्यते रेवा सेवा हेवा कलौ नरै
ध्रुवं लोके हितार्थाय शिवेन स्वशरीरतः । शक्तिः कापि सरिद्रूपा रेवेयमवतारित
तावद्गर्जन्ति यज्ञाश्च वनक्षेत्रादयो भृशम् । यावन्न नर्मदानाम कीर्तनं क्रियते कलौ
गरिमा गण्यते तावत्तपोदानव्रतादिषु । नरैर्वा प्राप्यते यावद्धुविभर्गभवा धुनी
ये वसन्त्युत्तरे कूले रुद्रस्यानुचरा हि ते ।
वसन्ति याम्यतीरे ये लोकं ते यान्ति वैष्णवम् ॥ २१ ॥
धन्यास्ते देशवर्यास्ते येषु देशेषु नर्मदा । नरकान्तकरी शश्वत्संश्रिता शर्वनिर्मित
कृतपुण्याश्च ते लोकाः शोकाय न भवन्ति ते ।

ये पिबन्ति जलं पुण्यं पार्वतीपतिसिन्धुजम् ॥ २३ ॥
इदं पवित्रमतुलं रेवायाश्चरितं द्विजाः । शृणोति यःकीर्तयते मुच्यते सर्वपातकैः
यत्फलंसर्ववेदैश्च सषडङ्गपदक्रमैः । श्रुतैश्च पठितैस्तस्मात्फलमष्टगुणं भवेत् ॥ २५
सत्रयाजी फलं यच्च लभतेद्वादशाब्दिकम् । श्रुत्वासकृच्चरेवायाश्चरितंतत्फलंलभेत्
सर्वतीर्थावगाहाच्च यत्फलं सागरादिषु ।
सकृच्छ्रुत्वा च माहात्म्यं रेवायास्तत्फलं लभेत् ॥ २७ ॥
एतद्धर्म्यमुपाख्यानं सर्वशास्त्रेष्वनुत्तमम् । देशे वा मण्डले वापि नगरे ग्राममध्यतः
गृहे वा तिष्ठते यस्य लिखितं सार्ववर्णिकम् ।
स ब्रह्मा स शिवः साक्षात्स च देवो जनार्दनः ॥ २६ ॥
धर्मार्थकाममोक्षाणां मार्गोऽयं देवसेवितः ।
गुरूणां च गुरुः शास्त्रं परमं सिद्धिकारणम् ॥ ३० ॥
यश्चेदंशृणुयान्नित्यंपुराणंदेवभाषितम् । ब्राह्मणोवेदवान्भूयात्क्षत्रियोविजयीभवेत्
धनाढ्यो जायते वैश्यः शूद्रो:वै धर्मभाग्भवेत् ॥ ३२ ॥
सौभाग्यसन्तति नारीं श्रुत्वैतत्समवाप्नुयात् ।
श्रियं सौख्यं स्वर्गवासं जन्म चैवोत्तमे कुले ॥ ३३ ॥
रसभेदी कृतघ्नश्च स्वामिध्रुङ् मित्रवञ्चकः । गोघ्नश्च गरदश्चैव कन्याविक्रयकारकः
ब्रह्मघ्नश्चसुरापी चस्तेयी च गुरुतल्पगः । नर्मदाचरितं शृण्वंस्तामब्दं योऽभिषेवते
सर्वपापविनिर्मुक्तो जायते नात्र संशयः । पाकभेदी वृथापाकी देवब्राह्मणनिन्दकः
परीवादीगुरोःपित्रोः साधूनां नृपतेस्तदा ।
तेऽपि श्रुत्वा च पापेभ्यो मुच्यन्ते नाऽत्र संशयः ॥ ३७ ॥
ये पुनर्भावितात्मानः शास्त्रं शृण्वन्ति नित्यशः ।
पूजयन्ति च तच्छास्त्रं नार्मदं वस्त्रभूषणैः ३८ ॥
पुष्पैःफलैश्चन्दनाद्यैर्भोजनैर्विविधैरपि । शास्त्रेऽस्मिन्पूजितेदेवा पूजितागुरवस्तथा
इहलोकेपरेचैव नात्रकार्या विचारणा । तस्मात्सर्वप्रयत्नेन गन्धवस्त्रादिभूषणैः ॥

पूजयेत्परया भक्त्या वाचकं शास्त्रमेव च । वेदपाठैश्च यत्पुण्यमग्निहोत्रैश्चपालितैः
तत्फलं समवाप्नोति नर्मदाचरिते शुभे । कुरुक्षेत्रे च यत्पुण्यं प्रभासे पुष्करे तथा
रुद्रावर्ते गयायां च वाराणस्यां विशेषतः । गङ्गाद्वारे प्रयागेच गङ्गासागरसङ्गमे
एवमादिषु तीर्थेषु यत्पुण्यंजायते नृणाम् । नर्मदाचरितंश्रुत्वातत्पुण्यंसकलंलभेत्

आदिमध्यावसानेषु नर्मदाचरितं शुभम् ।
यः श्रृणोति नरो भक्त्या श्रृणुध्वं तत्फलं महत् ॥ ४५ ॥

समाप्य शिवसंस्थानं देवकन्यासमावृतः । रुद्रस्यानुचरोभूत्वा शिवेनसहमोदते
धर्माख्यानमिदंपुण्यं सर्वाख्यानेष्वनुत्तमम् । गृहेऽपिपठ्यतेयस्यचतुर्वर्णस्यसत्तमाः
धन्यं तस्यगृहेमन्ये गृहस्थंचापि तत्कुलम् । पुस्तकंपूजयेद्यस्तु नर्मदाचरितस्य तु
नर्मदा पूजिता तेन भगवांश्च महेश्वरः । वाचके पूजितेतद्वद्देवाश्चऋषयोऽर्चिताः ॥
लेखयित्वा च सकलं रेवाचरितमुत्तमम् । भूषणं सर्वशास्त्राणांयोददातिद्विजन्मने
नर्मदा सर्वतीर्थेषु स्नानदानेन यत्फलम् । तत्फलंसमवाप्नोति सनरोनाऽत्र संशयः
एतत्पुराणं रुद्रोक्तं महापुण्यफलप्रदम् । स्वर्गदं पुत्रदं धन्यं यशस्यं कीर्त्तिवर्धनम्

धर्म्यमायुष्यमतुलं दुःखदुःस्वप्ननाशनम् ।
पठतां श्रृण्वतां चापि सर्वकामार्थसिद्धिदम् ॥ ५३ ॥
यत्प्रदत्तमिदं पुण्यं पुराणं वाच्यते द्विजैः ।
शिवलोके स्थितिस्तस्य पुराणाक्षरवत्सरी ॥ ५४ ॥

इति निगदितमेतन्नर्मदायाश्चरित्रं पवनगदितग्रय्यंशर्ववक्त्रादवाप्य ।
त्रिभुवनजनवन्द्यं त्वेतदादौ मुनीनां कुलपतिपुरतस्तत्सूतमुख्येन साधु ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे रेवाखण्डसमाप्तिवर्णनंनामद्वात्रिंशदधिकद्विशततमोऽध्यायः ॥

---

॥ श्रीगणेशायनमः ॥

# ॐ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः

## सत्यनारायणविप्रसम्वादवर्णनम्

ऋषय ऊचुः

व्रतेन तपसा वाऽपि प्राप्यते वाञ्छितं फलम् ।
सर्वं तच्छ्रोतुमिच्छामि कथयस्व महामुने !॥ १ ॥

श्रीसूत उवाच

नारदेनैवमुक्तःस भगवान् कमलापतिः । सुरर्षयेयथाप्राहतच्छृणुध्वं समाहिताः ॥
एकदा नारदोयोगीपरानुग्रहकाम्यया । पर्यटन् विविधाँल्लोकान्मर्त्यलोकमुपागतः
तत्र दृष्ट्वा जनाः सर्व्वे नानादुःखसमन्विताः ।
नानायोनिसमुत्पन्नाः क्लिश्यन्ते पापकर्मभिः ॥ ४ ॥
केनोपायेनचैतेषांदुःखनाशोभवेद्ध्रुवम् । इतिसञ्चिन्त्यमनसाविष्णुलोकंगतस्तदा
तत्रनारायणंदेवं शुक्लवर्णंचतुर्भुजम् । शङ्खचक्रगदापद्मवनमालाविभूषितम् ॥ ६ ॥
दृष्ट्वा तं देवदेवेशं वक्तुं समुपचक्रमे ।

नारद उवाच

नमस्ते वाङ्मनोऽतीतरूपायाऽनन्तशक्तये ।
आदिमध्यान्तहीनाय निर्गुणाय गुणात्मने ॥ ७ ॥

---

* मोहमयीस्थ श्रीवेङ्कटेश्वरमुद्रणालयप्रकाशितेऽवन्तीखण्डेइतः पूर्वं रेवाखण्ड समाप्तिर्दृश्यते । वङ्गवासीमुद्रणालयप्रकाशितेइतोऽग्रेसत्यनारायणव्रत-कथात्मकः पाठोऽधिकः उपलभ्यते स एवाऽधुना विदुषाम्मुदेप्रस्तूयत इति सम्पादकयोः ।

सर्वेषामादिभूतायभक्तानामार्त्तिनाशिने । श्रुत्वास्तोत्रंततोविष्णुर्नारदंप्रत्यभाषत

श्रीभगवानुवाच

किमर्थमागतोऽसित्वं किन्तेमनसिवर्त्तते । कथयस्वमहाभाग!तत्सर्वंकथयामि ते

नारद उवाच

मर्त्त्यलोके जनाःसर्वे नानाक्लेशसमन्विताः ।
नानायोनिसमुत्पन्नाः पच्यन्ते पापकर्मभिः ॥ १० ॥

तत्सर्वं शमयेन्नाथ! लघूपायेन तद्वद । श्रोतुमिच्छामितत्सर्वंकृपाऽस्तियदिते मयि

श्रीभगवानुवाच

साधुपृष्टंत्वयावत्स!लोकानुग्रहकाम्यया ।यत्कृत्वामुच्यतेमोहात्तच्छृणुष्ववदामिते

व्रतमस्ति महापुण्यं स्वर्गे भुवि सुदुर्लभम् ।
तव स्नेहान्मया विप्र! प्रकाशः क्रियतेऽधुना ॥ १३ ॥
सत्यनारायणस्यैतद् व्रतं सम्यग् विधानतः ।
कृत्वा सम्यक् सुखं भुक्त्वा परे मोक्षमवाप्नुयात् ॥ १४ ॥

तच्छ्रुत्वा भगवद्वाक्यं नारदःपुनरब्रवीत् । किं फलंकिंविधानञ्चकृतंवाकेनतद्व्रतम्

तत्सर्वं विस्तराद् ब्रूहि कदा कार्यं व्रतं हि तत् ॥ १५ ॥

श्रीभगवानुवाच

दुःखशोकादिशमनं धनधान्यविवर्द्धनम् । सौभाग्यसन्ततिकरं सर्वत्र विजयप्रदम्

यस्मिन् कस्मिन्दिने मर्त्त्यो भक्तिश्रद्धासमन्वितः ।
सत्यनारायणं देवं यजेत्तुष्टो निशामुखे ॥ १७ ॥

बान्धवैर्ब्राह्मणैश्चैव सहितोधर्मतत्परः । नैवेद्यं भक्तितोदद्यात्प्रसादंभक्ष्यमुत्तमम्

रम्भाफलं घृतं क्षीरं गोधूमस्य च चूर्णकम् ।
अभावेशालिचूर्णम्वा शर्कराम्वा गुडन्तथा ॥ १६ ॥
प्रसादं सर्वभक्ष्याणि एकीकृत्य निवेदयेत् ।
विप्राय दक्षिणां दद्यात् कथां श्रुत्वा जनैः सह ॥ २० ॥

ततश्चबन्धुभिः सार्द्धं विप्रेभ्यः प्रतिपादयन् ।
प्रसादं भक्षयेद् भक्त्या नृत्यगीतादिकञ्चरेत् ॥ २१ ॥
ततः स्तुत्वा गृहं गच्छेत् सत्यनारायणं स्मरन् ।
एवं कृते मनुष्याणां वाञ्छासिद्धिर्भवेद् ध्रुवम् ॥ २२ ॥
विशेषतः कलियुगे नान्योपायोऽस्ति भूतले ।
कथामस्य प्रवक्ष्यामि कृतकृत्यो भवेद् द्विज !॥ २३ ॥
कश्चित् काशीपुरे ग्रामे आसीद्विप्रश्च निर्द्धनः ।
क्षुत्तृष्णाव्याकुलो भूत्वा सततं भ्रमते महीम् ॥ २४ ॥
दुःखितं ब्राह्मणं दृष्ट्वा भगवान् ब्राह्मणप्रियः । वृद्धब्राह्मणरूपेणपप्रच्छद्विजमादरात्
किमर्थं भ्रमसे विप्र ! महीं कृत्स्नां सुदुःखितः ।
तत्सर्वं श्रोतुमिच्छामि कथ्यतां यदि रोचते ॥ २६ ॥

ब्राह्मण उवाच

ब्राह्मणोऽतिदरिद्रोऽहं भिक्षार्थं भ्रमणं मम ।
उपायं यदि जानासि कृपया कथय प्रभो ! ॥ २७ ॥

वृद्धब्राह्मण उवाच

सत्यनारायणोविष्णुर्वाञ्छितार्थफलप्रदः । तस्यत्वंद्विजशार्दूल!कुरुष्वव्रतमुत्तमम्
यत्कृत्वा सर्व्वदुखेभ्यो मुक्तो भवति मानवः ॥ २८ ॥

श्रीभगवानुवाच

विधानञ्च व्रतस्याऽस्य विप्रायाऽऽभाष्य यत्नतः ।
सत्यनारायणो वृद्धस्तत्रैवाऽन्तरधीयत ॥ २९ ॥
ततोऽसौमनसाविप्रश्चिन्तयामासईश्वरम् । व्रतंनारायणेनोक्तंविदित्वामन्दिरंययौ
ततोऽहं तत्करिष्यामि व्रतं मनसि चिन्तितम् ।
इति निश्चित्य विप्रोऽसौ रात्रौ निद्रां न लब्धवान् ॥ ३१ ॥
ततःप्रातःसमुत्थायसत्यनारायणव्रतम् । करिष्येऽहञ्चसङ्कल्प्यसिद्धार्थमगमद्द्विजः

तस्मिन्नेवदिनेविप्रः प्रचुरं द्रव्यमाप्तवान् । तेनैवबन्धुभिःसार्द्धंसत्यस्यव्रतमाचरन्
सर्व्वदुःखविनिर्मुक्तःसर्वसम्पत्समन्वितः । बभूव सद्विजश्रेष्ठोव्रतस्याऽस्यप्रसादतः
ततः प्रभृति कालञ्च मासि मासि व्रतं कृतम् ॥ ३५ ॥
एवं नारायणादेतद्व्रतं ज्ञात्वाद्विजोत्तमः । सर्व्वपापविनिर्मुक्तोदुर्लभंमोक्षमाप्तवान्
व्रतमेतद्यदाविप्र! पृथिव्यां सञ्चरिष्यति । तदैव सर्वदुखंहिमानवानां विनश्यति

सूत उवाच

एवंनारायणेनोक्तं नारदाय महात्मने । मयाऽपिकथितंविप्राःकिमन्यत्कथयामिवः
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
सत्यनारायणविप्रसम्वादोनाम त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

---

## चतुस्त्रिंशदधिकद्विशततमोऽध्यायः

### विप्रकाष्ठकेतुसम्वादवर्णनम्

ऋषय ऊचुः

तस्माद्विप्राद्व्रतं केन पृथिव्यां चरितं मुने ! ।
तत्सर्वं श्रोतुमिच्छामः श्रद्धाऽस्माकं प्रजायते ॥

सूत उवाच

श्रृणुध्वं मुनयः सर्वे तस्माद्येनकृतं भुवि । एकदा स द्विजवरोयथाविभवविस्तरैः
बन्धुभिः स्वजनैः सार्द्धं व्रतं कर्त्तुं समुद्यतः ।
एतस्मिन्नन्तरे काले काष्ठकेतुः ( क्रेता ) समागतः ॥ ३ ॥
बहिः काष्ठं च संस्थाप्य विप्रस्य मन्दिरं ययौ ।
तृष्णया पीडितो भूत्वा विप्रं दृष्ट्वा तथाविधम् ॥ ४ ॥
प्रणिपत्य द्विजं प्राह किमिदं क्रियते त्वया । कृतेकिंफलमाप्नोतिविस्तराद्वदमेप्रभो

विप्र उवाच

सत्यनारायणस्येदं व्रतं सर्वेप्सितप्रदम् । दुःखदारिद्र्यशमनं पुत्रपौत्रविवर्द्धनम् ॥
तस्यप्रसादान्मेसर्वं धनधान्यादिकं महत् । ततस्तद्वचनंश्रुत्वाकाष्ठहर्त्ताऽतिहर्षितः
पपौ जलंप्रसादंच भुक्त्वातन्नगरं ययौ । सत्यनारायणंदेवं चिन्तयन्स्थिरमानसः
काष्ठं विक्रीयनगरे प्राप्स्यामिचाद्ययद्धनम् । तेनैव सत्यदेवस्यकरिष्ये व्रतमुत्तमम्
इतिसञ्चिन्त्यमनसा काष्ठं कृत्वातु मस्तके । जगामनगरंरम्यंधनिनांयत्रसंस्थितिः
तद्दिने काष्ठमूल्यं च द्विगुणंप्राप्तवानसौ । ततः प्रसन्नहृदयः सुपक्वं कदलीफलम्
शर्करां घृतदुग्धं च गोधूमस्य च चूर्णकम् । प्रत्येकं तु प्रसादंच गृहीत्वास्वपुरंययौ
ततोबन्धून् समाहूयचकारविधिनाव्रतम् । तद्व्रतस्यप्रसादेनधनपुत्रान्वितोऽभवत्
इहलोकेसुखंभुक्त्वाचान्तेसत्यपुरं ययौ । पुनरन्यत्प्रवक्ष्यामिश्रृणुध्वं मुनिपुङ्गवाः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेसत्यनारायणव्रतकथायांविप्रकाष्ठकेतुसम्वादोनाम
चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ १३४ ॥

——

# पञ्चत्रिंशदधिकद्विशततमोऽध्यायः

## नानाख्यानैःसहवणिक्साधुमोक्षवर्णनम्

सूत उवाच

आसीदुल्कामुखोनामनृपतिर्वलिनांवरः । जितेन्द्रियःसत्यवादीययौदेवालयम्प्रति
दिने दिने धनं दत्त्वाद्विजान्सन्तोषयत्सुधीः ॥ २ ॥
तस्य भार्या प्रमुग्धा च सरोजवदना सती ।
भद्रशीला व्रतं सत्यं सिन्धुतीरेऽकरोन्मुने !॥ ३ ॥

एतस्मिन्नेवसमये साधुरेकः समागतः। वाणिज्यार्थंबहुविधैरत्नाद्यैः परिपूरिताम्
नावं संस्थाप्यतत्तीरे जगाम तत्तटम्प्रति। दृष्ट्वातत्रव्रतंसम्यक्पप्रच्छविनयान्वितः

साधुरुवाच

किमिदं क्रियते राजन्! भक्तियुक्तेन चेतसा।
प्रकाशं कुरु तत्सर्वं श्रोतुमिच्छामि साम्प्रतम् ॥ ६ ॥

राजोवाच

पूजनं क्रियते साधो! विष्णोरतुलतेजसः। व्रतञ्च स्वजनैःसार्द्धं पूजादिप्राप्तयेमया
प्रत्युवाच ततोनत्वाराजानंसादरंवचः। साङ्गंकथयमेराजन्! व्रतमेतत्करोम्यहम्

ममाऽपि सन्ततिर्नास्ति एतस्माद्भविता ध्रुवम्।
ततो निवृत्त्य वाणिज्यात्सानन्दं गृहमाययौ ॥ ९ ॥
कियद्दिने तस्यभार्याऽभवद्गर्भवतीसती।
गर्भयुक्ताऽऽनन्दचित्ताऽभवद्धर्मपरायणा ॥ १० ॥
पूर्णे गर्भे ततो जाता बालिकाचातिसुन्दरी
दिने दिने वर्धमाना शुक्लपक्षे यथा शशी ॥ ११ ॥
ततोवणिक्सुतायाश्च जातकादीन्समाप्य च।
नाम्ना कलावतीचेति तन्नामकरणं कृतम् ॥ १२ ॥

ततो लीलावतीप्राह स्वामिनं मधुरंवचः। न करोषिकिमर्थंत्वापुरायच्चप्रतिश्रुतम्

साधुरुवाच

विवाहसमयेऽप्यस्याः करिष्यामि व्रतं प्रिये !।
इतिःभार्यां समाश्वास्य जगाम तत्तटम्प्रति ॥ १४ ॥

ततःकलावतीकन्यावर्द्धिता पितृवेश्मनि। दृष्ट्वाकन्यांततःसाधुर्नगरे बन्धुभिः सह
मन्त्रयित्वाद्रुतंदूतं प्रेषयामासधर्मवित। विवाहार्थंच कन्यायावरंश्रेष्ठं विचारयन्
तेनाऽऽज्ञप्तस्ततस्सोऽसौकाञ्चनंनगरंययौतस्मादेकंवणिक्पुत्रंसमादायाऽऽगतोहिसः
दृष्ट्वा तुसुन्दरंबालंवणिक्पुत्रंगुणान्वितम्। ज्ञातिभिर्बन्धुभिःसार्द्धंपरितुष्टेनचेतसा

दत्तवान् साधुपुत्राय कन्यां विधिविधानतः।
ततोऽभाग्यवशात्तेन विस्मृतं व्रतमुत्तमम्।
विवाहसमयेऽप्यस्यास्तेन रुष्टोऽभवद्विभुः ॥ १६ ॥
ततःकालेनकियतानिजधर्मविशारदः। वाणिज्यार्थंगतःशीघ्रंजामात्रासहितोवणिक्
रत्नसारपुरेरम्ये गत्वा सिन्धुसमीपतः। वाणिज्यंकुरुते साधुर्जामात्राश्रीमतासह
पुरीं निर्माय नगरे चन्द्रकेतुनृपस्य च ॥ २१ ॥
एतस्मिन्नेवकालेतु सत्यनारायणः प्रभुः। भ्रष्टप्रतिज्ञमालोक्यशापंतस्मैप्रदत्तवान्
आद्यारभ्यमियत्कालं दुःखस्तेऽत्र भविष्यति ॥ २३ ॥
तस्मिन्नेवदिनेराज्ञो धनमादायतस्करः। तेनैववर्त्मनाऽऽयातः पृष्ठदेशं विलोकयम्
स पश्चाद्धावतोदूतान् दृष्ट्वाभीतेनचेतसा। धनंसंस्थाप्यतत्रैव गतः शीघ्रमलक्षितः
ततो दूताः समायाता यत्राऽऽस्तेसज्जनो वणिक्।
दृष्ट्वा भूपधनं तत्रबद्ध्वा दूतावणिक् सुतौ। हर्षयुक्ताधावमानाःऊचुर्नृपसमीपतः
तस्करौ द्वौ समानीतौ विलोक्याऽऽज्ञापय प्रभो!।
तेनाऽऽज्ञप्तैस्ततः शीघ्रं दृढं बद्ध्वा तु तावुभौ ॥ २७ ॥
स्थापितोद्वौमहादुर्गे कारागारेऽविचारतः। माययासत्यदेवस्यनश्रुतंच तयोर्वचः
अतस्तयोर्धनं यच्चगृहीतंचन्द्रकेतुना। तच्छापाच्चतयोर्गेहेभार्याऽपिदुःखिताऽभवत्
चौरेणापहृतंसर्वंगेहेयच्चस्थितंधनम्।आधिव्याधिसमायुक्ताक्षुत्पिपासाप्रपीडिता
अन्नचिन्तापराभूत्वाभ्रमते च गृहे गृहे। ततः कलावतीकन्या बभ्राम प्रतिवासरम्
एकदा सा तु भवनात् क्षुधार्त्ता द्विजमन्दिरम्।
गत्वाऽपश्यद्व्रतं तत्र सत्यनारायणस्य या ॥ ३२ ॥
उपविश्यकथांश्रुत्वावरंसम्प्रार्थ्यवाञ्छितम्।प्रसादभक्षणंकृत्वाययौरात्रौगृहम्प्रति
ततो लीलावतीकन्यां भर्त्सयामासताम्भृशम।
पुत्रि! रात्रौ स्थिता कुत्र किं ते मनसिवर्तते ॥ ३४ ॥
द्विजालये व्रतं मातर्दृष्टं वाञ्छितसिद्धिदम्।

तच्छ्रुत्वा कन्यकावाक्यं व्रतं कर्त्तुं समुद्यता ॥
ससुता सा वणिग्भार्या सत्यनारायणस्य च ॥ ३५ ॥
व्रतं चक्रे च वै साध्वी बन्धुभिः स्वजनैः सह ।
भर्तृजामातरौ क्षिप्रमागच्छेतां ममाऽऽश्रमम् ॥ ३६ ॥
इतिदेवं वरं याचे सत्यदेवं पुनः पुनः । अपराधं तुभर्त्तुर्मे जामातुः क्षन्तुमर्हसि ॥
व्रतेनतस्यास्तुष्टोऽसौसत्यनारायणःप्रभुः । दर्शयामासस्वप्नंहिचन्द्रकेतुंनृपोत्तमम्
बन्दी तौ मोचय प्रातर्वणिजौ नृपसत्तम! । देयंधनंचतत्सर्वंविधिनाद्विगुणीकृतम्
नो चेत्त्वां नाशयिष्यामि सराज्यधनपुत्रकम् ।
एवमाभाष्य राजानं ध्यानगम्योऽभवत् प्रभुः ॥ ४० ॥
ततःप्रभातसमये राजा च स्वजनैः सह । उपविश्य सभामध्ये प्राह दूतजनम्प्रति
बद्धौ महाजनौ शीघ्रं मोचयध्वं वणिक् सुतौ ॥ ४१ ॥
इति राज्ञो वचः श्रुत्वा मोचयित्वा महाजनौ ।
समानीय नृपस्याऽग्रे प्रोचुस्ते विनयान्विताः ॥ ४२ ॥
आनीतौ द्वौ वणिक् पुत्रौ मुक्तौ निगडबन्धनात् ॥ ४३ ॥
ततो महाजनौनत्वाचन्द्रकेतुं नृपोत्तमम् । स्मृत्वाचपूर्ववृत्तान्तंविस्मयाद्भयविह्वलौ
राजावणिक्सुतौ वीक्ष्य प्रोवाच सादरं वचः ।
दैवात्प्राप्तं महत् कष्टमिदानीं नास्ति तद्भयम् ॥ ४५ ॥
इदानीमेवमुक्तस्त्वं क्षुरकर्मादिकं चर ॥ ४६ ॥
ततो नृपवरः श्रीमान् स्वर्णरत्नविभूषणैः ।
अलङ्कृत्य वणिक् पुत्रौ वचसाऽप्रीणयद् भृशम् ।
पुरानीतं च यद्द्रव्यं द्विगुणीकृत्य दत्तवान् ॥ ४७ ॥
प्रोवाच तौ ततो राजा गच्छ साधो ! निजाश्रमम् ।
राजानं प्रणिपत्याह गन्तव्यं तत्प्रसादतः ॥ ४८ ॥
( अत्रप्रचलितसत्यनारायणपुस्तकेषु चतुर्थोऽध्यायः समाप्तः )

यात्राङ्कृत्वाततःसाधुर्मङ्गलाचारपूर्विकाम् । ब्राह्मणेभ्योधनंदत्त्वासहर्षो नगरं ययौ

किंयद्दूरे गतेसाधौ सत्यनारायणः प्रभुः ।
जिज्ञासां कृतवान् साधो ! किमस्ति तरणौ तव ॥ ५० ॥
ततो महाजनौ मत्तौ हेलया च प्रहस्य च ।
कथं पृच्छसि भो दण्डिन् ! मुद्रां किं लब्धुमिच्छसि ॥
लतापत्रादिकं चैव वर्तते तरणौ मम ॥ ५१ ॥

निष्ठुरं च वचः श्रुत्वासत्यंभवतुतेवचः । एवमुक्त्वागतःशीघ्रं दण्डीतस्यसमीपतः

गते दण्डिनि साधुश्च कृतनित्यक्रियस्तदा ।
उत्थितां ( औकसां ) तरणिं दृष्ट्वा विस्मयं परमं ययौ ॥ ५३ ॥
लतापत्रादिकं दृष्ट्वा मूर्च्छितो न्यपतद् भुवि ।
लब्धसञ्ज्ञो वणिक् पुत्रस्ततश्चिन्तापरोऽभवत् ।
श्वशुरं दुहितुः कान्तो वचनं चेदमब्रवीत् ॥ ५४ ॥

जामातोवाच

किमर्थंकुरुषे शोकं शापादेतच्चदण्डिनः । शक्यते तेन सर्वं हि कर्त्तुं हर्त्तुं न संशयः

अतस्तच्छरणं यामो वाञ्छितार्थो भविष्यति ।
जामातुश्च वचः श्रुत्वा तत्सकाशंगतस्तदा ॥ ५६ ॥
दृष्ट्वा च दण्डिनं भक्त्या नत्वा प्रोवाच सादरम् ।
क्षमस्व चापराधं मे यदुक्तं तव सन्निधौ ॥ ५७ ॥

मया दुरात्मना देव मुग्धोऽहं तवमायया । यदुक्तं तद्वचोनाथ ! दुष्टंमे क्षन्तुमर्हसि
यतः परकृपाः सर्वे क्षमासारा हिसाधवः । पुनः पुनस्तदानत्वारुरोदशोकविह्वलः
तमुवाचततोदण्डीविलपन्तंविलोक्यच । मारोदीःशृणुमद्वाक्यंममपूजापराङ्मुखः
मामवज्ञायदुर्बुद्धे ! लब्धं दुःखंमुहुर्मुहुः । तच्छ्रुत्वाभगवद्वाक्यंस्तुतिंकर्त्तुंसमुद्यतः

साधुरुवाच

त्वन्मयामोहिताःसर्वे ब्रह्माद्यास्त्रिदिवौकसः । नजानन्तिगुणंरूपंतवाश्चर्यमिदंप्रभो

मूढोऽहंत्वांकथंजानेमोहितस्तवमायया । प्रसीदपूजयिष्यामियथाविभवविस्तरैः
पुत्रं वित्तं च मे देहि त्राहि मां शरणागतम् ॥ ६३ ॥
श्रुत्वाभक्तियुतंवाक्यं परितुष्टोजनार्दनः । वरं चवाञ्छितंदत्त्वा ।तत्रैवान्तरधीयत
ततोऽसौनावमारुह्यदृष्ट्वारत्नादिपूरिताम् । कृपयासत्यदेवस्य यत्फलंवाञ्छितं मम
इत्युक्त्वा स्वजनैः सार्धं पूजां कृत्वा यथाविधि ।
हर्षेण महतासाधुः प्रयाणं चाकरोद् द्विजाः ॥ ६६ ॥
नावं संयोज्य वेगेन स्वदेशमगमत्तदा ॥ ६७ ॥
ततोजामातरंप्राहपश्यवत्स! पुरीं मम । दृतं च प्रेषयामास निजवित्तस्य रक्षकम्
ततोऽसौ नगरं गत्वा साधुभार्यां विलोक्य च ।
उवाच वाञ्छितं वाक्यं नत्वा बद्धाञ्जलिस्तदा ॥ ६६ ॥
निकटे नगरस्यैव जामात्रासहितोवणिक् । आगतो बन्धुवर्गैश्चधनैर्बहुविधैस्तथा
श्रुत्वादूतमुखाद्वाक्यं महाहर्षयुतासती । सत्यपूजांततःकृत्वाप्रोवाच तनुजांप्रति
व्रजामि शीघ्रमागच्छ साधुसन्दर्शनाय च ॥ ७१ ॥
इतिमातृवचःश्रुत्वाव्रतंकृत्वासमाप्य च । प्रसादंसम्परित्यज्यगतासा च पतिं प्रति
तेनरुष्टःसत्यदेवो भर्त्तारंतरणीं तथा । संहृत्य च धनैः सार्द्धं जलेतस्मिन्समार्जयत्
ततः कलावती कन्यानालोक्यवणिजंपतिम् । शोकेनमहताततत्ररुदन्तीचापतद्भुवि
दृष्ट्वा तथाविधां कन्यां नदृष्ट्वाततपतिंतरीम् । भयेनमहतासाधुःकिमाश्चर्यमिदंमहत्
विचिन्तयन्तस्ते सर्वे बभूवुस्तरिवाहकाः ॥ ७६ ॥
ततोलीलावतीसाध्वीदृष्ट्वातद्विह्वलासती ।विललापातिदुःखेनभर्त्तारञ्चेदमब्रवीत्
इदानीं नौकयासार्द्धमदृश्योऽभूदलक्षितः । न जानेकेन दैवेन हेलयावाऽपहारितम्
सत्यदेवस्य माहात्म्यं किं ज्ञातुं नहि शक्यते ।
इत्युक्त्वा विललापाऽथ तत्रस्था स्वजनैः सह ।
ततो लीलावती कन्यां क्रोडे कृत्वा रुरोद च ॥ ७६ ॥
ततःकलावतीकन्यानष्टेस्वामिनिदुःखिता । गृहीत्वापादुकां तस्यअनुगन्तुंमनोदधे

कन्यायाश्चरितं दृष्ट्वा सभार्य्यः स्वजनो ( सज्जनो ) वणिक् ।
अतिशोकेन सन्तप्तश्चिन्तयामास धर्म्मवित् ॥ ८१ ॥
हृतोहिसत्यदेवेनजामातासत्यमायया । सत्यपूजांकरिष्यामियथाविभवविस्तरैः
इति सर्वान्समाहूय कथयित्वा मनोरथम् ॥ ८३ ॥
ननाम दण्डवद् भूमौ सत्यदेवं पुनः पुनः ।
ततस्तुष्टः सत्यदेवो गगनाद्वणिजम्प्रति । जगाद वचनञ्चेदं नैवेद्यमवमन्य च ॥
आगता स्वामिनं द्रष्टुमतोऽदृश्योऽभवत्प्रभुः ॥ ८५ ॥
गृहं गत्वा प्रसादञ्च भुक्त्वा चायातु सा पुनः ।
लब्धभर्तृसुखा साधो ! भविष्यति नसंशयः ॥ ८६ ॥
ततः साप्राणदंवाक्यंश्रुत्वागगनमण्डलात् । क्षिप्रंतदागृहंगत्वाप्रसादं प्रतिभुज्यच
अपश्यत्पुनरागत्य पतिं नावं जनैः सह ॥ ८७ ॥
ततःकलावतीतुष्टाजगादपितरम्प्रति । एहि तात! गृहं यामो विलम्बं कुरुषे कथम्
तच्छ्रुत्वा कन्यका वाक्यं सन्तुष्टोऽभूद्वणिक् सुतः ॥ ८९ ॥
पूजनं सत्यदेवस्य कृत्वाविधिविधानतः । धनैर्बन्धुगणैःसार्द्धंजगाम निजमन्दिरम्
पौर्णमास्याञ्च सङ्क्रान्त्यां पूजां कृत्वा यथाविधि ।
इह लोके सुखी भूत्वा चान्ते सत्यपुरं ययौ ॥ ९० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे श्रीसत्यनारायणकथायां वणिक्साधुमोक्षवर्णनंनाम
पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

---

# षट्त्रिंशदधिकद्विशततमोऽध्यायः

## वंशध्वजवृत्तान्तवर्णनम्

सूत उवाच

अथ चान्यत्प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः !।
आसीद्वंशध्वजोराजा प्रजापालनतत्परः । प्रसादंसत्यदेवस्यत्यक्त्वादुःखमवापसः
एकदा स वनं गत्वा हत्वा च विविधान् मृगान् ।
आगत्य वटमूले च दृष्ट्वा सत्यस्य पूजनम् ॥ २ ॥
गोपाः कुर्वन्ति सन्तुष्टा भक्तियुक्ताः सबान्धवाः ।
राजा दृष्ट्वा तु दर्पेण नागत्य न ननाम सः ॥ ३ ॥
ततोगोपगणाःसर्वेप्रसादंनृपसन्निधौ ।संस्थाप्यपुनरागत्यभुक्त्वासर्वेयथेप्सितम्
ततः प्रसादं सन्त्यज्य राजादुःखमवापसः ॥ ५ ॥
तस्यपुत्रशतंनष्टं धनधान्यादिकञ्चयत् । सत्यदेवेन तत्सर्वं नाशितं मम निश्चितम्
अतस्तत्रैवगच्छामियत्रदेवस्य पूजनम् । मनसेतिविनिश्चत्यययौगोपालसन्निधिम्
ततोऽसौ सत्यदेवस्य पूजां गोपगणैःसह ।
भक्तिश्रद्धान्वितो भूत्वा चकार विधिवन्नृपः ॥ ८ ॥
सत्यदेवप्रसादेनधनपुत्रान्वितोऽभवत् । इहलोके सुखीभूत्वा चान्तेविष्णुपुरं ययौ
य इदं कुरुतेसत्यव्रतं परमदुर्लभम् । शृणोति च कथां पुण्यां भुक्तिमुक्तिफलप्रदाम्
धनधान्यादिकंतस्य भवेत्सत्यप्रसादतः । दरिद्रो लभतेवित्तंबद्धो मुच्येतबन्धनात्
भीतोभयात्प्रमुच्येत सत्यमेतन्नसंशयः । ईप्सितञ्चफलंभुक्त्वा चान्तेसत्यपुरं व्रजेत्
इति वः कथितं विप्राः! सत्यनारायणव्रतम् ।
यत्कृत्वा सर्वदुःखेभ्यो मुक्तोभवति मानवः ॥ १३ ॥
विशेषतः कलियुगेसत्यपूजा महाफला । सत्यनारायणं केचित् सत्यदेवंतथा परे

नानारूपधरोभूत्वा सर्व्वेषामीप्सितप्रदः । भविष्यतिकलौसत्यव्रतरूपीसनातनः
य इदं पठतेनित्यंश्रृणोतिमुनिसत्तमाः । तस्यनश्यन्तिपापानि सत्यदेवप्रसादतः ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे-रेवाखण्डे सत्यनारायणकथायांवंशध्वजचरित्रवर्णनंनामषट्त्रिंशदधिक-द्विशततमोऽध्यायः ॥ २३६ ॥

———



---

* 'सत्यइत्येव वा केचित् प्रवदन्ति मनीषिणः ।' इतिपुस्तकान्तरसम्मतोऽधिकः पाठः ।

